

# आह्निकचन्द्रिका ।

## श्रीमत्सायनमन्त्रभाष्यसहिता ।



मूल्यं १ रूप्यकः ।

1-1-6

॥ श्रीः ॥

# आह्निकचन्द्रिका ।

## श्रीमत्सायनमन्त्रभाष्यसहिता ।

( अत्र सर्वसूक्त-मन्त्र-सौर-रुद्राध्याय-रुद्रसूक्त-विष्णुसूक्त-देवीसूक्त-श्रीसूक्त-गणपतिसूक्तानां ससायनभाष्याणां सभाष्यगणेशाथर्वशीर्षस्य च संग्रहः । )

इयं

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा

वासुदेवशर्मणा

संस्कृता ।

( चतुर्थावृत्तिः )

साच

मुम्बय्यां

पाण्डुरङ्ग जावजी

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशिता ।

शकाब्दाः १८४८; सनाब्दाः १९२६.

मूल्यं १ रूप्यकः ।

# प्रस्तावना ।

ॐ नमः श्रीगुरुचरणारविन्दाभ्याम् ।

वेदा हि इष्टानिष्टप्राप्तिपरिहारयोरलौकिकमुपायमुपदिशन्तो जीवजातमखिलमिदमनुगृह्णन्तीति वेदशब्दनिर्वचनादेव ज्ञायते । निर्वचनं चैवं श्रूयते–'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥' इति । न खलु ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमुमर्थं वेदव्यतिरेकेणानुमानसहस्रेणापि तार्किकशिरोमणिरप्यवगन्तुं शक्नोति । प्रामाण्यं चास्य मीमांसकैरित्थं व्यवस्थापितम्–'शब्दो हि स्वतःप्रमाणम् । अप्रामाण्यं चास्य कारणदोषादर्थान्यथात्वज्ञानाद्वा भवति । नचात्र द्वयमप्यस्ति । तथाहि–पुरुषसंबन्धाद्धि दोषाः शब्दे संक्रामन्ति । त्रेधा हि वाक्ये पुरुषानुप्रवेशः । पदपदार्थसंबन्धद्वारेण, वाक्यवाक्यार्थसंबन्धद्वारेण, ग्रन्थस्यैव वा भारतादिवत्पौरुषेयत्वात् । नत्वेतत्त्रयमप्यत्रास्ति पदपदार्थसंबन्धस्य नित्यत्वम् 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इत्यादिसूत्रेण साधितं द्वादशलक्षण्यां भगवता जैमिन्यृषिणा । वाक्यार्थस्य च पदार्थमूलत्वं स्पष्टमेव । अपौरुषेयत्वं च वेदस्य पूर्वपूर्वमप्यध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वात्, अधुनाध्ययनवदित्यनुमानादिना साधितम् । न चार्थान्यथात्वज्ञानमपि । लिङादिश्रुतिर्हि यागादाविष्टसाधनत्वमभिदधाति । न पुनः फलोत्पत्तिकालमपि येन बाधः साक्षादुपलभ्येत । तदेतदौत्पत्तिकसूत्रे भगवाञ्जैमिनिरव्यतिरेकशब्देनोक्तवान् । इत्थं चोभयविधाप्रामाण्यकारणाभावादनपोदितमस्य वेदस्य स्वतःप्राप्तं प्रामाण्यम्' इति । अतिगम्भीरस्यास्यार्थमवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि । अत एवाथर्वणिकास्तेषामपरविद्यात्वमामनन्ति 'द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते' इति । साधनभूतधर्मज्ञानहेतुत्वात्षडङ्गसहितानां कर्मकाण्डानामपरविद्यात्वम् । परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वादुपनिषदां परविद्यात्वम् । वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा । कल्पस्तु आश्वलायनापस्तम्बबौधायनादिसूत्रम् । कल्प्यते समर्थ्यते यागप्रयोगोऽत्र इति व्युत्पत्तेः । तत्र कृत्स्नमन्त्रकाण्डविनियोगेषु संप्रदायपारंपर्यागतक्रमस्यैवादरणीयत्वात्तदरिक्तेषु कर्मविशेषेषु मन्त्रविशेषविनियोगः श्रुतिलिङ्गवाक्यादिप्रमाणान्युपजीव्य दर्शित इति कल्पसूत्रं मन्त्रविनियोगेन क्रत्वनुष्ठानमुपदिश्योपकरोति । व्याकरणमपि प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिर्णयायोपयुज्यते । अर्थावबोधनिरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम् । 'गौः ग्मा' इत्यारभ्य 'वसवः वाजिनः देवपत्न्यो देवपत्न्यः' इत्यन्तो यः पदानां समाम्नायः समाम्नातः तस्य त्रीणि काण्डा-

नि । आद्यं नैघण्टुकं, द्वितीयं नैगमम् , तृतीयं दैवतम् । तद्व्याख्यानं च 'समाम्नायः समाम्नात' इत्यारभ्य 'तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति' इत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे । तदपि निरुक्तमित्युच्यते । एकैकस्य पदस्य संभाविता अवयवार्थास्तत्र निःशेषेणोच्यन्त इति व्युत्पत्तेः । केषांचिन्निर्वचनानां व्याकरणबलेन सिद्धावपि न सर्वेषां सिद्धिरस्ति । अत एव ग्रन्थकार आह—'तदिदं विद्यास्थानं व्याकरणस्य कात्स्र्न्यं स्वार्थसाधकं च' इति । तस्माद्वेदार्थावबोधायोपयुक्तं निरुक्तम् । तथा छन्दोग्रन्थोऽप्युपयुज्यते । छन्दोविशेषाणां तत्र तत्र विहितत्वात् । 'तस्मात्सप्तचतुराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते' इत्यादि । किंच 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्ते वा पात्यते प्रमीयते वा पापीयान् भवति तस्मादेतानि मन्त्रे मन्त्रे विद्यात्' इति श्रूयते । तस्माद्वेदनाय छन्दोग्रन्थ उपयुज्यते । ज्योतिषस्य प्रयोजनं तस्मिन्नेव ग्रन्थेऽभिहितं 'यज्ञलाभार्थसिद्धये' इति । कालविशेषविधयश्चैवं श्रूयन्ते—'वसन्ते ब्राह्मणोऽग्निनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः' इत्यादयः । अतः कालविशेषानवगमयितुं ज्योतिषमुपयुज्यते । षडङ्गवत्पुराणादीनामपि वेदार्थज्ञानोपयोगो याज्ञवल्क्येन स्मर्यते—'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥' 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति ॥' इति । तदेतैरङ्गैः पुराणादिभिश्च समुपबृंहितेन वेदेन बोधितोपायस्त्रिधा—नित्यो नैमित्तिकः काम्यश्च । तत्र नित्यः 'अहरहः संध्यामुपासीत' इत्यादिना विहितः संध्यावन्दनादिः । नैमित्तिकः 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत', 'यस्याहिताग्नेरग्निर्गृहान्दहेत्सोऽग्नये क्षामवतेऽष्टाकपालं पुरोडाशं निर्वपेत्' इत्यादिवाक्यैः वाजपेययाजित्वगृहदाहादिनिमित्तवन्नियोज्यको बृहस्पतिसवक्षामवदिष्ट्यादिः । काम्यस्तु 'सोमेन यजेत' इत्यादिवाक्यविहितो ज्योतिष्टोमादिः । तत्र हि 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्याद्यधिकारविधिना तादृशकामनावन्तं प्रत्येव नियोज्यत्वबोधनात् । एतेषु नित्यनैमित्तिकान्यनुतिष्ठन्प्रक्षीणकल्मषोऽर्थवादिकं ब्रह्मलोकादिफलमाप्नोति, नित्यानामननुष्ठाने च प्रत्यवायी भवतीत्यधिकारिणावश्यमनुष्ठेयानि । तत्राप्यहोरात्रकालसंबन्धमादाय प्रवृत्तानां नित्यनैमित्तिकविधीनां सर्वेषु त्रैवर्णिकेषु प्राप्ततया तज्ज्ञानमावश्यकं सर्वेषां त्रैवर्णिकानाम् । परं मन्दधियः सुधियोऽपि व्यवसायान्तरव्यापृता वेदेभ्योऽङ्गस्मृत्यादिसहकारमात्रेण न ज्ञातुं प्रभवन्तीति प्राचीनतर आह्निकचन्द्रिकानामा संदर्भो मया यथामति परिशोध्य 'यदधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥' इत्यादि बहुतरनिन्दाश्रवणबोधितमन्त्रार्थज्ञानविधुरानुष्ठितकर्मवृत्तिफलजनकत्वाभावपरिजिहीर्षया तत्र तत्र मन्त्रेषु सायनभाष्यं संनिवेश्याधिकारिणामुपायनीकृत इति शम् ।

पणशीकरो वासुदेवशर्मा ।

# आह्निकचन्द्रिकास्थविषयाः ।

# आह्निकचन्द्रिका ।

## सायनमन्त्रभाष्यसहिता ।

### मङ्गलाचरणम् ।

ॐप्रणम्य मातरं गङ्गां शंकरं वनशंकरीम् ।
महादेवाख्यं पितरं श्रौतस्मार्तविशारदम् ॥ १ ॥
दिवाकरेण सुधिया सारमुद्धृत्य शास्त्रतः ।
शिष्टानां तन्यते तुष्ट्यै संक्षेपाह्निकचन्द्रिका ॥ २ ॥

### प्रातःपठनीया मन्त्राः ।

अथ प्रबोधः । मनुः । ब्राह्मे मुहूर्ते बुध्येत धर्मार्थावनुचिन्तयेत् । कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥ वेदतत्त्वार्थ ईश्वरः । ब्राह्मो मुहूर्तो रात्रेरुपान्त्यो मुहूर्तः । रात्रेस्तु पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते । इति प्रयोगपारिजातोक्तेः । तदोत्थाय[1] मातृपितृगुर्विष्टदेवतादीन्मनसा नत्वा तदहःकर्तव्यं विचार्य पठेत् । ते च मन्त्राः ऋग्विधाने–प्रातरग्निं प्रातरिन्द्रं हवामहे० । सूक्तं ऋक् ७ ॥ प्रातर्यावाणा प्रथमा यजध्वं० । सूक्तं ऋक् ५ ॥ प्रातारथो नवो योजि० । सूक्तं ऋक् ९ ॥ इत्यादि सूक्तानि । तथा । पुनः पुनर्जायमाना पुराणी० इत्याद्यृङ्मन्त्रांश्च पठेत् । ( ते च मन्त्राः )–प्रातरग्निमिति सप्तर्चस्य वसिष्ठो भगस्त्रिष्टुप् । आद्याया लिङ्गोक्ता देवता । अन्त्याया उषा आद्या जगती । ( ५।४।८ ) ॐ प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणा प्रातरश्विना ।

---

(प्रातरग्निं५।४।८)प्रातरुषःकाले अग्निं देवं हवामहे वयं स्तोतार आह्वयाम । तथा प्रातःकाले इन्द्रं हवामहे । तथा मित्रावरुणौ अहोरात्राभिमानिनौ देवौ प्रातर्वयं

---

१ 'ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् । स्मरणं वासुदेवस्य कुर्यात्कलिमलापहम् ॥' इत्यन्यत्र.

प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रं हुवेम ॥ १ ॥ प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता । आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥ २ ॥ भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः । भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम ॥ ३ ॥ उतेदानीं भगवन्तः स्यामोत प्रपित्व उत मध्ये अह्नाँ । उतोदिता मघवन्त्सूर्यस्य वयं देवानां सुमतौ स्याम ॥ ४ ॥ भग एव भगवाँअस्तु देवास्तेन वयं भगवन्तः स्याम । तं त्वा भग सर्व इज्जोहवीति स नो भग पुर एता भवेह ॥ ५ ॥ समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय । अर्वाचीनं वसुविदं भगं

---

हवामहे । तथा अश्विनौ देवानां भिषजौ प्रातर्वयं हवामहे । तथा प्रातर्भगं देवं पूषणं देवं ब्रह्मणस्पतिं मन्त्राभिमानिनमेतत्संज्ञकं च आह्वयामः । तथा प्रातः सोममेतत्संज्ञकं देवं उतापि च रुद्रं देवं च हुवेम आह्वयामः ॥१॥—यो भगो देवः विधर्ता विश्वस्य जगतो धारकः जितं जयशीलं उग्रमुद्गूर्णं अदितेः पुत्रं भगं देवं प्रातःकाल एव वयं हुवेम आह्वयामः । आध्रश्चिद्दरिद्रोऽपि स्तोता यं भगं देवं मन्यमानः स्तुवन् भगं भजनीयं धनं भक्षि भज विभज मह्यं देहीत्याह ब्रवीति । तुरश्चित् । तुरतिर्गतिकर्मा । प्राप्तधनोऽपि राजाचित् समर्थोऽपि जनः यं भगं देवं भजनीयं मह्यं भक्षि देहीत्याह तं भगं प्रातरेव वयं हुवेमेति संबन्धः ॥ २ ॥—हे भग देव, त्वं प्रणेतः प्रकर्षेण नेतासि तादृश प्रणेतः हे भग, त्वं सत्यराधः सत्यधनोऽसि । तादृश सत्यराधः हे भग, त्वं नोऽस्मभ्यं ददत्कामान्प्रयच्छन्निमामस्मदीयां धियं स्तुतिमुदव रक्ष सफलयुक्तां कुरु । हे भग, त्वं गोभिरश्वैश्च नोऽस्मान्प्रजनय प्रोद्भूतान्कुरु । हे भग, त्वत्प्रसादाद्वयं नृभिर्नेतृभिः पुत्रादिभिर्नृवन्तो मनुष्यवन्तः प्र स्याम प्रभवेम ॥ ३ ॥—उतापि च इदानीं वयं भगवन्तः स्याम । हे भग, भगेन त्वया स्वामिना युक्ता भवेम । यद्वा भगवन्तो धनवन्तः स्याम । उतापि च प्रपित्वे अह्नां प्राप्ते पूर्वाह्णे भगवन्तः स्याम । उतापि च अह्नां दिवसानां मध्ये मध्याह्ने भगवन्तः स्याम । उतापि च हे मघवन्धनवन्, भग देव, सूर्यस्य सर्वस्य प्रेरकस्य उदितावुदये सति वयं त्वदनुग्रहाद्देवानामिन्द्रादीनां सुमतावनुग्रहबुद्धौ स्याम भवेम ॥ ४ ॥—हे देवाः, भगो देव एव भगवान्धनवानस्तु । तेन भगेन देवेन वा वयं भगवन्तः स्याम धनवन्तो भवेम । हे भग, तं प्रसिद्धं त्वा त्वां सर्वइत्सर्व एव जनः जोहवीति भृशं पुनःपुनर्वा आह्वयति । हे भग देव, स त्वं इहास्मिन्यज्ञे नोऽस्माकं पुरएता पुरोगन्ता भव ॥ ५ ॥—शुचये

नो रथमिवाश्वा वाजिन आ वहन्तु ॥ ६ ॥ अश्वावतीर्गोमती- र्न उषासो वीरवतीः सदमुच्छन्तु भद्राः । घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥ प्रातर्यावाणेति पञ्चर्चस्य सूक्तस्यात्रिरश्विनौ त्रिष्टुप् ॥ ( ४।४।१८ ) ॐ प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः । प्रातर्हि यज्ञमश्विना दधाते प्रशंसन्ति कवयः पूर्वभाजः ॥ १ ॥ प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया ऽअजुष्टम् । उतान्यो ऽअस्मद्यजते विचावः पूर्वः पूर्वो यज- मानो वनीयान् ॥ २ ॥ हिरण्यत्वङ्मधुवर्णो घृतस्नुः पृक्षो वहन्ना रथो वर्तते वाम् । मनोजवा ऽअश्विना वातरंहा

---

शुद्धाय गमनयोग्याय पदाय स्थानाय दधिक्रावेव यथा तथा अश्वः उषसो उषो- देवता अध्वरायास्मदीयाय यागाय संनमन्त संगच्छन्तु । वाजिनो वेगवन्तोऽश्वाः रथमिव रथं यथा तथा उषसोऽर्वाचीनमस्मदभिमुखं वसुविदं धनस्य प्रापकं भगं देवं नोऽस्मान्प्रति आवहन्त्वानयन्तु ॥ ६ ॥—भद्रा भजनीयाः उषस उषोदेवताः अश्वावतीरश्ववत्योऽश्वहिताः सत्यो गोमतीर्गोमत्यश्च वीरवतीर्वीरव- त्यः पुत्रादिजनोपेताश्च भवन्त्यो नोऽस्मभ्यं सदं सर्वदा उच्छन्तु व्युच्छन्तु नैशं तमो विवासयन्तु । कीदृश्यः । घृतमुदकं दुहानाः सिंचन्त्यो विश्वतः सर्वैर्गुणैः प्रपीताः प्रवृद्धाः एवंभूता उषसस्तम उच्छन्तु । अस्मिन्सूक्ते प्रतिपादिताः हे सर्वे देवाः, यूयं नोऽस्मान्सदा सर्वदा स्वस्तिभिः कल्याणैः पात पालयत ॥ ७ ॥

(प्रातर्यावा ४।४।१८) हे मदीया ऋत्विजः प्रातर्यावाणा प्रातरेव यज्ञगन्तारौ प्रथमा अत एवेतरेभ्यो देवेभ्यः पूर्वभाविनौ प्रकृष्टतमौ वाश्विनौ यजध्वं । किमर्थं प्रथमया- गनियोग उच्यते । गृध्रादभिकाङ्क्षितः अररुषः अदात् रक्षःप्रभृतेः पुरा पूर्वं पिबातः पिबताम् । अनागतौ कथं यष्टुं शक्यावित्यत आह । अश्विनाश्विनौ प्रातर्हि यज्ञं दधाते धारयतः संभजतः पूर्वभाजः पूर्वकालीनाः कवयोऽनूचाना ऋषयः प्रातरेवैतौ प्रशंसन्ति । ये वानूचानास्ते कवय इति हि निगमः ॥१॥—हे मदीयाः पुरुषाः, अश्विना अश्विनौ प्रातः प्रातरेव यजध्वं पूजयध्वं स्तुध्वं हिनोत प्रहिणुत हवींषि । सायं सायंकाले हविर्देवयाः देवगामि नास्ति न विद्यते । देवा न स्वीकुर्वन्तीत्यर्थः । अजुष्टमसेव्यं तद्भवति । 'पूर्वाह्णो वै देवानाम्' इति हि श्रुतिः । उत अस्मदस्मत्तोऽ- न्यः कोऽपि यजते यजेत सोमेन विचावः वितर्पयेच्च हविषा । अतोऽस्मास्वन्येषु च मध्ये पूर्वः पूर्वो यजमानः यः पूर्वः पूर्वो यष्टा भवति स वनीयान् देवानां संभज- नीयः संभाव्यो भवति ॥ २ ॥—हिरण्यत्वगित्येषा आश्विने पशौ हविषो याज्या हिरण्यत्वङ्मधुवर्णो घृतस्नुरभिक्रत्वेन्द्रभूरधज्मन्निति हि सूत्रितम् । वां युवयो रथ

येनाति याथो दुरितानि विश्वा ॥ ३ ॥ यो भूयिष्ठं नासत्याभ्यां विवेष चनिष्ठं पित्वो ररते विभागे । स तोकमस्य पीपरच्छमीभिरनूर्ध्वभासः सदमित्तुतुर्यात् ॥ ४ ॥ समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम । आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ ५ ॥ ॥ प्राता रथ इति नवर्चस्य सूक्तस्य गृत्समद इन्द्रस्त्रिष्टुप् । (२।६।२१) ॐ प्राता रथो नवो योजि सस्निश्चतुर्युगस्त्रिकशः सप्तरश्मिः । दशारित्रो

---

पृक्षोऽन्नममृतं हवन्नावर्ततेऽस्मदभिमुखमागच्छति । कीदृशो रथः हिरण्यत्वग्घिरण्याच्छादितरूपो हिरण्यावृतः मधुवर्णो मनोहरवर्णः घृतस्नुरुदकस्य प्रस्रवनः मनोजवाः मनोवेगः वातरंहाः वातसदृशवेगः हे अश्विना, येन रथेन विश्वा सर्वाणि दुरितानि पापानि दुर्गमनान्मार्गान्वा अतियाथोऽतिक्रम्य गच्छथः ॥ ३ ॥—यो यजमानो विभागे हविर्विभागवति यागे नासत्याभ्यामश्विभ्यां भूयिष्ठं चनिष्ठं । चन इत्यन्ननाम । बह्वन्नकर्म विवेष करोति पित्वः । कर्मणि षष्ठी । अन्नं च ररते ददाति स यजमानोऽस्यात्मन एव तोकं पुत्रं पीपरत्पालयेत् । शमीभिः कर्मभिः अनूर्ध्वभासोऽनुन्नतेजस्कान्यदोर्ध्वभासोऽग्नयः अग्निरहितानयष्टॄन् सदमित्सदैव तुतुर्याद्धिंस्यात् ॥४॥—शुचये शुद्धाय गमनयोग्याय पदाय स्थानाय दधिक्रावेव यथा तथा अश्वः उषस उषोदेवता अध्वरायास्मदीयाय यागाय सन्नमन्त संगच्छन्तु । वाजिनो वेगवन्तोऽश्वा रथमिव रथं यथा तथा उषस अर्वाचीनमस्मदभिमुखं वसुविदं धनस्य प्रापकं भगं देवं नोऽस्मान्प्रति आवहन्त्वानयन्तु ॥ ५ ॥

(प्रातारथो२।६।२१) प्राता रथ इति नवर्चं सप्तमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रं प्रातरित्यनुक्रान्तम् । लैङ्गिको विनियोगः । रथो रंहणाद्रथो यज्ञः स च नवो नूयते स्तूयतेऽत्रेति नवः स्तुतिमान् सस्निः । ष्णा शौचे । 'आदृगमहन–'इति किन्प्रत्ययः । शुद्धः एवंविधो यज्ञः प्रातः प्रातःकाले योजि अयोज्यस्माभिः । चतुर्युगः युज्यन्त इति युगानि ग्रावाणः चत्वारि युगानि यस्य स तथोक्तः । अध्वर्य्वाद्यृत्विगभिप्रायं वा । त्रिकशः तिस्रः कशा वाचो मन्द्रमध्यमोत्कृष्टरूपा यस्य स तथोक्तः । सवनत्रयाभिप्रायं वा सप्तरश्मिः अश्नुवते व्याप्नुवन्ति कर्माणीति रश्मयः छन्दांसि सप्तसंख्याकानि गायत्र्यादीनि छन्दांसि यस्य स तथोक्तः । दशारित्रः अरिभ्यः पापेभ्यस्त्रायन्त इत्यरित्रा ग्रहाः दशसंख्याका ग्रहा यस्य स तादृशः । चमसाध्वर्य्वभिप्रायं वा । मनुष्यो मनुष्याणां हितः स्वर्षाः स्वर्गस्य दाता स एवंविधो यज्ञः इष्टिभिः प्रायणीयातिथ्यादिभिः मतिभिर्मननीयैः स्तोत्रैः रंह्यः शब्दनीयोऽभूदभूत् । यद्वा नवोऽभिनवः सस्निः । सनोतेर्द्विर्वचनादि । कामानां दाता रथः रमन्तेऽस्मिन्निति रथः स्यन्दनः प्रातःसवने च सोमपानार्थं योज्यश्वैरयोजि । कीदृशः । चतुर्युगः

मनुष्यः स्वर्षाः स इष्टिभिर्मतिभी रंह्यो भूत् ॥ १ ॥ सास्मा
अरं प्रथमं स द्वितीयमुतो तृतीयं मनुषः स होता । अन्यस्या
गर्भमन्य ऊजनन्त सो अन्येभिः सचते जेन्यो वृषा ॥ २ ॥
हरी नु कं रथ इन्द्रस्य योजमायै सूक्तेन वचसा नवेन ।
मो षु त्वामत्र बहवो हि विप्रा निरीरमन्यजमानासोऽअन्ये
॥ ३ ॥ आ द्वाभ्यां हरिभ्यामिन्द्र याह्या चतुर्भिरा षड्भिर्हूय-
मानः । अष्टाभिर्दशभिः सोमपेयमयं सुतः सुमख मा मृधस्कः
॥ ४ ॥ आ विंशत्या त्रिंशता याह्यर्वाङा चत्वारिंशता हरिभि-

---

त्रिकशः तिस्रः कशा यस्य तथोक्तः सप्तरश्मिः सप्तरज्जुः दशारित्रो दशवक्रो मनुष्यो मनुष्यहितः स्वर्षाः स्वर्गस्य संगमयिता इन्द्ररथः इष्टिभिर्यागैर्मतिभिः स्तोत्रैश्च व्याप्तव्यो भवति ॥ १ ॥—स यज्ञः सोमो वा अस्मा इन्द्राय प्रथमं प्रातःसवने अरं पर्याप्तोऽभूत् । स च द्वितीयं माध्यन्दिने सवने पर्याप्तोऽभूत् । उतो अपिच स तृतीयं तृतीये सवने पर्याप्तोऽभूत् । सर्वत्र 'कालाध्वनोः–' इति द्वितीया । स यज्ञः सोमो वा मनुषो मनुष्यस्य होता शुभानां वोढा भवति । किंच अन्ये ऋत्विजोऽन्यस्याः पृथिव्या वेदात्मिकाया वाचो वा गर्भं सन्तं सोमं यज्ञं वा जनन्ताजनयन्त । उ प्रसिद्ध्यर्थः । वृषाभिमतफलवर्षकः जेन्यो जयसमर्थः स यज्ञः सोमो वा अन्येभिरन्यैरिन्द्रादिभिः देवैः सचते संगच्छते । षच समवाये । अनुदात्तेत् ॥ २ ॥—इन्द्रस्य संबन्धिनि रथे हरी एतन्नामकावश्वौ नु क्षिप्रं कं सुखेन आयै गमनाय नवेन अन्यैरकृतपूर्वेण वचसा वेदात्मकेन सूक्तेन साधनेन योजं युनज्मि । युजिर् योगे । लुङि 'इरितो वा' इति च्लेरङादेशः । अत्रास्मिन्यज्ञे बहवो विप्रा मेधाविनः स्तोतारो भवन्ति हि । तथापि अन्ये मद्व्यतिरिक्ता यजमानासो यजमानाः त्वां सु सुष्टु मो निरीरमन्नितरां मा रमयन्तु । अतोऽस्मदीयं यज्ञमागत्य सोमं पिबेति भावः । रीरमन् । रमतेर्ण्यन्तस्य लुङि चङि सन्वद्भावादभ्यासस्येत्वदीर्घौ वाक्यभेदादत्र हियोगाभावेन निघातः ॥ ३ ॥—हे इन्द्र, होतृभिराहूयमानस्त्वं द्वाभ्यां हरिभ्यामश्वाभ्यामिमं यज्ञं प्रति सोमपानार्थमायाहि चतुर्भिर्हरिभिरायाहि तथा षड्भिरागच्छ । सोमपेयं । पा पाने कर्मणि 'अचो यत्' । 'ईद्यति' इतीत्वम् । पातव्यं सोमं प्रति अष्टाभिरश्वैरायाहि । 'अष्टनो दीर्घात्' इति विभक्तेरुदात्तत्वम् । दशभिर्हरिभिरागच्छ । सुमख सुयज्ञ सुधन वा हे इन्द्र, अयं सोमस्त्वदर्थं सुतोऽभिषुतः । अतो यज्ञस्य मृधो हिंसाः माकः माकार्षीः । करोतेर्लुङि 'मन्त्रे घस–' इत्यादिना च्लेर्लुक् । गुणेकृते हल्ङ्यादिना सिपो लोपः । यद्यपीन्द्रस्य द्वावेव हरी तथापि तयोर्विभूतिभेदान्नानात्वं अतोऽश्वबहुत्वमविरुद्धम् ॥ ४ ॥—हे इन्द्र, सोमपेयं पातव्यं सोमंप्रति अर्वाङस्मदभि

युञ्जानः। आ पञ्चाशता सुरथेभिरिन्द्रा षष्ट्या सप्तत्या सोम-
पेयम् ॥ ५ ॥ २१ ॥ अशीत्या नवत्या याह्यर्वाङ शतेन
हरिभिरुह्यमानः। अयं हि ते शुनहोत्रेषु सोम इन्द्र त्वाया
परिषिक्तो मदाय ॥ ६ ॥ मम ब्रह्मेन्द्र याह्यच्छा विश्वा हरी
धुरि धिष्वा रथस्य। पुरुत्रा हि विहव्यो बभूथास्मिञ्छूर सवने
मादयस्व ॥ ७ ॥ नम इन्द्रेण सख्यं वियोषदस्मभ्यमस्य
दक्षिणा दुहीत। उप ज्येष्ठे वरूथे गभस्तौ प्रायेप्राये जिगीवांसः
स्याम ॥ ८ ॥ नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षि-
णा मघोनी। शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम

---

मुखः सन् विंशत्या विंशतिसंख्याकैरश्वैरायाहि। त्रिंशता त्रिंशत्संख्याकैर्हरिभिरागच्छ। चत्वारिंशता चत्वारिंशत्संख्याकैर्हरिभिर्युजानो युज्यमानस्त्वं सोमपानं प्रत्यायाहि। सुरथेभिः सुरंहणैः सुगमनैः पञ्चाशता हरिभिरायाहि। तथा षष्ट्या षष्टिसंख्याकैर्हरिभिः सप्तत्या एतत्संख्याकैर्हरिभिः सोमपानं प्रत्यागच्छ ॥ ५ ॥ अशीत्या अशीतिसंख्याकैरश्वैः सोमपानार्थमर्वाङस्मदभिमुखः सन्नायाहि। नवत्या एतत्संख्याकैरश्वैरागच्छ। शतेन शतसंख्याकैर्हरिभिरुह्यमानो धार्यमाणस्त्वमायाहि। हे इन्द्र, हि यस्मात्ते मदाय हर्षाय शुनहोत्रेषु सुखेन हूयते सोमो येभिरिति शुनहोत्राः पात्रविशेषास्तेष्वयं सोमः त्वाया त्वत्कामनया परिषिक्तः ॥ ६ ॥ हे इन्द्र, मम ब्रह्म अस्मदीयामेव स्तुतिमच्छाभिलक्ष्यायाहि। विश्वा व्याप्तौ हरी रथस्य धुरि युगप्रान्ते धिष्व संयोजय। पुरुत्रा पुरुभिर्बहुभिर्यजमानैस्त्वं विहव्यो विविधं ह्वातव्यो बभूथ बभूविथ। 'बभूथाततन्थजगृभ्मववर्थ–' इति निपातनादिडभावः। हि प्रसिद्धः। हे शूर, अस्मिन्सवने यज्ञे मादयस्व सोमपानेन हृष्टो भव ॥ ७ ॥–इन्द्रेण सह मे मम सख्यं यष्टृयष्टव्यलक्षणं सख्यं न वियोषत् कदाचिदपि न वियुज्यताम्। यौतेर्लेटि 'सिब्बहुलं–' इति सिप्। अडागमः। अस्येन्द्रस्य दक्षिणा इन्द्रकर्तृकं दानमस्मभ्यं दुहीताभिमतफलं दुग्धाम्। दुहेर्लिङि रूपम्। ज्येष्ठेऽतिशयेन प्रशस्ये वरूथे आपदां वारके वरणीये वा गभस्तौ बाहौ उप समीपे वर्तिनः स्याम इन्द्रस्य हस्तस्पर्शयोग्या भवेमेत्यर्थः। किंच प्राये प्राये सोमपानार्थमिन्द्रस्य यज्ञशालायां प्रवेशे प्रवेशे जिगीवांसः शत्रूणां जेतारो भवेम। यद्वा प्राये प्राये प्रकर्षेण ईयते गम्यते योद्धृभिरिति प्रायं युद्धं तस्मिन्युद्धे जिगीवांसः शत्रूञ्जितवन्तो भवेम ॥ ८ ॥–हे इन्द्र, या दक्षिणा दक्षमुत्साहं करोतीति दक्षिणा स्तोतृभ्यो देया सा ते त्वत्संबन्धिनी मघोनी धनवती जरित्रे स्तोत्रे वरं श्रेष्ठमभिमतमर्थं नूनं प्रति दुहीयत् इदानीं प्रतिदोग्धि। संपादयतीत्यर्थः। तादृशीं दक्षिणां स्तोतृभ्योऽस्मभ्यं शिक्ष प्रयच्छ। किंच भगो भजनीयः त्वमाति-

विदथे सुवीराः ॥ ९ ॥ ( १।६।२६ ) पुनः पुनर्जायमाना पुराणी समानं वर्णमभि शुम्भमाना । श्वघ्नीव कृत्नुर्विज आमिनाना मर्तस्य देवी जरयन्त्यायुः ॥ १ ॥ इत्यादिमन्त्रान्पठित्वा यथोपासनासंप्रदायेन गुर्वादीष्टदेवतामन्त्रांश्च पठेत् ।

## प्रातःस्मरणम् ।

तथाच वामनपुराणे–ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहुकेतवः कुर्वन्तु सर्वे मम सुप्रभातम् ॥ १ ॥ भृगुर्वसिष्ठः क्रतुरङ्गिराश्च मनुः पुलस्त्यः पुलहश्च गौतमः । रैभ्यो मरीचिश्च्यवनश्च दक्षः कुर्वन्तु सर्वे मम सुप्रभातम् ॥ २ ॥ सनत्कुमारः सनकः सन-

---

धक् । दहेर्दानार्थस्य लुङि 'मन्त्रे घस–' इत्यादिना च्लेर्लुक् । नोऽस्माकं कामान्माधक् माधाक्षीः । अपेक्षितफलदानेन पूरयेत्यर्थः । सुवीराः शोभनपुत्रपौत्राः सन्तो वयं विदथेऽस्मिन्यज्ञे बृहत्प्रभूतं स्तोत्रं वदेम त्वामुद्दिश्य ब्रवाम । अत्र सा ते प्रतिदुग्धामिति प्रकृत्य वीरो वीरयत्यमित्रान् वेत्तेर्वा स्याद्गतिकर्मणो वीरयतेर्वेत्यन्तं निरुक्तमनुसंधेयम् ॥ ९ ॥

(पुनःपुनर् १।६।२५) पुनः पुनर्जायमाना प्रतिदिवसं सूर्योदयात्पूर्वं प्रादुर्भवन्ती पुराणी चिरंतनी । नित्येत्यर्थः । यस्मात्समानं वर्णमेकमेव रूपमभिप्राप्य शुम्भमाना शोभमाना । भिन्नेष्वपि दिवसेष्वस्या एकरूपेणावस्थानान्नित्यत्वमित्यर्थः । एवंगुणविशिष्टा देवी देवनशीलोषाः मर्तस्य मर्त्यस्य मरणधर्मणः सर्वस्य प्राणिजातस्यायुर्जीवनं जरयन्त्यूनयन्ती वर्तते बह्वीषूषःस्वतीतासु हि सर्वेषामायुर्हीयते उषाश्च पुनःपुनर्जायमानेत्युक्तं अतः सैवायुर्जरयति । तत्र दृष्टान्तः । कृत्नुः कर्तनशीला श्वघ्नीव व्याधस्त्रीव सा यथा विजश्चलतः पक्षिणः आमिनाना पक्षादिच्छेदनेन हिंसन्ती तेषामायुर्जरयति तद्वत् । पुराणी । पुरेत्यस्मादव्ययात् 'सायंचिरंप्राह्णे' इत्यादिना भवार्थे ट्युप्रत्ययः । 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' इति निपातनात्तुडभावः । योरनादेशः टित्वान्ङीप् व्यत्ययेनान्तोदात्तत्वम् । शुम्भमाना । शुम्भ दीप्तौ । शपः पित्वादनुदात्तत्वम् । शानचो लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । श्वघ्नी शुनो मृगान्हतवान्श्वहा । 'बहुलं छन्दसि' इति वचनाद्ब्रह्मादिव्यतिरिक्तेऽप्युपपदे हन्तेः क्विप् । 'ऋन्नेभ्यो ङीप्' इति ङीप् । 'अल्लोपोऽनः' इत्यकारलोपः । 'हो हन्तेः–' इति घत्वं । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । कृत्नुः । कृती छेदने औणादिकः क्नुप्रत्ययः । विजः । ओविजी भयचलनयोः । विजन्ति चलन्ति विजः पक्षिणः । आमिनाना । मीञ् हिंसायाम् । क्रैयादिकः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । शानचश्चित्वादन्तोदात्तत्वम् ॥ १ ॥

न्दनः सनातनोऽप्यासुरिपिङ्गलौ च । सप्त स्वराः सप्त रसातलानि कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ३ ॥ सप्तार्णवाः सप्त कुलाचलाश्च सप्तर्षयो द्वीपवनानि सप्त । भूरादि कृत्वा भुवनानि सप्त कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ४ ॥ पृथ्वी सगन्धा सरसास्तथापः स्पर्शी च वायुर्ज्वलनः सतेजाः । नभः सशब्दं महता सहैव कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ५ ॥ इत्थं प्रभाते परमं पवित्रं पठेत्स्मरेद्वा शृणुयाच्च तद्वत् । दुःस्वप्ननाशस्त्विह सुप्रभातं भवेच्च नित्यं भगवत्प्रसादात् ॥ ६ ॥ वैन्यं पृथुं हैहयमर्जुनं च शाकुन्तलेयं भरतं नलं च । रामं च यो वै स्मरति प्रभाते तस्यार्थलाभो विजयश्च हस्ते ॥ ७ ॥ बलिर्विभीषणो भीष्मः प्रह्लादो नारदो ध्रुवः । षडेते वैष्णवाः प्रोक्ताः स्मरणं पापनाशनम् ॥ ८ ॥ अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ ९ ॥ सप्तैतान्संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् । जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ॥ १० ॥ अहल्या द्रौपदी सीता तारा मन्दोदरी तथा । पञ्चकं ना स्मरेन्नित्यं महापातकनाशनम् ॥ ११ ॥ कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥ १२ ॥ धर्मो विवर्धति युधिष्ठिरकीर्तनेन पापं प्रणश्यति वृकोदरकीर्तनेन । शत्रुर्विनश्यति धनंजयकीर्तनेन माद्रीसुतौ कथयतां न भवन्ति रोगाः ॥ १३ ॥ पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः । पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः ॥ १४ ॥ इत्यादिपुराणमन्त्रांश्च पठेत् । ततो भूमिं प्रार्थयेत् । समुद्रवसने देवि पर्वतस्तनमण्डिते । विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे । इति प्रयोगपारिजातोक्तेः । अनेन मन्त्रेण

भूमिं संप्रार्थ्य ग्रामाद्बहिर्नैर्ऋत्यामिषुक्षेपात्यये नगराच्चतुर्गुणे देशे गत्वा मूत्रपुरीषोत्सर्गं कुर्यात् ॥

## मूत्रपुरीषोत्सर्गविधिः ।

तद्यथा । देवतायतनवल्मीकमूषकस्थलमार्गश्मशाननदीतीरवापीकूपतडागवृक्षमूलस्थितशौचावशिष्टकीटास्थिमिश्रातिरिक्तां गौरां मृदं यथासंभवां वा मृज्जलपात्रं च शुचि देशे न्यस्याग्निरथ्यातीर्थश्मशानगोमयनदीयज्ञभूमिफालकृष्टजलचितिवल्मीकगिरिमस्तकदेवालयदर्भपुष्पशाद्वलभस्मसेव्यच्छायमार्गे गोष्ठातिरिक्तैकान्तस्थले कीटादिराहित्यशुद्धभूमिमयज्ञियमुष्टिमिततृणैराच्छाद्य प्रावृतशिराः पृष्ठतः कण्ठलम्बितोपवीतो यद्येकवस्त्रश्चेद्दक्षिणकर्णे निहितोपवीतो वाय्वर्कदेवाग्निसोमगोस्त्रीविप्राभिमुखो नोपविशेत् । घ्राणमाच्छाद्य दिवा संध्ययोरुदङ्मुखो रात्रौ दक्षिणाभिमुखो विण्मूत्रमुत्सृज्य लोष्ठादिना गुदं परिमृज्य गृहीतशिश्न उत्थाय पूर्वनिहितमृज्जलपात्रान्तिके उपविशन्नार्द्रामलकमितमृज्जलैस्त्रिर्लिङ्गं प्रक्षाल्यार्धप्रसृतितदर्धार्धमृज्जलैः पञ्चवारमपानं संशोध्य पुनर्जलैरेव लिङ्गगुदे च प्रक्षाल्य वामकरमार्द्रामलकमितमृज्जलैर्दशवारं प्रक्षाल्य ततः करद्वयं तावदेव मृज्जलैः सप्तवारं प्रक्षालयेत् । मूत्रमात्रोत्सर्गे लिङ्गं पूर्ववदेकवारं त्रिर्वा प्रक्षाल्य वामकरं तथैव त्रिःप्रक्षाल्य करद्वयं तथैव द्विःप्रक्षाल्य प्राङ्मुख उपविश्याजानु वामदक्षिणपादावाकूर्परं बाहू च मृज्जलैः प्रत्येकं त्रिःप्रक्षाल्य शौचावशिष्टमृदं प्रक्षाल्य द्वादश गण्डूषान्कृत्वोपवीती द्विराचम्य एतदर्धं स्त्रीणाम् । स्मृत्यर्थसारे । एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् । त्रिगुणं स्याद्वनस्थानां यतीनां स्याच्चतुर्गुणम् । कलौ वनस्थाश्रमो नैष्ठिकब्रह्मचर्यं च ( नैव दृश्यते ) । रात्रौ विशेषस्तत्रैव । दिवा

यद्विहितं शौचं तदर्धं निशि कीर्तितम् । तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि । स्त्रीशूद्रादेरशक्तानां बालानां चोपवीतितः । गन्धलेपक्षयकरं शौचं कुर्यान्न संख्यया । एकैकया मृदा पादौ हस्तौ प्रक्षालयेत्ततः । इति । तथा । रात्रौ गृहसमीपे गृहे वा नैर्ऋत्यां मूत्रपुरीषोत्सर्गं कुर्यादित्याचारमयूखे । एवं शौचं कृत्वा वामतो द्वादश गण्डूषान्कुर्यात् । उक्तं चाश्वलायनस्मृतौ । कुर्याद्द्वादश गण्डूषान्पुरीषोत्सर्जने द्विजः । मूत्रोत्सर्गे तु चतुरो भोजनान्ते तु षोडश । भक्ष्यभोज्यावसाने तु गण्डूषाष्टकमादरात् । इति शौचविधिः ॥

## आचमनम् ।

अगस्त्यसंहितायाम् । शुचौ देशे भूमिष्ठपादोन्तर्जानुहस्तः प्राङ्मुख उपविश्य जलाशये तु दक्षिणपादं जले विन्यस्य प्रकृतिस्थं माषमज्जनमितं फेनबुद्बुदगन्धरसवर्जितं संहताङ्गुलिपाणिनाम्बु गृहीत्वाङ्गुष्ठकनिष्ठिकाभ्यां मुक्त्वाशेषं वीक्षितं वामेनान्वारभ्य समाहितमनसा ब्रह्मतीर्थेन त्रिः पिबेत् । ॐकेशवाय[1] नमः । ॐनारायणाय नमः । ॐमाधवाय नमः । इति त्रिर्नाममन्त्रैरपः पीत्वा । ॐगोविन्दाय नमः । ॐ विष्णवे नमः । इति द्वाभ्यां करौ प्रक्षाल्य । ॐमधुसूदनाय नमः । ॐत्रिविक्रमाय नमः । इति द्वाभ्यां अङ्गुष्ठमूलेनोष्ठौ संमृज्य । ॐवामनाय नमः । ॐश्रीधराय नमः । इति द्वाभ्यां तथैव मुखमवाङ्मृज्य । ॐहृषीकेशाय नमः । इति वामकरं प्रोक्ष्य । ॐपद्मनाभाय नमः । इति पादौ । ॐ दामोदराय नमः । इति मूर्धानम् । ॐसंकर्षणाय नमः । इति संहतमध्याङ्गुलित्रयाग्रैरूर्ध्वोष्ठम् । ॐवासुदेवाय नमः । ॐ प्रद्युम्नाय नमः । इति द्वाभ्यामङ्गुष्ठतर्जनीभ्यां दक्षिणवामना-

---

१ केशवादिनामसु पूर्वाणि त्रीणि स्वाहान्तान्युच्चार्यैवाचमनं शिष्टसंमतम् ।

सापुटे स्पृशेत् । ॐ अनिरुद्धाय नमः । ॐ पुरुषोत्तमाय नमः । इति द्वाभ्यामङ्गुष्ठानामिकाभ्यां दक्षिणवामचक्षुषी स्पृशेत् । ॐअधोक्षजाय नमः । ॐनारसिंहाय नमः । इति द्वाभ्यां तथैव श्रोत्रे स्पृशेत् । ॐअच्युताय नमः । इति कनिष्ठिकाङ्गुष्ठाभ्यां नाभिं स्पृशेत् । ॐजनार्दनाय नमः । इति पाणितलेन हृदयम् । ॐउपेन्द्राय नमः । इति सर्वाङ्गुल्यग्रैः शिरसि । ॐहरये नमः । ॐश्रीकृष्णाय नमः । इति द्वाभ्यां तथैव दक्षिणवामबाहुमूले स्पृशेत् । एतत्प्रत्यङ्गमद्भिः संस्पृशन्नेवं द्विरा[1]चामेत् । इमानि नामानि प्रथमैकवचनान्तानि वोच्चार्याणि । केचित्तु संबुद्ध्यन्तान्युच्चारयन्ति तत्र हरिपदं विष्णुपदं चाविभक्तिकमेवोच्चारयन्ति तदसाधु नैव प्रयुञ्जीतेति नियमाच्चिन्त्यम् ॥

## दन्तधावनम् ।

तत्र प्रतिपत्पञ्चदशीषष्ठ्यष्टम्येकादशीत्रिजन्मनक्षत्रजन्मदिनामाऽव्यतीपातसंक्रान्तियुगादिमन्वादियज्ञव्रतोपवासश्राद्धदिनातिरिक्तदिनेषु समन्त्रं दन्तधावनं धर्मसहितं ब्राह्मणो द्वादशाङ्गुलप्रमाणं कनिष्ठाङ्गुलिवत्स्थूलमुदुम्बरप्लक्षाशोकवेणुजम्बूचूतखादिरापामार्गक्षीरवृक्षकण्टकतिक्तककषायकटुसुगन्धवृक्षेष्वन्यतमवृक्षोद्भवेन चूर्णीकृताग्रकाष्ठेन गुल्मलतादिना वा प्रक्षालितेन शुष्केणार्द्रेण वा कीटादिदोषरहितेन वाग्यतो दन्तान्धावयेत् । कण्टकिषु न बुब्बुलकाष्ठेन कुर्यादिति विष्णूक्तेः । आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते । इत्यभिमन्त्र्य । मुखदुर्गन्धनाशाय दन्तानां च विशुद्धये । ष्ठीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम् । इति मन्त्रेण दन्तान्संशोध्य तत्प्रक्षा-

---

१ विधिवदाचमनप्रकारः सिन्ध्वादावन्यथोक्तः । जयन्तादिभिश्चान्यथैवाहृतोऽस्ति ।

ल्य शुचि देशे न्यस्य पुनस्तादृश्यैव जिह्वोल्लेखनिकया जिह्वां च संशोध्य द्वादशगण्डूषान्कृत्वा द्विराचामेत् । दन्तकाष्ठालाभे नन्दादिवर्ज्यतिथिषु चामन्त्रं प्राङ्मुखादिविधिरहितमङ्गुष्ठेनानामिकया वा तृणपर्णादिभिर्वा द्वादशगण्डूषैर्वा निषिद्धाहेऽपि मुखं संशोधयेदिति स्मृत्यर्थसारादयः । इति दन्तधावनम् ॥

## प्रातःस्नानम् ।

शुद्धगोमयमादाय नद्यादिसमीपं गत्वोद्धृतजलैर्मुखं पाणिपादौ च प्रक्षाल्य सप्रणवां गायत्रीं बद्धकच्छशिख आचान्तो दर्भपाणिर्दण्डवत्प्रणम्योपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्य ममात्मानः कायवाङ्मनःकृतकर्मदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःस्नानं करिष्ये इति संकल्प्य वीक्षितं गोमयं वामपाणावुदक्संस्थं ॐभूर्भुवःस्वरिति त्रिधा विभज्य दक्षिणभागं प्रणवेन प्राच्यादिदशदिक्षु निक्षिप्योत्तरभागं तूष्णीं तीर्थे निक्षिप्य मध्यभागं । मानस्तोक इत्यस्य कुत्सो रुद्रो जगती । गोमयाभिमन्त्रणे विनियोगः । ॐ मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे। इत्यभिमन्त्र्य तेन । ॐगन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्। अग्रमग्रंचरन्तीनामोषधीनां वने वने । तासामृषभपत्नीनां पवित्रं कायशोधनम् ।

---

(मानस्तोके १।८।६)हे रुद्र, नोस्माकं तोकादिविषये मारीरिषःमाहिंसीः । तोकशब्दः पुत्रवाची । तनयस्तत्पुत्रः । आयुरित्यन्तोदात्तं मनुष्यनाम । पुत्रपौत्रव्यतिरिक्तो योऽस्मदीयो मनुष्यस्तस्मिन्हिंसां मा कृथाः । तथा हे रुद्र, वीरान्विक्रान्ताञ्शौर्योपेतान् अस्मदीयान्भामितः क्रुद्धः सन् मावधीर्माहिंसीः । वयं च हविष्मन्तो हविर्भिर्युक्ताः सन्तः सदमित्सर्वदैव त्वां हवामहे आह्वयामहे । आयौ इण् गतौ 'छन्दसीणः' इत्यण् प्रत्ययः । भामितः भाम क्रोधे 'क्तोऽधिकरणे च' इति कर्तरि क्तः । हवामहे ह्वेञो लटि 'बहुलं छन्दसि' इति संप्रसारणम् ॥ १ ॥

त्वं मे रोगांश्च शोकाश्च नुद गोमय सर्वदा । इति मंत्रैः सर्वाण्यंगानि विलिप्य । तीर्थं प्रार्थयेत् । ( तीर्थराजाय नमः । त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता । याचितं देहि मे तीर्थं तीर्थराज नमोस्तु ते ॥ १ ॥ सितासिते यत्र तरङ्गचामरे नद्यौ विभाते मुनिभानुकन्यके । लीलातपत्रं वट एव साक्षात्स तीर्थराजो जयति प्रयागः ॥ २ ॥ तिथिर्विष्णुस्तथा वारो नक्षत्रं विष्णुरेव च । योगश्च करणं चैव सर्वं विष्णुमयं जगत् ॥ ३ ॥ योऽसौ सर्वगतो विष्णुश्चित्स्वरूपी निरञ्जनः । स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः ॥ ४ ॥ गङ्गागङ्गेति यो ब्रूयाद्योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ५॥ नन्दिनी नलिनी सीता मालती च मलापहा । विष्णुपादाब्जसंभूता गङ्गा त्रिपथगामिनी ॥ ६ ॥ भागीरथी भोगवती जाह्नवी त्रिदशेश्वरी । द्वादशैतानि नामानि यत्र यत्र जलाशये । स्नानयुक्तः स्मरेन्नित्यं तत्र तत्र वसेद्धि सा ॥ ७ ॥ हरिर्नारायणो गङ्गा गङ्गा नारायणो हरिः । हरिर्विश्वेश्वरो गङ्गा गङ्गा विश्वेश्वरो हरिः ॥ ८ ॥ पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा । आगच्छन्तु पवित्राणि स्नानकाले सदा मम ॥९॥ ) प्रातर्मृत्तिकास्नानं सायं गोमयस्नानं च न कुर्यात् । न प्रातर्मृत्तिकास्नानं न कुर्याद्गोमयं निशि । इति शौनकोक्तेः । शिखां च बध्वैव स्नायात् मुक्तकेशैर्न कर्तव्यं प्रेतस्नानं विना क्वचित् । इत्याचाररत्ने वृद्धवसिष्ठोक्तेः । ॐहिर॑ण्यशृङ्गं॒ वरु॑णं॒ प्रप॑द्ये ती॒र्थं मे॑ देहि॒ याचि॑तः । य॒न्मया॑ भु॒क्तम॒साधू॑नां पा॒पेभ्य॑श्च प्र॒तिग्र॑हः । यन्मे॒ मन॑सा वा॒चा क॒र्मणा वा दु॑ष्कृ॒तं कृ॒तम् । तन्न॒ इन्द्रो॒ वरु॑णो॒ बृह॒स्पति॑ः सवि॒ता च॑ पुनन्तु॒ पुन॒ः पुन॑ः । इति संप्रार्थ्य तीर्थविशेषे तु तीक्ष्णदंष्ट्रेति श्लोकं पठित्वा प्रवहज्जले प्रवाहा-

भिमुखोऽन्यत्रार्काभिमुखो रात्रावग्न्यभिमुखः संध्यायां संध्याभिमुखस्त्रिर्निमज्ज्याङ्गानि प्रक्षाल्य स्नात्वा स्रोतसोऽभिमुख एव नाभिमात्रजले द्विराचम्य । आपोहिष्ठेतितृचस्याम्बरीषः सिन्धुद्वीप आपो गायत्री मार्जने विनियोगः । आपोहिष्ठेति तिसृभिः प्रणवाद्यैः प्रतिपादान्ते शिरसि कुशजलैर्मार्जयेत् । प्रणवव्याहृतिपूर्वया गायत्र्या च मार्जयित्वाङ्गुष्ठेन । इमं मे गङ्गे यमुने इत्यस्य प्रैयमेधः सिन्धुर्नद्यो जगती । जलालोडने विनियोगः ॥ (८।३।६) ॐ इ॒मं मे॑ गङ्गे यमुने सरस्वति॒ शुतु॑द्रि॒ स्तोमं॑ सचता॒ परु॒ष्ण्या । असि॒क्न्या म॑रुद्वृधे वि॒तस्त॒यार्जी॑कीये शृणु॒ह्या सु॒षोम॑या ॥ १ ॥ इति त्रिःप्रदक्षिणं जलमालोड्याङ्गुष्ठाभ्यां श्रोत्रे तर्जनीमध्यमाभ्यां नेत्रे अनामिकाभ्यां नासाबिले संपीड्य कनिष्ठिकाभ्यां मुखं च संमील्य स्नानदिगभिमुखः प्रकाशपृष्ठं निमग्नः सन् । ऋतं चेति तृचस्याघमर्षणो भाववृत्तमनुष्टुप् । जलाघमर्षणे विनियोगः । ऋतं चेति तृचेन सप्रणवव्याहृतिगायत्रीं तद्विष्णोरित्यृचमिष्टदेवतां च मनसा स्मृत्वैवं त्रिः सकृद्वाघमर्षणं कृत्वा त्रिराप्लुत्याचम्याम्भःस्थ एव प्राङ्मुखः साक्षताभिरद्भिः ब्रह्मादयो ये देवाः तान्देवांस्तर्पयामि । भूर्देवांस्तर्पयामि । भुवर्देवांस्तर्पयामि । स्वर्देवांस्तर्पयामि । भूर्भुवःस्वर्देवांस्तर्पयामि । कृष्णद्वैपायनादयो य ऋषयः तानृषींस्तर्पयामि । भूरृषींस्तर्पयामि । भुवरृषींस्तर्पयामि । स्वरृषींस्तर्पयामि । भूर्भुवःस्वरृषींस्तर्पयामि । इति ऋषितीर्थेन निवीती द्वौ

---

(इमंमे ८।३।६) अत्र प्रधानभूताःसप्तनद्यः तदवयवभूतास्तिस्रः स्तूयन्ते । हे गङ्गे हे यमुने, हे सरस्वति, हे शुतुद्रि, हे परुष्णि, हे असिक्न्या अवयवभूतया सहिते मरुद्वृधे, वितस्तया सोमया च सहिते आर्जीकीये, त्वं चैव सप्त नद्यो यूयं मे स्तोमं स्तोत्रमस्मदीयं आ सचत आसेवध्वं । श्रृणुहि श्रृणुत च । आर्जीकीयया वितस्तया सुषोमया च साहित्यं निरुक्ते उक्तम् । वितस्ते चार्जीकीय आश्रृणुहि सुषोमया चेति । अत्र गङ्गा गमनादित्यादि निरुक्तं द्रष्टव्यम् ॥ १ ॥

द्वावञ्जली दत्त्वा । ततःप्राचीनावीती दक्षिणाभिमुखः सतिलाभिरद्भिः सोमः पितृमान्यमोऽङ्गिरस्वानग्निष्वात्ताः कव्यवाहनादयो ये पितरस्तान्पितृंस्तर्पयामि । भूः पितृंस्तर्पयामि । भुवः पितृंस्तर्पयामि । स्वःपितृंर्पयामि । भूर्भुवःस्वः पितृंस्तर्पयामि । इति पितृतीर्थेन त्रींस्त्रीनञ्जलीन्दत्वा तीरमागत्य । अग्निदग्धाश्च ये जीवा येप्यदग्धाः कुले मम । भूमौ दत्तेन तोयेन तृप्ता यान्तु परां गतिम् । इति जलाञ्जलिं भूमौ निक्षिप्य । यज्ञोपवीती । यन्मया दूषितं तोयं शारीरमलसंभवात् । तद्दोषपरिहारार्थं यक्ष्माणं तर्पयाम्यहम् । इति यक्ष्मतर्पणं कृत्वा जलादुत्तीर्य देहे स्वयमेव शुष्के जाते केशजले च भूमौ नागेभ्यः स्रुते शुचिः शुष्कं शुक्लं वासः परिधाय तादृगेवोत्तरीयं कृत्वा शुष्काभावे क्षौमं प्रोक्ष्य तत्तदभावे आर्द्रं वा वासः सप्तवारमवधूय धृत्वार्द्रं वासोऽधस्त्यक्त्वा गृहे चोर्ध्वमार्गेण त्यक्त्वा तद्वस्त्रं चतुर्गुणमुपरिदशं वामप्रकोष्ठस्थाने निष्पीड्य पादौ सजङ्कौ च प्रक्षालयेत् । एवं स्नानाशक्तौ कण्ठस्नानमार्द्रवस्त्रेण देहमार्जनमन्त्रस्नानादिकं गौणस्नानं कृत्वा प्रातरेव संध्योपासनादि कार्यमित्याचारदीपे कमलाकरः । ननु प्रातःस्नानोत्कर्षे संध्योत्कर्षः । कर्मणां स्वकाल एव यथाकथंचित्कर्तव्यत्वात् । प्रातःसंध्यामुपासीत दन्तधावनपूर्विकाम् । इति वचनाच्च ॥ कुशासने श्वेतकम्बले वा प्राङ्मुख उदङ्मुखो वोपविश्य द्विराचम्योर्ध्वपुण्ड्रं कुर्यात् ॥

## पुण्ड्रधारणविधिः ॥

तद्यथा ॥ गङ्गादिमृत्तिकया तर्जनीमध्यमानामिकान्यतमाङ्गुल्या वा शिरो[1]भालनाभिहृत्कण्ठोदरदक्षिणवामपार्श्वदक्षि-

---

१ सिंधौ तु शुक्ले केशवादिद्वादशनामभिः कृष्णे तु संकर्षणादिद्वादशभिः क्रमेण ललाटोदरहृत्कण्ठे दक्षिणपार्श्वबाहुकर्णदेशे वामपार्श्वबाहुकर्णदेशे पृष्ठे ककुदि चेति क्रमः ।

णवामबाहुमूलस्कन्धदक्षिणवामकर्णाधःपृष्ठस्तनेषु प्रणवेन यथाक्रमं शिरोतिरिक्तेषु दीपकमलकुमुदवेणुपत्रजम्बूपत्राद्याकारांस्तिलकान्धृत्वा ॥

## भस्मधारणविधिः ॥

श्रौताग्निजं भस्म तदभावे स्वोपासनजं वा वामहस्ते कृत्वा दक्षिणहस्तेनाच्छाद्य। अग्निरिति भस्म। वायुरिति भस्म। जलमिति भस्म। स्थलमिति भस्म। व्योमेति भस्म। सर्वꣳ ह वा इदं भस्म। मन एतानि चक्षूंषि भस्मानीति सद्योजातादिपञ्चभिर्मन्त्रैश्चाभिमन्त्र्य। ते च मन्त्राः॥ ॐसद्यो जातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवेभवे नातिभवे भवस्व मां भवोद्भवाय नमः॥ १॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः॥ २॥ अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥ ३॥ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्॥ ४॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्॥ ५॥ त्र्यम्बकं वसिष्ठो मृत्युंजयोऽनुष्टुप्। जलमिश्रणे विनियोगः। ॐत्र्यंम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्।इति जलेन मिश्रयित्वानामिकामध्यमातर्जनीभिस्तिर्यगक्षिणीपर्यन्तं ललाटहृन्नाभिकण्ठदक्षिणबाहुमूलमध्यमणिबन्धवामबाहुमूलमध्यमणिबन्धपृष्ठशिरःस्थानेषु सप्रणवव्याहृतिगायत्र्या च प्रतिस्थानं मन्त्रावृत्त्या भस्म बिभृयात्। एवं स्मार्ताः। वैष्णवा अप्यूर्ध्वपुण्ड्रान्ते भस्मोद्धूलनपूर्वकं सार्वकालं

बिभृयुः । अत्र त्रिपुण्ड्रमूर्ध्वपुण्ड्रं वा समुच्चयो वा यथासंप्रदायं बिभृयुः इति पारिजाते । तथा । भस्मना नोर्ध्वपुण्ड्रं तु मृद्भिर्नैव त्रिपुण्ड्रकम् । इति च । इति तिलकविधिः ॥

## प्रातःसंध्या ।

पूर्ववद्द्विराचम्यानामिकामध्यपर्वाभ्यां वामे त्रीन्दक्षिणे द्वौ द्वौ कुशौ शक्तौ स्वर्णपवित्रं च धृत्वा तर्जनीमध्यमाव्यतिरिक्ताङ्गुलित्रयेण नासां धृत्वा वामनासारन्ध्रेण बाह्यवायुमाकृष्य नासां दृढं निष्पीड्य वायुनिरोधं कुर्वन्प्रथमममन्त्रकं पञ्चदशमात्रकं प्राणायामं कृत्वा दक्षिणनासारन्ध्रेण शनैर्वायुं विसृज्य पुनरेवं द्विः कृत्वा आयतप्राणः । प्रणवस्य परब्रह्मऋषिः परमात्मा[1] देवता । दैवीगायत्रीछन्दः । सप्तानां व्याहृतीनां [2]विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः । अग्निवाय्वादित्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि । गायत्र्या विश्वामित्र ऋषिः । सविता देवता । गायत्रीछन्दः । गायत्रीशिरसः प्रजापतिर्ऋषिः । ब्रह्माग्निवाय्वादित्या देवताः । यजुश्छन्दः । प्राणायामे विनियोगः । ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजन ॐतपः ॐसत्यम् । ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ॐआपो ज्योती रसोमृतं ब्रह्म भूर्भुवः स्वरोम् । एवं त्रिः । वाय्वाकर्षणनिरोधनविसर्जनेषु ब्रह्मविष्णुरुद्रान्नाभिहृल्ललाटेषु साकारान्ध्यात्वा पुनः पूर्ववद्वायुं विसृजेत् । एवं सर्वत्र प्राणायामः । ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसंध्यामुपा-

---

१ अस्याश्चन्द्रिकाया उपलब्धपुस्तके 'अग्निर्देवता गायत्रीछन्दः' ॥ २ विश्वामित्रभृगुभरद्वाजवसिष्ठगौतमकश्यपाङ्गिरसऋषयः इत्थं पाठावुपलभ्यते परं च किंप्रमाणौ तावित्यनवगमादपराह्णिकग्रन्थविरोधाच्च विचार्यावेव ॥

सिध्ये इति संकल्प्य। आपोहिष्ठेति तृचस्याम्बरीषः सिन्धुद्वीप ऋषिः। आपो देवता गायत्री छन्दः। मार्जने विनियोगः। जलाशये तु तज्जलयुक्तकुशैः शिरस्येव मार्जयेत्। ॐआपो हि ष्ठा मयोभुवः। ॐता न ऊर्जे दधातन। ॐमहे रणाय चक्षसे। ॐयो वः शिवतमो रसः। ॐ तस्य भाजयतेह नः। ॐउशतीरिव मातरः। ॐतस्मा अरंगमाम वः। ॐ यस्य क्षयाय जिन्वथ। इत्यधःक्षिपेत्। ॐआपो जनयथा च नः। इति शिरस्येव क्षिपेत्सर्वाणि मार्जनानि। तथाच भट्टोजीये ब्रह्मा। आपोहिष्ठादिभिः पादैः शिरस्यंसे च विप्रुषः। यस्य क्षयायेत्यधस्तात्क्षिप्त्वाद्भिः परिषेचयेत्। इति। शौनकः। पादे पादे क्षिपेन्मूर्ध्नि प्रतिप्रणवसंयुतम्। अष्टाक्षरं नवं पादं पादान्ते वारि चोत्सृजेत्। अपादान्ते तु यद्वारि तद्वारि रुधिरं भवेत्। इति। गोकर्णाकृतिहस्ते जलं गृहीत्वा सूर्यश्चेत्यस्यानुवाकस्य याज्ञवल्क्य उपनिषद ऋषिः। सूर्यमन्युमन्युपतिरात्रयो देवताः। प्रकृतिश्छन्दः। मन्त्राचमने विनियोगः। ॐसूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्तां। यद्रात्र्या पापमकार्षं। मनसा वाचा हस्ताभ्यां। पद्भ्यामुदरेण शिश्ना। रात्रिस्तदवलुम्पतु। यत्किंच दुरितं मयि। इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा। इत्यभिमन्त्र्य पीत्वाचम्य। ॐइति१ भूर्भुवःस्वःइति२। ॐतत्सवितु०यात्। इति ३ च मार्जनानि कृत्वा। प्रणवेन च व्याहृत्या गायत्र्या प्रणवाद्यया। आपोहिष्ठेति सूक्तेन मार्जनं हि चतुर्थकम्। इति। तत्प्रणवादिप्रत्यृचमृगन्ते शिरस्येव मार्जयेच्छौनकपरिशिष्टादिमतात्। मार्जनानि तु गृहे वामे न्यस्तपात्रजलैर्मार्जयेत्। किंच। कृत्वा तु वामहस्ते वेति परिशिष्टवचनं मृन्मयादिपात्रान्तरासद्भावविषयं बोध्यम्। मृन्मयादि-

पात्रान्तराभावे भूमिष्ठवामे न्यस्तजलैर्वा मार्जयेत् । आपोहिष्ठेति नवर्चस्य सूक्तस्याम्बरीषः सिन्धुद्वीप आपो गायत्री पञ्चमी वर्धमाना सप्तमी प्रतिष्ठा अन्त्ये द्वे अनुष्टुभौ । मार्जने विनियोगः । (७।६।५)ॐआपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ १ ॥ ॐयो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ २ ॥ ॐतस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । अपो जनयथा च नः ॥ ३ ॥ ॐशं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥४॥ ॐईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् ॥५॥ ( १।२।११ ) ॐअप्सु मे सोमो अब्रवीद्-

---

( आपोहिष्ठा ७।६।५ ) हि यस्मात्कारणात् आपः, या यूयं मयोभुवः सुखस्य भावयित्र्यः स्थ भवथ तास्तादृश्यो यूयं नोऽस्मान् ऊर्जेऽन्नाय दधातन धत्त अन्नप्राप्तियोग्यानस्मान्कुरुत । अन्नमस्मभ्यं दत्तेत्यर्थः । महे महते रणाय रमणीयाय चक्षसे दर्शनाय सम्यग्ज्ञानाय च धत्त । अस्मान्सम्यग्ज्ञानं प्रति योग्यान्कुरुतेत्यर्थः ॥१॥—हे आपः, वो युष्माकं स्वभूतो यो रसः शिवतमः सुखतमः इहास्मिंल्लोके तस्य तं रसं नोऽस्मान्भाजयत सेवयत । उपयोजयतेत्यर्थः । तत्र दृष्टान्तः । उशतीरिवोशत्य इव पुत्रसमृद्धिं कामयमाना मातरः स्तन्यं रसं यथा भाजयन्ति प्रापयन्ति तद्वत् ॥ २ ॥—हे आपः, यूयं यस्य पापस्य क्षयाय विनाशायास्मान् जिन्वथ प्रीणयथ तस्मै तादृशाय पापक्षयाय अरं क्षिप्रं वो युष्मान् गमाम गमयाम । वयं शिरसि प्रक्षिपामेत्यर्थः । यद्वा यस्यान्नस्य क्षयाय निवासार्थं यूयमोषधीर्जिन्वथ तर्पयथ तस्मै तदन्नमुद्दिश्य वयं अरं अलं पर्याप्तं यथा भवति तथा वो युष्मान् गमाम गच्छाम । किंच हे आपः, नोऽस्माञ्जनयथ च पुत्रपौत्रादिजनने प्रयोजयतेत्यर्थः ॥ ३ ॥—नोऽस्माकं पापापनोदद्वारेण शं सुखं भवन्तो देवीर्देव्य आपः अभिष्टयेऽस्मद्यज्ञाय भवन्तु । यज्ञाङ्गभावाय च भवन्त्वित्यर्थः । पीतये पानाय च भवन्तु । तथा शं उत्पन्नानां रोगाणां शमनं योः यावनं अनुत्पन्नानां पृथक्करणं च कुर्वन्तु । अपि च नोऽस्माकं अभि उपरि स्रवन्तु शुद्ध्यर्थं सिञ्चन्तु ॥४॥—वार्याणां वारिप्रभवानां व्रीहियवादीनां यद्वा वरणीयानां धनानां ईशाना ईश्वराश्चर्षणीनां मनुष्याणां क्षयन्तीर्निवासयित्रीः अप उदकानि भेषजं । सुखनामैतत् । पापापनोदनं सुखं याचाम्यहं प्रार्थये ॥ ५ ॥—(१।२।११) अप्सु जलेषु अन्तर्मध्ये विश्वानि भेषजा सर्वाण्यौषधानि सन्तीति मे मह्यं मन्त्रदर्शिने मुनये सोमो देवोऽब्रवीत् । तथा विश्वशंभुवं सर्वस्य जगतः सुखकरमेतन्नामकं चाग्निं चाप्सु वर्तमानं सोमोऽब्रवीत् । तथाच तैत्तिरीया अग्नेस्त्रयो ज्यायांस इत्यनुवाके ।

न्तर्विश्वानि भेषजा । अग्निं च विश्वशंभुवम् ॥ ६ ॥ ॐआपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक्च सूर्यं दृशे ॥ ७ ॥ ॐइदमापः प्रवहत यत्किंच दुरितं मयि । यद्वाहमभि दुद्रोह यद्वा शेप उतानृतम् ॥ ८ ॥ ॐआपो अद्यान्वचारिषं रसेन समगस्महि । पयस्वानग्न आ गहि तं मासं सृज वर्चसा

---

सोऽपः प्राविशदित्यग्नेरप्सु प्रवेशमामनन्ति । लतागुल्मवृक्षमूलादीनामोषधीनां वृष्टिजन्यत्वेन जलवर्तित्वं प्रसिद्धम् । विश्वभेषजीः विश्वानि भेषजानि यासु तथाविधा आपोऽप्यब्रवीत् । भेषजा 'सुपां सुलुक्' इत्याकारः । विश्वशंभुवं । भवतेरन्तर्भावितण्यर्थात्क्विप् । व्यत्ययेन पूर्वपदप्रकृतिस्वरत्वम् । यद्वा विश्वे सर्वेऽपि व्यापाराः सुखकरा यस्य । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । आपः । कर्मणि शसि प्राप्ते व्यत्ययेन जस् 'अप्तृन्–' इत्यादिनोपधादीर्घः । विश्वभेषजीर्विश्वशंभुरितिवत् ॥ ६ ॥—हे आपः, मम तन्वे शरीरार्थं वरूथं रोगनिवारकं भेषजमौषधं पृणीत पूरयत । किंच ज्योक् चिरं सूर्यं दृशे द्रष्टुं नीरोगा वयं शक्नवामेति शेषः । पृणीत पॄ पालनपूरणयोः लोण्मध्यमबहुवचनं थ तस्य 'तस्थस्थमिपाम्' इति तादेशः । क्र्यादिभ्यः श्ना । 'प्वादीनां ह्रस्वः' इति ह्रस्वः । 'ई हल्यघोः' इतीत्वं 'ऋवर्णाच्च' इति णत्वं 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति तिङ्स्वरः शिष्यते। आप इत्यस्य'आमन्त्रितं पूर्वमविद्यमानव'दित्यविद्यमानवत्त्वे पादादित्वान्निघाताभावः । वरूथं वृञ् वरणे 'वृङ्वृञ्भ्यामूथन्' नित्वादाद्युदात्तः । तन्वे 'ङिति ह्रस्वश्च' इति नदीसंज्ञा पाक्षिकीत्याडागमाभावः । 'उदात्तयणो हल्पूर्वात्' इति विभक्त्युदात्तत्वे प्राप्ते व्यत्ययेन 'उदात्तस्वरितयोः–' इति स्वरितत्वम्। दृशे। 'दृशे विख्ये च' तुमर्थे निपात्यते ॥७॥—मयि यजमाने यत्किंच दुरितमज्ञानान्निष्पन्नं वाथवा अहं यजमानः अभिदुद्रोह सर्वतो बुद्धिपूर्वकं द्रोहं कृतवानस्मि । वाथ वा शेपे साधुजनं शप्तवानस्मीति यदस्ति उतापिचानृतमुक्तवानिति यदस्ति तदिदं सर्वमपराधजातं हे आपः, प्रवहत मत्तोऽपनीय प्रवाहेणान्यतो नयत । मयि । मपर्यन्तस्य 'त्वमावेकवचने' इति मादेशे कृते 'अतो गुणे' इति पररूपे च सति 'योऽचि' इति दकारस्य यकारादेशः । एकादेशस्वरेण मकारात्परस्याकारस्योदात्तत्वम् । दुद्रोह द्रुह जिघांसायां णलि गुणे द्विर्वचनहस्वहलादिःशेषाः 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । यद्वृत्तयोगान्निघाताभावः । शेपे । शप आक्रोशे लिटि व्यत्ययेन तङ् । उत्तमैकवचनमिट् टेरेत्वं । 'अत एकहल्मध्ये' इत्येत्वाभ्यासलोपौ प्रत्ययस्वरेणान्तोदात्तत्वम् । पूर्ववन्निघाताभावः ॥ ८ ॥—अद्यास्मिन्दिने अवभृथार्थमापोन्वचारिषं जलान्यनुप्रविष्टोऽस्मि । प्रविश्य च रसेन जलसारेण समगस्महि संगताः स्मः । हे अग्ने, पयस्वान्जले वर्तमानत्वेन पयोयुक्तस्त्वं आगह्यस्मिन्कर्मण्यागच्छ । तं मां तादृशं स्नातं मां वर्चसा तेजसा संसृज

॥९॥ससृषीरित्यस्यापोदेवीरनुष्टुप्। मार्जने विनियोगः॥(ॐसं॒-सृषी॑स्त॒दप॑सो॒ दिवा॒ नक्तं॑ च स॒सृषीः॑। वरे॑ण्यक्रतूर॒हमा दे॒वीरव॑से हुवे ॥१॥) एवमेकविंशतिमार्जनानि शौनकपरिशिष्टाच्च कृत्वा। ऋतं चेति तृचस्य माधुच्छन्दसोऽघमर्षणऋषिः।भाववृत्तं देवता। अनुष्टुप्छन्दः। अघमर्षणे विनियोगः। गोकर्णकृतेन दक्षिणपाणिनोदकमादाय ॥(८।९।४८)ॐऋ॒तं च॑ स॒त्यं चा॒भी॑द्धा॒त्तप॒सो-ऽध्य॑जायत। ततो॒ रात्र्य॑जायत॒ ततः॑ समु॒द्रो अ॑र्ण॒वः॥१॥स॒मु॒द्रा-द॑र्ण॒वादधि॑ संवत्स॒रो अ॑जायत। अ॒हो॒रा॒त्राणि॑ वि॒दध॒द्विश्व॑स्य

संयोजय। आपः। कर्मणि शसि प्राप्ते व्यत्ययेन जस्। अचारिषं। चर गत्यर्थः। लुङि च्लेः सिच्। 'आर्धधातुकस्येड्वलादेः' इतीट्। 'नेटि' इति वृद्धिप्रतिषेधे प्राप्ते तदपवादतया 'अतो ल्रान्तस्य' इत्युपधाया वृद्धिः। अगस्महि। 'समो गम्यृच्छि–' इत्यात्मनेपदम्। च्लेः सिच्। 'मन्त्रे घस–' इत्यादिना च्लेर्लुगभावश्छान्दसः। 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेधः। 'वा गमः' इति सिचः कित्वात् 'अनुदात्तोपदेश–' इत्यादिनाऽनुनासिकलोपः। गहि। लोटि गमः सिपो हिः। अपित्त्वेन ङित्वात् 'अनुदात्तोपदेश–' इत्यादिनानुनासिकलोपः। 'अतो हेः' इति लुङ् न भवति। 'असिद्धवदत्राभात्' इति मलोपस्यासिद्धत्वात् ॥ ९ ॥

(ऋतंच८।९।४८)ऋतमिति सत्यनाम।ऋतं मानसं यथार्थसंकल्पनं। सत्यं वाचिकं यथार्थभाषणं। चकाराभ्यामन्यदपि शास्त्रीयं धर्मजातं समुच्चीयते। तत्सर्वमभीद्धादभितसाद्ब्रह्मणा पुरा सृष्ट्यर्थं कृतात्तपसोऽधि उपर्यर्थे उपर्यजायतोदपद्यत। 'स तपस्तप्त्वा इदं सर्वमसृजत' इति श्रुतेः। तपश्चात्र स्रष्टव्यपर्यालोचनलक्षणं 'यस्य ज्ञानमयं तपः' इति श्रुत्यन्तरात्। अभिपूर्वादिन्धेः कर्मणि निष्ठा। 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। 'स्वरितो वानुदात्ते पदादौ' इत्येकादेशः स्वर्यते। यद्वा अभीद्धादभितः प्रकाशमानात्परमात्मनो मायाधिष्ठानरूपादुपादानभूतात् ऋतं सत्यं चाजायत। 'जनिकर्तुः प्रकृतिः' इति प्रकृतेरपादानसंज्ञा। ततस्तस्मादेवेश्वरात् रात्रिः। उपलक्षणमेतदह्नोऽपि। अहश्च रात्रिश्चाजायत। 'रात्रेश्चाजसौ' इति ङीप्। ततस्तस्मादेवेश्वरात् अर्णवोऽर्णसोदकेन युक्तः समुद्रश्चाजायत। समुद्रशब्दोऽन्तरिक्षोदध्योः साधारण इत्यभिमतार्थस्य प्रकाशनायार्णवशब्देन विशेष्यते। 'अर्णसः संलोपश्च' इति मत्वर्थीयो वप्रत्ययः सलोपश्च ॥१॥ अर्णवात्समुद्रात्सृष्टात् अधि ऊर्ध्वं संवत्सरः संवत्सरोपलक्षितः सर्वः कालोऽजायत। श्रूयते हि। 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि कला मुहूर्ताः काष्ठाश्चे'ति। स चेश्वरः अहोरात्राण्येतदुपलक्षितानि सर्वाणि भूतजातानि

१ अयं मन्त्र आह्निककारैर्न संगृहीतः। भाष्यकारैरव्याख्यातश्च।

मिषतो वशी॥२॥सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः॥३॥इति तृचेन तज्जलमनवलोकयन्नासिकान्तं नीत्वा दक्षिणनासाबिलाद्वायुद्वारा पापपुरुषं निःसारितं भावयन् वामभागे ज्वलद्वज्रशिलां विचिन्त्य तस्यां विसृज्याचम्य । गायत्र्या विश्वामित्रः सविता गायत्री। प्रातःसंध्यार्घ्यदाने विनियोगः।इत्युच्चार्य गोकर्णीकृताञ्जलिना अपो गृहीत्वा तिष्ठन्नेव प्राङ्मुखः ॐतत्सवितु० यात्। गोशृङ्गमात्रमूर्ध्वं जल एवार्घ्यजलं प्रक्षिप्य श्रीसूर्याय नमः इदमर्घ्यं समर्पयामि इत्येवं मन्त्रावृत्त्या त्रिरर्घ्यं दत्वा किंचिज्जलं गृहीत्वा । असावादित्यो ब्रह्मेति वदन्सकृत्प्रदक्षिणं परीयन्परिषिञ्च्याप उपस्पृश्य द्विराचम्य । अघमर्षणमेके नेच्छन्ति । मार्जनेनैव तस्य व्यपोह इति परिशिष्टात् । केचिद्वस्त्रोपसंहरणं गायत्रीसंध्यातर्पणं चेच्छन्ति तज्जयन्तस्मृत्यर्थसारादिस्मृतिष्वाह्निकेषु चालिखनान्नावश्यकमिति गृह्यविदः । ततः पूर्ववत्त्रीन्प्राणायामान्कुर्यादिति स्मृत्यर्थसारः । गायत्र्या विश्वामित्रः सविता गायत्री । अशेषदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं जपे विनियोगः । अत्र षडङ्गं कुर्यात् । षडङ्गमात्रैर्विन्यस्य योनिमुद्रां प्रदर्शयेत् । इति शौनकोक्तेः । तद्यथा । ॐभूः हृदयाय नमः । ॐभुवः शिरसे स्वाहा । ॐस्वः शिखायै वषट् । ॐतत्सवितुर्वरेण्यं कवचाय हुं । ॐभर्गो देवस्य धीमहि नेत्रत्रयाय वौषट्। ॐधियो यो नः प्रचोदयात् अस्त्राय फट् । ॐभूर्भुवःस्वरोमिति दिग्बन्धः । ध्यानम् । ऋग्यजुःसामत्रिपदां

---

विदधत्कुर्वन्सृजन् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । ततः समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । मिषतो निमिषादियुक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्तते ॥२॥ सूर्याचन्द्रमसौ कालस्य ध्वजभूतौ दिवं च पृथिवीं चान्तरिक्षं चेत्थं त्रिभुवनं स्वः । स्वःशब्दः सुखवाची दिवो विशेषणम् । सुखरूपां दिवं तदेतत्सर्वं धाता विधाता यथापूर्वं पूर्वस्मिन्कालेऽकल्पयत्सृष्टवान् तथैवागामिन्यपि कल्पे कल्पयिष्यतीत्यर्थः ॥ ३ ॥

ध्यायेद्गायत्रिकां पराम् । तिर्यगूर्ध्वाधरादिस्थां षट्कुक्षिं पञ्चमस्तकाम् ॥ १ ॥ प्रतिवक्रं त्रिनेत्रां तां शरच्चन्द्रसहस्रभाम् । सर्वाभरणभूषाढ्यां शुक्लस्रग्वस्त्रधारिणीम् ॥२॥ रुद्रशिखां ब्रह्मभालामग्निवक्त्रां सुरेश्वरीम् । श्रीविष्णुहृदयां दोर्भिर्धारयन्तीं सुदण्डकम् ॥ ३ ॥ कमण्डलुं चाक्षमालां द्विजानामभयप्रदाम् । त्रैलोक्यचरणां संध्यां सांख्यायनसगोत्रकाम् ॥ ४ ॥ परिशिष्टमतोक्तं हि त्रिसंध्याध्यानमीरितम् । एवं ध्यात्वा जपेद्यस्तु ब्रह्मसायुज्यमाप्नुयात् ॥ ५ ॥ ततो योनिमुद्रां प्रदर्श्यार्धास्तमितेषु नक्षत्रेष्वारभ्य आसूर्यमण्डलदर्शनात्तिष्ठन्नेव प्राङ्मुखः तत्सवितुर्देवस्य वरेण्यं तेजो ध्यायेमहि योऽस्माकं कर्माणि प्रेरयति इति मन्त्रार्थस्मरणं कृत्वा करौ स्वस्तिकरूपौ नाभिदेशे संस्थाप्य प्रावृतवस्त्रेणाच्छाद्य रुद्राक्षादिमालाभिः करमालया वा सप्रणवव्याहृतिकामष्टशतमष्टाविंशतिवारं वा सावित्रीं जपेदर्थानुसंधानेन संख्यापूर्वकं चेति । ॐभूर्भुवः स्वः (३।४।१०) [1]तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् । ॐइति जपेत् । जपान्तेऽपि पूर्वोक्तषडङ्गन्यासं

---

(तत्सवितुः३।४।१०)यः सविता देवः नोऽस्माकं धियः कर्माणि धर्मादिविषया वा बुद्धीः प्रचोदयात्प्रेरयेत् तत्तस्य सर्वासु श्रुतिषु प्रसिद्धस्य द्योतमानस्य सवितुः सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्यात्मभूतं वरेण्यं सर्वैरुपास्यतया ज्ञेयतया च संभजनीयं भर्गः अविद्यातत्कार्ययोर्भर्जनाद्भर्गः स्वयंज्योतिः परमात्मकं तेजः धीमहि तद्योऽहं सोऽसौ योऽसौ सोऽहमिति वयं ध्यायेम । यद्वा तदिति भर्गोवि-

---

१ गायत्रीमन्त्रगतपदविवरणं केनचित्कृतमत्र सुखबोधाय संगृह्यते—**तदित्यवा**ङ्मनोगम्यं ध्येयं यत्सूर्यमण्डले । **सवितुः** सकलोत्पत्तिस्थितिसंहारकारिणः ॥ १ ॥ **वरेण्यम**ाश्रयणीयं यदाधारमिदं जगत् । **भर्गः** स्वसाक्षात्कारेण ह्यविद्याशक्तिदाहकृत् ॥ २ ॥ **देवस्य** ज्ञानरूपस्य स्वानन्दात्क्रीडतोऽपि वा । **धीमह्य**हं स एवेति तेनैवाभेदसिद्धये ॥ ३ ॥ **धियोऽ**न्तःकरणे वृत्तीः प्रत्यक्प्रवणचारिणीः । **य** इत्यलिङ्गगम्यं तत्सत्यज्ञानादिलक्षणम् ॥ ४ ॥ **नोऽ**स्माकं बहुधाभ्यस्तभेदभिन्नधियां पुनः । **प्रचोदयात्** प्रेरयतु प्रार्थनायां विशिष्यते ॥ ५ ॥ इति ॥

कुर्यात् । अयं न्यासादिविधिविशेषोऽवैदिक इति प्रयोगपारिजातकारः । तथा च न्यासादितन्त्रमृग्विधाने स्मृत्यर्थसारादौ च नैव दृश्यते । किंच । एता मुद्रा न जानाति गायत्री निष्फला भवेत् । इत्यादिनिषेधवचनान्यपि गायत्रीपुरश्चरणपराणीत्यवगन्तव्यम् । अन्यथा प्रयोगपारिजातादिषु विरोधः स्यात् । तथा एषोऽङ्गन्यास एतमेके नेच्छन्ति स हि विधिरवैदिक इति गृह्यपरिशिष्टाच्च । अत्रावश्यकं तु । आर्षं छन्दो दैवतं च विनियोगं तथैव च । वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः । इति पारिजातोक्तेश्च । तस्मात्सऋषिदैवतच्छन्दोविनियोगां गायत्रीं जपेदर्थानुसंधानेन संख्यापूर्वकं चेत्यलम् ॥ अथोपस्थानम् । आश्वलायनस्मृतौ । मित्रस्येति चतसृणां गाथिनो विश्वामित्रो मित्रो गायत्री । संध्योपस्थाने विनियोगः (३।४।६) ॐमि॒त्रस्य॑ चर्ष॒णीधृतो॒ वो॑ दे॒वस्य॑ सान॒सि

---

शेषणम् । सवितुर्देवस्य तत्तादृशं भर्गः धीमहि । किं तदित्यपेक्षायामाह य इति लिङ्गव्यत्ययः । सविता सूर्यः धियः कर्माणि प्रचोदयादिति तद्ध्यायेमेति समन्वयः । यद्वा यः सविता सूर्यः धियः कर्माणि प्रचोदयात्प्रेरयति तस्य सवितुः सर्वस्य प्रसवितुर्देवस्य द्योतमानस्य तत् सर्वैर्दृश्यमानतया प्रसिद्धं वरेण्यं सर्वैः संभजनीयं भर्गः पापानां तापकं तेजोमण्डलं धीमहि ध्येयतया मनसा धारयेम । यद्वा भर्गःशब्देनान्नमभिधीयते । यः सविता देवो धियः प्रचोदयति तस्य प्रसादाद्भर्गोऽन्नादिलक्षणं फलं धीमहि धारयामः । तस्याधारभूता भवेमेत्यर्थः । भर्गशब्दस्यान्नपरत्वे धीशब्दस्य कर्मपरत्वे च आथर्वणम् । 'वेदांश्छन्दांसि सवितुर्वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः । कर्माणि धियस्तदु ते प्रब्रवीमि प्रचोदयन्सविता याभिरेति' । इति । भर्गः भ्रस्ज पाके असुन् । 'भ्रस्जो रोपधयोरमन्यतरस्याम्' इति रोपधयोर्लोपः रमागमः । न्यङ्क्वादित्वात्कुत्वम् । धीमहि । ध्यायतेर्लिङि 'बहुलं छन्दसि' इति संप्रसारणम् । व्यत्ययेनात्मनेपदम् । यद्वा धीङ् आधारे लिङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । प्रचोदयात् । चोदयतेर्लेटि आडागमः । यद्वृत्तयोगादनिघातः । आगमस्यानुदात्तत्वे णिचः स्वरः ॥ १० ॥

(मित्रस्य ३।४।६) चर्षणीधृतो मनुष्याणां वृष्टिप्रदानेन धारकस्य मित्रस्य देवस्य

द्युम्नं चित्रश्रवस्तमम् ॥१॥ अभि यो महिना दिवं मित्रो बभूव सप्रथाः । अभि श्रवोभिः पृथिवीम् ॥२॥ मित्राय पञ्च येमिरे जना अभिष्टिशवसे । स देवान्विश्वान्बिभर्ति ॥३॥ मित्रो देवेष्वायुषु जनाय वृक्तबर्हिषे । इष इष्टव्रता अकः ॥४॥ तथा । सायंप्रातरुपस्थानं जातवेदस इत्यृचा । इति ऋग्विधाने शौनकीयात् । जातवेदसे मारीचः कश्यपो जातवेदा अग्निस्त्रिष्टुप् । संध्योपस्थाने विनियोगः(१।७।७)ॐजातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव

---

संबन्धि अवोऽन्नं सानसि सर्वैः संभजनीयं द्युम्नं त्वदीयं धनं च चित्रश्रवस्तममतिशयेन चायनीयकीर्तियुक्तं । सानसि । सनोतेः 'सानसिपर्णसि'इत्यादिना सिच् प्रत्ययान्तत्वेन निपातनादुपधावृद्धिः । चित्त्वादन्तोदात्तः । 'स्वमोः–' इति स्वमोर्लुक् ॥१॥—यो मित्रः महिना स्वकीयेन महिम्ना दिवमन्तरिक्षमभि बभूवाभिभवति स मित्रः सप्रथाः प्रथः प्रसिद्धिः कीर्तिस्तत्सहितः श्रवोभिर्वृष्टिद्वारा उत्पादितैरन्नैः पृथिवीमप्यभिभवति । बह्वन्नयुक्तां करोतीत्यर्थः । सप्रथाः । प्रथ प्रख्याने असुन् । 'वोपसर्जनस्य' इति सहस्य सभावः ॥२॥—पञ्चजनाः निषादपञ्चमाश्चत्वारो वर्णाः अभिष्टिशवसे शत्रूणामभिगन्तृबलयुक्ताय मित्राय येमिरे हवींष्युद्यच्छन्ति स तादृशो मित्रः विश्वान्सर्वान्देवान्बिभर्ति स्वस्वरूपतया धारयति । अभिष्टिशवसे । इषेः 'मन्त्रे वृष–'इत्यादिना क्तिन् । 'तादौ च निति' इत्यभेरन्तोदात्तत्वम् । शकन्ध्वादित्वात्पररूपत्वम् । बहुव्रीहौ पूर्वपदस्वरः ॥३॥—मित्रो भगवानादित्यो देवेषु द्योतमानादिगुणयुक्तेषु आयुषु मनुष्येषु मध्ये यो जनो वृक्तबर्हिः वृक्तं लूनं बर्हिर्येन सः । लवनासादनपूर्वं हविषो दाता । ऋत्विगित्यर्थः । तस्मै वृक्तबर्हिषे जनाय । इष्टव्रताः इष्टानि कल्याणानि व्रतानि कर्माणि याभिः सिद्ध्यन्ति ता इषः तादृशान्यन्नानि अकः करोति । तस्मै ददातीत्यर्थः । वृक्तबर्हिषे । ओव्रश्चू छेदने कर्मणि निष्ठायां 'यस्य विभाषा' इतीट्प्रतिषेधः । बहुव्रीहौ पूर्वपदस्वरः । अकः । करोतेर्लुङि च्लेः 'मन्त्रे वृष–' इत्यादिना लुक् । सिपो हल्ङ्यादिलोपः निघातः ॥ ४ ॥

(जातवेदसे १।७।७)जातवेदसे जातानामुत्पत्तिमतां सर्वेषां वेदित्रे यद्वा जातैः सर्वैः प्राणिभिर्ज्ञायमानाय जातधनाय जातप्रज्ञाय वाग्नये लतारूपं सोमं सुनवामाभिषुणवाम । जातवेदोगुणकमग्निं यष्टुं सोमाभिषवं करवामेत्यर्थः । सोऽग्निः अरातीयतः अरातिं शत्रुमिवास्मानाचरतः शत्रोर्वेदो धनं निदहाति नितरां दहतु भस्मीकरोतु । अपिच सोऽग्निर्नोऽस्मान् विश्वा विश्वानि सर्वाणि दुर्गाणि दुर्गमानि भोक्तुमशक्यानि दुःखानि अतिपर्षदतिपारयतु अतिक्रमय्य दुःखरहितं सुखं प्रापयतु ।

सिन्धुं दुरितात्यग्निः॥१॥तथा। रुद्रवैष्णवैश्च सायंप्रातरुपतिष्ठेदिति स्मृत्यर्थसारः। त्र्यम्बकं मैत्रावरुणिर्वसिष्ठो मृत्युंजयो रुद्रोऽनुष्टुप्। संध्योपस्थाने विनियोगः। (५।४।३०)ॐत्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥१॥ परिशिष्टात्। तच्छंयोः शंयुर्विश्वेदेवाः शक्करी। संध्यो०। ॐतच्छंयोरा वृणीमहे गातुं यज्ञाय गातुं यज्ञपतये

---

तत्र दृष्टान्तः। नावेव सिन्धुं यथा कश्चित्कर्णधारो ग्रहादिभिर्दुष्टसत्त्वैराकुलितां नदीं नावा तारयति तद्वत्तथा दुरिता दुरितानि दुःखहेतुभूतानि पापान्यस्मानग्निरतिपारयतु। दुःखनिमित्तात्पापादस्मानुत्तारयत्वित्यर्थः। अत्र निरुक्तम् 'जातवेदाः कस्माज्जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति हि ब्राह्मणम्' इत्यादि। जातवेदसे जातानि वेत्तीति जातवेदाः। 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति वचनात्कारकपूर्वाद्वेत्तेरसुन् पूर्वपदप्रकृतिस्वरत्वम्। अरातीयः न विद्यते रातिर्दानमस्मिन्नित्यरातिः शत्रुः तमिवास्मानाचरति 'उपमानादाचारे'इत्युपमानभूतात्कर्मणः क्यच्। क्यजन्ताल्लटः शतृ 'शतुरनुमः' इति शस उदात्तत्वम्। दहाति दह भस्मीकरणे लेट्याडागमः। वेदः विद्यते लभ्यत इति वेदो धनं विद्लृ लाभे औणादिकः कर्मण्यसुन्। पर्षत् पॄ पालनपूरणयोः अस्मादन्तर्भावितण्यर्थाल्लेट्याडागमः 'सिब्बहुलं लेटि' इति सिप्। दुर्गाणि दुःखेन गम्यते येष्विति 'सुदुरोरधिकरणे' इति गमेर्डः॥ १॥

(त्र्यम्बकं५।४।३०) अत्र शौनकः। त्रिरात्रनियतोपोष्य श्रपयेत्पायसं चरुम्। तेनाहुतिशतं पूर्णं जुहुयाच्छंसितव्रतः। समुद्दिश्य महादेवं त्र्यम्बकं त्र्यम्बकेत्यृचा। एतत्पर्वशतं कृत्वा जीवेद्वर्षशतं सुखी। त्रयाणां ब्रह्मविष्णुरुद्राणामम्बकं पितरं यजामह इति शिष्यसमाहितो वसिष्ठो ब्रवीति। किंविशिष्टमित्यत आह। सुगन्धिं प्रसारितपुण्यकीर्तिं। पुनः किंविशिष्टं। पुष्टिवर्धनं जगद्बीजं। पुरुशक्तिमित्यर्थः। उपासकस्य वर्धनमणिमादिशक्तिवर्धनं। अतस्त्वत्प्रसादादेव मृत्योर्मरणात्संसाराद्वा मुक्षीय मोचय। यथा बन्धनात् उर्वारुकं कर्कटीफलं मुच्यते तद्वन्मरणात्संसाराद्वा मोचय। किं मर्यादीकृत्य। आऽमृतात्। सायुज्यतामोक्षपर्यन्तमित्यर्थः॥ अथ तैत्तिरीयभाष्ये॥ शोभनः शरीरगन्धः पुण्यगन्धो वा यस्यासौ सुगन्धिः। यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वातीति श्रुतेः। पुष्टिं शरीरं धनादिविषयां वर्धयतीति पुष्टिवर्धनस्तादृशं त्र्यम्बकं यजामहे पूजयामः। लोके यथोर्वारुकफलानि बन्धनाद्वृन्तात्स्वयमेव मुच्यन्ते तद्वदहं त्र्यम्बकप्रसादेन मृत्योर्मुक्षीय मोचयन्मुक्तो भूयासम्। अमृताच्चिरजीवितात्स्वर्गाद्वा मा मुक्षीय॥ १॥

दैवीं स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे ॥ नमो ब्रह्मणे वामदेव्यः प्रजापतिर्वा लिङ्गोक्ता देवता त्रिष्टुप् । संध्योपस्थाने विनियोगः । ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमि ॥ इति मान्त्राभ्यां चोपतिष्ठेदिति शौनकः । प्रदक्षिणामन्त्रास्तु । व्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती । जपदोषापनुत्तये प्रदक्षिणावर्तने विनियोगः । ॐभूः ॐभुवः ॐस्वः ॐभूर्भुवः स्वः इति चतसृभिर्व्याहृतिभिश्चतस्रः प्रदक्षिणाः कुर्यात् । तथाचाश्वलायनस्मृतौ । चतुःप्रदक्षिणं कुर्याज्जपदोषापनुत्तये । तस्माद्भूरिदमित्युक्त्वा कुर्यात्पूर्वप्रदक्षिणाम् । भुवःस्वर्भूर्भुवः स्वश्च चतुर्वारं पृथक्पृथक् । इति । इदं प्रदक्षिणावर्तनमन्यत्र (७।७।२)भद्रं नो अपि वातय मनः इति मन्त्रेण त्रिरुक्तम्।कचिच्च मार्जनाघमर्षणयोरन्तरा भद्रं न इति मन्त्रस्यैन्द्रो विमदऋषिः अग्निः परमात्मा देवता एकपदा विराट् छन्दः । आत्मपरिषेचने विनियोग इति विनियुज्यानेनैव मन्त्रेण त्रिःपरिषेचनमुक्तम् । ततो दक्षिणावृद्दिशोपस्थानं कुर्यात् । नमः प्राच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्ति एताभ्यश्च नमः । नमो दक्षिणायै दिशे याश्च देवता एतस्यां प्रतिवसन्ति एताभ्यश्च नमः । नमः प्रतीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्ति एताभ्यश्च नमः । नम उदीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्ति एताभ्यश्च नमः । नम ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसन्ति एताभ्यश्च नमः । नमो गङ्गायमुनयोर्मध्ये ये वसन्ति ते मे प्रसन्नात्मानश्चिरं जीवितं वर्ध-

---

(७।७।२) हे अग्ने, त्वं नोऽस्माकं मनः भद्रं शुभयुक्तं अपिवातय । अपिरत्र धात्वर्थानुवादी । आगमय । त्वत्संबन्धिस्तोत्रकरणे प्रेरयेत्यर्थः ।

यन्तु । नमो गङ्गायमुनयोर्मुनिभ्यश्च नमः । संध्यायै नमः । गायत्र्यै नमः । सावित्र्यै नमः । सरस्वत्यै नमः । सर्वाभ्यो देवताभ्यो नमः । कामोऽकार्षीन्मन्युरकार्षीन्नमो नमः । यां सदा सर्वभूतानि स्थावराणि चराणि च । सायं प्रातर्नमस्यन्ति सा मा संध्याभिरक्षतु । आकाशात्पतितं तोयं यथा गच्छति सागरम् । सर्वदेवनमस्कारः केशवं प्रति गच्छति । नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः । इत्यादिश्लोकास्त्वाचारादिति स्मृत्यर्थसारः । ततः । पित्राद्यभिवादनम् । तद्यथा । वामपाददक्षिणजानु शिरश्च भूमौ निधाय स्वस्तिकीकृतहस्ताभ्यां कर्णौ स्पृष्ट्वा शिरोवनमनं कृत्वा स्वगोत्रं नाम चोच्चार्याचार्यादीनभिवादयेदित्याकरदर्शनात् ॥ तथा । काश्यपावत्सारनैध्रुवेति त्रिप्रवरान्वितामुकगोत्रोत्पन्नो ऋग्वेदान्तर्गतशाकलशाखाध्यायी अमुकशर्मा अहं भो अभिवादये । एवं स्वस्वगोत्रनामान्युच्चार्याभिवादयेदिति सांप्रदायिकाः । साग्निस्त्वर्घ्यदानान्ते प्रागुदयादग्निं प्रादुष्कृत्य[1] उत्तरं चोपक्रम्य जपाद्यर्धोदिते सूर्ये संध्यां समाप्य द्विराचामेत् । इति प्रातःसंध्याविधिः ॥

## अथाशौचे संध्याविधिः ।

विष्णुस्मृतौ । अर्घ्यान्ता मानसी संध्या[2] ज्ञेया प्रणववर्जिता । इति । पारिजाते भरद्वाजः । सूतके मृतके कुर्यात्प्राणायाममन्त्रकम् । तथा मार्जनमन्त्रांश्च मनसोच्चार्य मार्जयेत् ॥ गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् । मार्जनं तु न वा कार्यमुपस्थानं नचैव हि । इति । आश्वलायनानां तु गायत्रीजपप्राधान्यात्तैरर्घ्यान्तं कृत्वा दशसंख्यया गायत्री जप्या ।

१ प्रादुष्करणं प्रज्वालनम् । २ संध्या प्राणायामविवर्जिता इति पाठः ।

उक्तं चाश्वलायनस्मृतौ । आपन्नश्चाशुचौ काले तिष्ठन्नपि जपेद्दश । इति । आपन्नो नाम आपद्ग्रस्तः तं प्रति अग्निस्मृतावङ्गान्तरहानेऽप्यर्घ्यस्यावश्यकतोक्ता । जलाभावे महामार्गे बन्धने त्वशुचावपि । उभयोः संध्ययोः काले रजसा (धूल्या) वार्घ्यमुत्सृजेत् । अशुचौ आशौच इत्यर्थः । इत्याशौचे संध्याविधिः ॥

## अथौपासनहोमप्रयोगः ।

बहिः कर्माङ्गाचमनं कृत्वा प्रादुष्कृतस्याग्नेः पश्चादुपविश्य पवित्रे धृत्वा प्राणानायम्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातरौपासनहोमं करिष्ये इति संकल्प्याग्नेरीशानीं दिशमारभ्य प्रदक्षिणं त्रिरम्भसा परिसमुह्य षोडशदर्भैः पूर्वादिषु परिस्तीर्य पुनःपुनरुदकमादाय त्रिःपर्युक्ष्य प्रक्षालितानार्द्रसिततण्डुलान्पात्रे निक्षिप्य तत्पात्रमग्नेरुत्तरतो निधाय ज्वलता दर्भोल्मुकेनावज्वल्य प्रोक्ष्य तेनैव त्रिः पर्यग्निकृत्वा तदुल्मुकं निरस्याप उपस्पृश्याग्नेः पश्चिमतः कुशानास्तीर्य तत्र समिधा सह हविर्निधाय । विश्वानिन इति तृचस्यात्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् द्वयोरर्चनेऽन्त्याया उपस्थाने विनियोगः । ॐविश्वा॑नि नो दु॒र्गहा॑ जातवेदः । ॐसिन्धुं॒ न ना॒वा दु॑रि॒ताति॑पर्षि । ॐअग्ने॑ अत्रि॒वन्नम॑सा गृणा॒नः । ॐअ॒स्माकं॑ बोध्यवि॒ता त॒नूना॑म् ॥ १ ॥ ॐयस्त्वा॑ हृ॒दा की॒रिणा॒ मन्य॑मानः । ॐअम॑र्त्यं॒ मर्त्यो॒ जोह॑वीमि । ॐजात॑वेदो॒ यशो॑ अ॒स्मासु॑ धेहि ।

---

(३।८।१९) हे जातवेदः, नोऽस्माकं दुर्गहा दुःखेन ग्राह्याणि दुःखेन भोग्यानि विश्वानि दुरितान्यतिपर्ष्यतिपारय । सिन्धुं न नावा नदीं नाविको यथा तद्वत् । हे अग्ने, अत्रिवदत्रेर्यथा तथा नोऽस्माकं नमसा स्तोत्रेण गृणानः स्तूयमानः सन् नोऽस्माकं तनूनामविता रक्षको बोधि बुध्यस्व ॥१॥—यो मर्त्यो मरणधर्माहं अमर्त्यमनाशं त्वा त्वां कीरिणा स्तुत्यादिषु विक्षिप्तेन हृदा हृदयेन युक्तो मन्यमानः स्तुवन् जोहवीम्यत्यर्थमाह्वयामि । यद्वा स्तोतृवाचकेन कीरिणाशब्देन स्तुतिरुपलक्ष्यते । स्तुतियुक्तेन मनसा त्वामन्नप्रदं मन्यमानो जोहवीमि । हे जातवेदः, यशोधनं प्रजां वास्मासु धेहि । प्रजाभिस्त्वद्दत्ताभिः हे अग्ने, अहममृतत्वं संतत्यविच्छेद-

ॐप्रजाभिरग्ने अमृतत्वमश्याम् ॥२॥ इत्यायतनमष्टदिक्षु क्रमेण गन्धाद्यैरलंकृत्य । यस्मै त्वं सुकृते जातवेद उलोकमग्ने कृणवः स्योनम् । अश्विनं सपुत्रिणं वीरवन्तं गोमन्तं रयिं नशते स्वस्ति ॥३॥ इत्युपस्थाय दक्षिणं जानु संपात्य तां समिधं तूष्णीमग्नौ प्रक्षिप्याप उपस्पृश्य समिधि प्रदीप्तायां विधूमज्वालायां अङ्गारेऽग्नौ शतसंख्याकान् चतुःषष्टिमितान्वा तण्डुलान्दक्षिणहस्तेनादाय सव्यपाणिं हृदि निधायाङ्गुल्युत्तरपार्श्वेन समिन्मूलतो द्व्यङ्गुलप्रदेशे सूर्याय स्वाहेति हुत्वा सूर्यायेदं नममेत्युक्त्वा वाग्यत एवं द्वितीयां भूयसीमादाय प्रजापतये इत्युपांशु ध्यात्वा स्वाहेत्युक्त्वा तस्यैशानदेशेऽसंसृष्टां जुहुयात् । त्यागोप्याहुतिवत् । ततो वायव्यदेशे प्रह्वीभूतः स्थित्वा कृताञ्जलिरग्निमीक्षमाणः । ॐ च मे स्वरश्च मे यज्ञोप च ते नमश्च । यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नमः । इत्युपतिष्ठेत् । यद्वा । सायंप्रातरग्ने त्वं न इति चतसृभिर्वोपतिष्ठेदिति शौनकः । विस्तरस्तु प्रयोगपारिजाते । सूर्योनोदिवस्पात्वित्यस्य चक्षुः सूर्यो गायत्री । सूर्योपस्थाने विनियोगः । ॐसूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः । उदुत्यं प्रस्कण्वः सूर्यो गायत्री । सूर्योपस्थाने विनियोगः । ॐउदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । चित्रं देवानां कुत्सः सूर्यस्त्रिष्टुप् । सूर्योपस्थाने विनियोगः । ॐचित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य

---

लक्षणं अश्यां प्राप्नुयाम् । 'प्रजामनु प्रजायसे तदु ते मर्त्यामृतम्' इति हि श्रुतिः ॥२॥ हे जातवेदोऽग्ने, त्वं यस्मै सुकृते सुकर्मणे यजमानाय । उ इति पादपूरणः । लोकं स्योनं सुखकरं कृणवोऽकरोः । यद्वा लोकमालोकेन स्योनं कृणवः । अनुग्रहेण कुर्वित्यर्थः । स यजमानोऽश्विनं बह्वश्वोपेतं पुत्रिणं बहुपुत्रोपेतं वीरवन्तं वीरैर्वीर्येण वोपेतं गोमन्तं रयिं धनं नशते प्राप्नोति स्वस्त्यविनश्वरम् ॥ ३ ॥

वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च । नमोमित्रस्य सूर्योऽभितपाः सूर्यो जगती । सूर्योपस्थाने विनियोगः । ॐ नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत । दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । प्रजापत्युपस्थानेविनियोगः (८।७।४) ॐप्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् । तत उपविश्य परिस्तरणं विसृज्य पर्यूहनोक्षणे कुर्यादिति । अनुष्ठानक्रमः श्रौतवृत्तौ कारिकायां स्थालीपाकप्रकरणे स्मृत्यर्थसारे चावगन्तव्यः । परिस्तरणं विसृज्य पर्यूहनोक्षणे कुर्यादिति शौनकः । तत्रोपासनजं भस्मादाय पूर्वोक्तप्रकारेण धृत्वाग्निं प्रार्थयेत् । ॐस्वस्ति । श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् । आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन । प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः । मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन । यद्धुतं तु मया देव परिपूर्णं तदस्तु मे । यस्य स्मृत्या च नामोक्त्या तपोहोमक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् । अनेन प्रातरौपासनेन श्रीपरमेश्वरः प्रीयताम् । अत्र समित्प्रक्षेपणं वैकल्पिकमिति जयन्तः । नित्यहोमपरिस्तरणानां त्यागाभावःपुनः पुनरुपयुंज्यादिति च । पत्नी-

---

(प्रजापतेन ८।७।४) हे प्रजापते, त्वत्त्वत्तोऽन्यः कश्चित् एतानीदानीं वर्तमानानि विश्वा विश्वानि सर्वाणि । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । जातानि प्रथमविकारभाञ्जि ता तानि सर्वाणि भूतजातानि न परिबभूव न परिगृह्णाति न व्याप्नोति । त्वमेतानि परिगृह्य स्रष्टुं शक्नोषीति भावः । परिपूर्वो भवतिः परिग्रहार्थः । वयं च यत्कामा यत्फलं कामयमानास्ते तुभ्यं जुहुमो हवींषि प्रयच्छामस्तत्फलं नोऽस्माकं अस्तु भवतु । तथा वयं च रयीणां धनानां पतय ईश्वराः स्याम भवेम । 'नामन्यतरस्याम्' इति नाम्न उदात्तत्वम् ॥ १ ॥

कुमार्योरमन्त्रकमुपस्थानं परिस्तरणवर्ज्यं चेति स्मृत्यर्थसारादयः। आशौचे त्वसगोत्रद्वारा होमं कारयेत्। यजमान उद्देशत्यागौ कुर्यात्। अथवाशौचान्ते स्वयं चतुर्गृहीतमाज्यं गृहीत्वा मनस्वत्येकाहुत्या सर्वप्रायश्चित्तं च हुत्वातीतान् जुहुयात् (इति)आश्वलायनः। अग्न्यनुगते तु भूसंस्काराद्यग्निप्रतिष्ठान्तं कृत्वा पवित्रोत्पत्तिपूर्वकमाज्यं संस्कृत्यायाश्चेति स्रुवाहुतिं सर्वप्रायश्चित्ताहुतिं च हुत्वा यथापूर्वं जुहुयात्। संग्रहे जातूकर्ण्यः। सूतके तु समुत्पन्ने स्मार्तं कर्म कथं चरेत्। पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत्। पिण्डयज्ञः पिण्डपितृयज्ञः। चरुः स्थालीपाकः श्रवणाकर्म चेति विज्ञानेश्वरः। निर्णयसिन्धावप्येवम्। संग्रहे। वैश्वदेवं तथा श्राद्धं ब्रह्मयज्ञं च सूतके। न कुर्यात्स्वयमन्यैश्च कारयेन्न तु सर्वथा। इति संक्षिप्तौपासनविधिः॥ अथ ब्रह्मचारी सायं वक्ष्यमाणवत्प्रातरग्निकार्यं कुर्यात्॥

## अथ सौरसूक्तानि।

उदुत्यमिति त्रयोदशर्चस्य सूक्तस्य काण्वः प्रस्कण्वः सूर्यो नवाद्या गायत्र्योन्त्याश्चतस्रोऽनुष्टुभोन्त्यस्तृचो रोगघ्न उपनिषदन्त्योर्धर्चो द्विषघ्नः। चित्रंदेवानामिति षळर्चस्य सूक्तस्य आङ्गिरसः कुत्सः सूर्यस्त्रिष्टुप्। इन्द्रं मित्रमिति द्वयोरौचथ्यो दीर्घतमाः सूर्यस्त्रिष्टुप्। हंसः शुचिषदित्यस्य गौतमो वामदेवः सूर्यो जगती। यत्त्वेति भौमात्रिः सूर्योऽनुष्टुप्। यदद्येत्येका उत्सूर्य इति तिस्रः उद्वेतीति चतस्रोर्धपञ्चमाः एतासां मैत्रावरुणिर्वसिष्ठः सूर्यस्त्रिष्टुप्। उदुत्यदर्शतमिति तृचस्य मैत्रावरुणिर्वसिष्ठः सूर्यः आद्या बृहती द्वितीया सतोबृहती तृतीया पुरउष्णिक्। बण्महानिति द्वयोर्भार्गवो जमदग्निः

सूर्यो बार्हतप्रगाथः। नमोमित्रस्येति द्वादशर्चस्य सूक्तस्य सौर्योभितपाः सूर्यो जगती दशमी त्रिष्टुप्। सूर्योन इति पञ्चर्चस्य सूक्तस्य सौर्यश्चक्षुः सूर्यो गायत्री। विभ्राड्बृहदिति चतुर्ऋचस्य सूक्तस्याभितपाःसूर्यः सौर्यो जगती अन्त्या प्रस्तारपङ्क्तिः। आयंगौरिति तृचस्य सार्पराज्ञी सूर्यो गायत्री। ऋतं चेति तृचस्य माधुच्छन्दसोऽघमर्षणो भाववृत्तमनुष्टुप्। श्रीसवितृसूर्यनारायणप्रीत्यर्थं सौरसूक्तमन्त्रजपे विनियोगः। (१।४।७)

ॐउदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्॥ १॥ अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः। सूराय

---

(उदुत्यं १।४।८) उदुत्यमिति त्रयोदशर्चं सप्तमं सूक्तं प्रस्कण्वस्यार्षं सूर्यदेवत्यं आदौ नव गायत्र्यः शिष्टाश्चतस्रोऽनुष्टुभ इत्युक्तम्। तथा चानुक्रान्तम्। उदुत्यं सप्तोना सौर्यं नवाद्या गायत्र्य इति। आश्विनशस्त्रे सौर्ये क्रतौ उदुत्यमित्यादयो नवर्चः शंसनीयाः संस्थितेष्वाश्विनायेति खण्डे सूत्रितम्। सूर्यो नो दिवः उदुत्यं जातवेदसमिति नवेति॥—केतवः प्रज्ञापकाः सूर्याश्वाः। यद्वा सूर्यरश्मयः सूर्यं सर्वस्य प्रेरकमादित्यं उदु वहन्ति ऊर्ध्वं वहन्ति। उ इति पदपूरणः। उक्तं च। मिताक्षरेष्वनर्थकाः कमीमिद्युतीति। किमर्थं। विश्वाय विश्वस्मै भुवनाय दृशे द्रष्टुं। यथा सर्वे जनाः सूर्यं पश्यन्ति तथोर्ध्वं वहन्तीत्यर्थः। कीदृशं सूर्यं। त्यं प्रसिद्धं जातवेदसं जातानां संजातानां प्राणिनां वेदितारं जातप्रज्ञं जातधनं वा देवं द्योतमानं। अत्र निरुक्तं। उद्वहन्ति तं जातवेदसं देवमश्वाः केतवो रश्मयो वा सर्वेषां भूतानां संदर्शनाय सूर्यमिति। जातवेदसं जातानि वेत्तीति जातवेदाः। 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च। दृशे 'दृशे विख्ये च' इति तुमर्थे निपातितः। सूर्यं 'राजसूयसूर्य–' इत्यादिना षू प्रेरणे इत्यस्मात्क्यप् रुडागमसहितो निपातितः। अतः प्रत्ययस्य पित्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम्॥ १॥–त्ये तायवो यथा प्रसिद्धास्तस्करा इव नक्षत्रा नक्षत्राणि देवग्रहरूपा वै नक्षत्राणीति श्रुत्यन्तरात्। यद्वा इह लोके कर्मानुष्ठानेन ये स्वर्गं प्राप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते। तथाच श्रूयते। यो वा इह यजते अमुं लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वमिति। यद्वा तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते। सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणीत्याम्नानात्। यास्कस्त्वाह। नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि क्षत्राणीति च ब्राह्मणमिति। तथाविधानि नक्षत्राणि अक्तुभी रात्रिभिः सह अपयन्त्यपगच्छन्ति। विश्वचक्षसे विश्वस्य सर्वस्य प्रकाशकस्य सूराय। सूर्यस्य आगमनं दृष्ट्वेति शेषः। तस्करा नक्षत्राणि च रात्रिभिः सह सूर्य

वि॒श्वच॑क्षसे॥२॥अदृ॑श्रमस्य के॒तवो॒ वि र॒श्मयो॒ जनाँ॒ अनु॑। भ्राज॑न्तो अ॒ग्नयो॑ यथा॥३॥ त॒रणि॑र्वि॒श्वद॑र्शतो ज्योति॒ष्कृद॑सि सूर्य।

आगमिष्यतीति भीत्या पलायन्त इत्यर्थः। तायुरिति स्तेननाम। तायुः तस्करः इति तन्नामसु पाठात्। अक्तुरिति रात्रिनाम। शर्वरी अक्तुः इति तत्र पाठात्। यथा 'यथेति पादान्ते' इति सर्वानुदात्तत्वम्। नक्षत्रा नक्ष गतौ 'अमिनक्षियजि' बन्धिपतिभ्योऽत्रन्'इत्यत्रन्प्रत्ययः। नित्वादाद्युदात्तत्वम्। 'नभ्राण्नपात्' इत्यत्र वृत्तौ त्वेवमुक्तम्। न क्षरति न क्षीयत इति वा नक्षत्रम्। क्षीयतेः क्षरतेर्वा नक्षत्रमिति निपात्यत इति। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। यन्ति इण् गतौ 'इणो यण्' इति यणादेशः। सूराय विश्वचक्षसे विश्वं चष्टे प्रकाशयतीति विश्वचक्षाः 'चक्षेर्बहुलं शिच्च' इत्यसुन्प्रत्ययः। शित्त्वेन सार्वधातुकत्वात्ख्याञादेशाभावः। 'उभयत्र षष्ठ्यर्थे चतुर्थी वक्तव्या'इति चतुर्थी॥२॥––अस्य सूर्यस्य केतवः प्रज्ञापका रश्मयो दीप्तयः जनांअनु अदृश्रं जातानुक्रमेण प्रेक्षन्ते। सर्वं जगत्प्रकाशयन्तीत्यर्थः। तत्र दृष्टान्तः। भ्राजन्तो दीप्यमानाः अग्नयो यथाग्नय इव। अदृश्रं दृशिर् प्रेक्षणे वर्तमाने लुङि 'इरितो वा' इति च्लेरङादेशः। रुडित्यनुवृत्तौ 'बहुलं छन्दसि' इति रुडागमः। अत एव बहुलवचनात् 'ऋदृशोऽङि गुणः' इति गुणाभाव इत्युक्तम्। 'तिङां तिङो भवन्ति' इति प्रथमपुरुषबहुवचनस्योत्तमपुरुषैकवचनादेशः। प्रथमपुरुष एव शाखान्तरे श्रूयते। अदृश्रमस्य केतव इति। जनानित्यस्य नकारस्य संहितायां रुत्वयत्वादि पूर्ववत्। भ्राजन्तः। शपः पित्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते॥३॥––हे सूर्य, त्वं तरणिस्तरिता अन्येन गन्तुमशक्यस्य महतोऽध्वनो गन्तासि। तथाच स्मर्यते। 'योजनानां सहस्रे द्वे द्वे शते द्वे च योजने। एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते' इति। यद्वा उपासकानां रोगात्तारयितासि आरोग्यं भास्करादिच्छेदिति स्मरणात्। तथा विश्वदर्शतः विश्वैः सर्वैः प्राणिभिर्दर्शनीयः। आदित्यदर्शनस्य चाण्डालादिदर्शनजनितपापनिर्हरणहेतुत्वात्। तथा चापस्तम्बः। दर्शने ज्योतिषां दर्शनमिति। यद्वा विश्वं सकलं भूतजातं दर्शतं द्रष्टव्यं प्रकाश्यं येन स तथोक्तः। तथा ज्योतिष्कृज्ज्योतिषः प्रकाशस्य कर्ता। सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः। यद्वा चन्द्रादीनां रात्रौ प्रकाशयिता। रात्रौ हि अम्मयेषु चन्द्रादिबिम्बेषु सूर्यकिरणाः प्रतिफलिताः सन्तोऽन्धकारं निवारयन्ति, यथा द्वारस्थदर्पणोपरि निपतिताः सूर्यरश्मयो गृहान्तर्गतं तमो निवारयन्ति तद्वदित्यर्थः। यस्मादेवं तस्माद्विश्वं व्याप्तं रोचनं रोचमानमन्तरिक्षं आ समन्ताद्भासि प्रकाशयसि। यद्वा हे सूर्य, अन्तर्यामितया सर्वस्य प्रेरक परमात्मन्, तरणिः संसाराब्धेस्तारकोऽसि। यस्मात्त्वं विश्वदर्शतः विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः। साक्षात्कर्तव्य इत्यर्थः। अधिष्ठानसाक्षात्कारे ह्यारोपितं निवर्तते। ज्योतिष्कृत् ज्योतिषः सूर्यादेः कर्ता। तथा चाम्नायते। चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत इति। ईदृशस्त्वं चिद्रूपतया विश्वं सर्वं दृश्यजातं रोचनं दीप्यमानं यथा भवति तथा आभासि प्रकाशयसि। चैतन्यस्फुरणे हि सर्वं जगद्दृश्यते। तथा चाम्ना-

विश्वमा भासि रोचनम् ॥४॥ प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ् विश्वं स्वर्दृशे ॥५॥१॥ येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ॥६॥ वि द्यामेषि रज-

---

यते । 'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति । तरणिः तॄ प्लवनतरणयोः अस्मादन्तर्भावितण्यर्थात् 'अर्तिसृधृधम्यश्यवितृभ्योऽनिः' इत्यनिप्रत्ययः । प्रत्ययाद्युदात्तत्वम् । ज्योतिः करोतीति ज्योतिष्कृत् 'क्विप्च' इति क्विप् । 'नित्यं समासेऽनुत्तरपदस्थस्य' इति विसर्जनीयस्य षत्वम् । भासि भा दीप्तौ अन्तर्भावितण्यर्थाल्लटि अदादित्वाच्छपो लुक् ॥ ४ ॥—हे सूर्य, त्वं देवानां विशः मरुन्नामकान्देवान् । 'मरुतो वै देवानां विशः' इति श्रुत्यन्तरात् । तान्मरुत्संज्ञकान्देवान् , प्रत्यङ्ङुदेषि प्रतिगच्छन्नुदयं प्राप्नोषि तेषामभिमुखं यथा भवति तथेत्यर्थः । तथा मानुषान्मनुष्यान्प्रत्यङ्ङुदेषि तेऽपि यथास्मदभिमुख एव सूर्य उदेतीति मन्यन्ते तथा विश्वं व्याप्तं स्वः स्वर्लोकं दृशे द्रष्टुं प्रत्यङ्ङुदेषि । यथा स्वर्लोकवासिनो जनाः सर्वेपि स्वस्वाभिमुख्येन पश्यन्ति तथोदेषीत्यर्थः । एतदुक्तं भवति । लोकत्रयवर्तिनो जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति । तथा चाम्नायते । तस्मात्सर्व एव मन्यते मां प्रत्युदगादिति । प्रत्यङ् प्रत्यञ्चतीति प्रत्यङ् । अञ्चु गतिपूजनयोः 'ऋत्विक्'इत्यादिना क्विन् 'अनिदिताम्–'इति नलोपः 'उगिदचाम्' इति नुम् । हल्ङ्यादिसंयोगान्तलोपौ । संयोगान्तलोपस्यासिद्धत्वादुपधादीर्घनलोपयोरभावः । 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् । 'अनिगन्तेऽञ्चतौ' इत्यत्रानिगन्त इति पर्युदासात्पूर्वपदप्रकृतिस्वराभावे कृदुत्तरपदप्रकृतिस्वरत्वम् । एषि इण् गतौ सिपि अदादित्वाच्छपो लुक् 'आदेशप्रत्यययोः' इति षत्वम् । स्वः सुपूर्वादर्तेर्विच् गुणे यणादेशः । 'न्यङ्स्वरौ स्वरितौ च' इति स्वरितत्वम् । दृशे दृशिर् प्रेक्षणे इत्यस्मात् 'दृशे विख्ये च' इति तुमर्थे निपातितः ॥५॥—हे पावक, सर्वस्य शोधक वरुण, अनिष्टनिवारक सूर्य, त्वं जनान् जातान्प्राणिनः भुरण्यन्तं धारयन्तं पोषयन्तं वा इमं लोकं येन चक्षसा प्रकाशेनानुपश्यस्यनुक्रमेण प्रकाशयसि तं प्रकाशं स्तुम इति शेषः । यद्वोत्तरस्यामृचि संबन्धः । तेन चक्षसा व्येषीति । तथाच यास्केनोक्तम् । तत्ते वयं स्तुम इति वाक्यशेषोपि वोत्तरस्यामन्वयस्तेन व्येषीति । भुरण्यन्तं भुरण धारणपोषणयोः कण्ड्वादित्वाद्यक् । ततः शतरि कर्तरि शप् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते । वरुण वृञ् वरणे अस्मादन्तर्भावितण्यर्थात् 'कृवृदारिभ्य उनन्' इति उनन्प्रत्ययः । अत्र वरुणशब्देनादित्य एवोच्यते । तथाचान्यत्राम्नातम् । तस्यैव मित्रश्च वरुणश्चाजायेतामिति । मित्रश्च वरुणश्च धाता चार्यमा चेति ॥६॥—हे सूर्य, त्वं पृथु विस्तीर्णं रजो लोकं । लोका रजांस्युच्यन्त इति यास्कः । कं लोकं द्यामन्तरिक्षलोकं व्येषि विशेषेण गच्छसि । किंकुर्वन् । अहः अहानि अक्तुभी रात्रिभिः सह मिमान उत्पादयन् आदित्यगत्यधीनत्वादहोरात्रविभागस्य तथा जन्मानि जननवन्ति भूतजातानि पश्यन्प्रकाशयन् । रजस्पृथिव्यत्र 'छन्दसि वा प्राम्रेडितयोः' इति विसर्जनीयस्य सत्व-

स्पृथ्वहा मिमानो अक्तुभिः । पश्यन्जन्मानि सूर्य ॥७॥ सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण ॥८॥ अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः । ताभिर्याति स्वयुक्तिभिः॥९॥ उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्य-

---

म् । अहा 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । मिमानः माङ् माने जौहोत्यादिकः । शानचि श्लौ द्विर्भावे 'भृञामित्' इत्यभ्यासस्येत्वम् । 'श्नाभ्यस्तयोरातः' इत्याकारलोपः । 'अभ्यस्तानामादिः' इत्यभ्यस्तस्याद्युदात्तत्वम् । जन्मानि जनी प्रादुर्भावे 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । नित्वादाद्युदात्तत्वम् ॥ ७ ॥—हे सूर्य, सर्वस्य द्योतमान, विचक्षण सर्वस्य प्रकाशयितः सप्त सप्तसंख्याका हरितोऽश्वाः रसहरणशीला रश्मयो वा त्वा त्वां वहन्ति प्रापयन्ति । कीदृशम् । रथेऽवस्थितमिति शेषः । तथा शोचिष्केशं शोचींषि तेजांस्येव यस्मिन्केशा इव दृश्यन्ते स तथोक्तस्तं । हरित इत्यादित्याश्वानां संज्ञा । हरित आदित्यस्येति निघण्टावुक्तत्वात् । शोचिष्केशं । शुच दीप्तौ 'अर्चिशुचिहुसृपि–' इत्यादिना इसिप्रत्ययान्तोऽन्तोदात्तः । स एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन शिष्यते। 'नित्यं समासेऽनुत्तरपदस्थस्य' इति विसर्जनीयस्य षत्वम् ॥८॥—सूरः सूर्यस्य प्रेरकः सूर्यः शुन्ध्युवः शोधिका अश्वस्त्रियः तादृशीः सप्त सप्तसंख्याका अयुक्त स्वरथे योजितवान् । कीदृश्यः । रथस्य नप्त्यो न पातयित्र्यः । याभिर्युक्ताभी रथो याति न पतति तादृशीरित्यर्थः । एवंभूताभिस्ताभिरश्वस्त्रीभिः स्वयुक्तिभिः स्वकीययोजनेन रथे संबद्धाभिर्याति यज्ञगृहं प्रत्यागच्छति । अतस्तस्मै हविर्दातव्यमिति वाक्यशेषः । अयुक्त युजिर् योगे स्वरितत्वात्कर्त्रभिप्राये आत्मनेपदम् । लुङि च्लेः सिच् । 'एकाच' इतीट् प्रतिषेधः । 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्वाल्लघूपधगुणाभावः । 'झलो झलि' इति सिचः सकारलोपः । 'चोः कुः' इति कुत्वम् । शुन्ध्युवः शुन्ध विशुद्धौ 'यजिमनिशुन्धिदसिजनिभ्यो युः' इति युप्रत्ययः । शसि 'तन्वादीनां छन्दसि बहुलमुपसंख्यानम्' इत्युवङादेशः । सूरः षू प्रेरणे । 'सुसूधागृधिभ्यः क्रन्' इति क्रन्प्रत्ययः । नित्वादाद्युदात्तत्वम् । नप्त्यः नपातयतीत्यर्थे 'नप्तृनेष्टृ' इत्यादिनोणादिषु नप्तृशब्दस्तृजन्तो निपातितः । 'ऋन्नेभ्यो ङीप्' इति ङीप् । यणादेशे 'उदात्तयणो हल्पूर्वात्' इति ङीप उदात्तत्वम् । 'सुपां सुपो भवन्ति' इति शसो जसादेशः । ततो यणादेशे 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् । रेफलोपश्छान्दसः । उक्तं च द्वौ चापरौ वर्णविकारनाशाविति । शाखान्तरे तु नप्त्य इत्येव पठ्यते । स्वयुक्तिभिः स्वकीयाः सूर्यसंबन्धिन्यः युक्तयो योजनानि यासां । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ९ ॥—वयमनुष्ठातारः तमसस्परि तमस उपरि रात्रेरूर्ध्वं वर्तमानं तमसः पापात्परि उपरिवर्तमानं वा पापरहितमित्यर्थः । तथा चाम्नायते । उद्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादपहन्तीति । ज्योतिस्तेजस्विनं उत्तरमुद्गततरमुत्कृष्टतरं वा देवता देवेषु मध्ये देवं दानादिगुणयुक्तं सूर्यं पश्यन्तः स्तुतिभिर्हविर्भिश्चोपासी-

मगन्म ज्योतिरुत्तमम् ॥१०॥ उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥ ११ ॥ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि । अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि॥१२॥उदगादयमादित्यो विश्वेन सहसा सह । द्विषन्तं

नाः सन्तः उत्तममुत्कृष्टतमं ज्योतिः सूर्यरूपं अगन्म प्राप्नुयाम । तथाच श्रूयते- 'अगन्म ज्योतिरुत्तममित्याह । असौ वा आदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छति' इति । युक्तं चैतत् । 'तं यथायथोपासते तदेव भवति' इति श्रुत्यन्तरात् । तमसस्परि 'पञ्चम्याः परावध्यर्थे' इति विसर्जनीयस्य सत्वम् । ज्योतिष्पश्यन्तः 'इसुसोः सामर्थ्ये' इति विसर्जनीयस्य षत्वम् । व्यपेक्षालक्षणं सामर्थ्यं तत्राङ्गीक्रियते । देवत्रा 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' इति सप्तम्यर्थे त्राप्रत्ययः । प्रत्ययस्वरः । अगन्म 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लङि 'बहुलं छन्दसि' इति शपो लुक् 'म्वोश्च' इति धातोर्मकारस्य नकारः अडागम उदात्तः पादादित्वान्निघाताभावः । उत्तमं तमपः पित्त्वादनुदात्तत्वे प्राप्ते 'उत्तमशश्वत्तमौ सर्वत्र' इत्युञ्छादिषु पाठादन्तोदात्तत्वम् ॥१०॥—हे सूर्य सर्वस्य प्रेरक मित्र, महः सर्वेषामनुकूलदीप्तियुक्त, अद्यास्मिन्काले उद्यन्नुदयं गच्छन् उत्तरामुद्गततरां दिवमन्तरिक्षं आरोहन्नाभिमुख्येन प्राप्नुवन् । यद्वा दिवमन्तरिक्षं उत्तरामारोहन्नुत्कर्षेण प्राप्नुवन् एवंविधस्त्वं मम हृद्रोगं हृदयगतमान्तरं रोगं, हरिमाणं शरीरगतकान्तिहरणशीलं बाह्यरोगं, यद्वा शरीरगतं हरिद्वर्णं । रोगप्राप्तं वैवर्ण्यमित्यर्थः । तदुभयमपि नाशय । मां स्तोतारमुभयविधाद्रोगान्मोचयेत्यर्थः । मित्रमहः मित्रमनुकूलं महस्तेजो यस्यासौ । आमन्त्रितनिघातः । उत्तरां उदित्यनेनोपसर्गेण स्वसंसृष्टधात्वर्थो लक्ष्यते । तस्मादातिशायनिकस्तरप् । प्रथमपक्षे अन्तरिक्षविशेषणत्वेन द्रव्यप्रकर्षणप्रतीतेराम्न भवति । द्वितीये त्वारोहणक्रियायाः प्रकर्षो गम्यत इति 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्याम् । प्रथमपक्षे शपृतरपोः पित्वादनुदात्तत्वे उपसर्गस्वर एव शिष्यते । द्वितीये तु आम्प्रत्ययस्य सति शिष्टत्वात्तस्यैव स्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । वृषादिर्वा द्रष्टव्यः । स ह्याकृतिगणः । हृद्रोगं 'वा शोकष्यञ्रोगेषु' इति हृदयशब्दस्य हृदादेशः । मम 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् । हरिमाणं 'जनिहृभ्यामिमनिन्' इत्यौणादिक इमनिन्प्रत्ययः व्यत्ययेनान्तोदात्तत्वम् । यद्वा हरिच्छब्दस्य वर्णवाचित्वात् 'वर्णदृढादिभ्यः ष्यञ्च' इति चकारादिमनिच्प्रत्ययः । इष्ठेमेयस्स्वित्यनुवृत्तौ 'टेः' इति टिलोपः ॥११॥—मे मदीयं हरिमाणं हरिद्वर्णस्य भावं शुकेषु तादृशं वर्णं कामयमानेषु पक्षिषु तथा रोपणाकासु शारिकासु पक्षिविशेषेषु दध्मसि स्थापयामः । अथो अपिच हारिद्रवेषु हरितालद्रुमेषु तादृग्वर्णवत्सु मे मदीयं हरिमाणं निदध्मसि निदधीमहि । स च हरिमा तत्रैव सुखेनास्तां । अस्मान्मा बाधिष्टेत्यर्थः । दध्मसि 'इदन्तो मसि' इति मस इकारागमः ॥१२॥—अयं पुरोवर्ती आदित्यः अदितेः पुत्रः सूर्यः विश्वेन सहसा सर्वेण बलेन सह उदगादुदयं प्राप्तवान् । किं कुर्वन् । मह्यं द्विषन्तं रन्ध-

मह्यं रन्धयन्मो अहं द्विषते रधम् ॥१३॥२॥ ( १।८।७ ) चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥१॥ सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् । यत्रा नरो

---

यन्ममोपद्रवकारिणं रोगं हिंसन् । अपि च अहं द्विषतेऽनिष्टकारिणे रोगाय मोरधं मैव हिंसां करोमि । सूर्य एवास्मदनिष्टकारिणं रोगं विनाशयत्वित्यर्थः । अगात् एतेर्लुङि 'इणो गा लुङि' इति गादेशः 'गातिस्था–'इति सिचो लुक् । आदित्यः 'दित्यदित्यादित्य–'इति अपत्यार्थे प्राग्दीव्यतीयो ण्यप्रत्ययः । रन्धयन् रध हिंसासंराध्योः ण्यन्ताल्लटः शतृ । 'रधिजभोरचि' इति णौ धातोर्नुमागमः । मो मा उ निपातद्वयसमुदायो मैवेत्यस्यार्थे 'ओत्' इति प्रगृह्यत्वे 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावः । द्विषते 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । रधं रधेर्लुङि पुषादित्वाच्च्लेरङादेशः 'रधिजभोरचि' इति धातोर्नुम् । 'अनिदिताम्' इत्यनुषङ्गलोपः 'न माङ्योगे' इत्यडभावः ॥ १३ ॥

(चित्रं देवानां १।८।७)देवानां दीव्यन्तीति देवा रश्मयस्तेषां देवजनानामेव वा अनीकं तेजःसमूहरूपं चित्रमाश्चर्यकरं सूर्यमण्डलं उदगादुदयाचलं प्राप्तमासीत् । कीदृशं । मित्रस्य वरुणस्याग्नेश्च । उपलक्षणमेतत् । एतदुपलक्षितानां जगतां चक्षुः प्रकाशकं । चक्षुरिन्द्रियस्थानीयं च उदयं । प्राप्य च द्यावापृथिवी दिवं पृथिवीमन्तरिक्षं च आप्राः स्वकीयेन तेजसा आसमन्तादपूरयत् । ईदृग्भूतमण्डलान्तर्वर्ती सूर्योऽन्तर्यामितया सर्वस्य प्रेरकः परमात्मा जगतो जङ्गमस्य तस्थुषः स्थावरस्य चात्मा स्वरूपभूतः । सहि सर्वस्य स्थावरजङ्गमात्मकस्य कार्यवर्गस्य कारणं । कारणाच्च कार्यं नातिरिच्यते । तथा च पारमर्षं सूत्रम्—'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति । यद्वा स्थावरजङ्गमात्मकस्य सर्वस्य प्राणिजातस्य जीवात्मा । उदिते हि सूर्ये मृतप्रायं सर्वं जगत्पुनश्चेतनयुक्तं सदुपलभ्यते । तथाच श्रूयते—'योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति इति । आप्राः प्रापूरणे लङि पुरुषव्यत्ययः । अदादित्वाच्छपो लुक् । जगतः 'गमेर्द्वे च' इति क्विप् द्विर्वचनम् 'गमः क्वौ' इत्यनुनासिकलोपः । तस्थुषः तिष्ठतेर्लिटः क्वसुः द्विर्वचने 'शर्पूर्वाः खयः' षष्ठ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणं 'आतो लोप इटि च' इत्याकारलोपः । 'शासिवसिघसीनां च' इति षत्वम् ॥ १ ॥ सूर्यो देवीं दानादिगुणयुक्तां रोचमानां दीप्यमानामुषसं पश्चादभ्येति उषसः प्रादुर्भावानन्तरं तामभिलक्ष्य गच्छति । तत्र दृष्टान्तः । मर्यो न योषां यथा कश्चिन्मनुष्यः शोभनावयवां गच्छन्तीं युवतिं स्त्रियं सततमनुगच्छति तद्वत् । यत्र यस्यामुषसि जातायां देवयन्तो देवं द्योतमानं सूर्यं यष्टुमिच्छन्तो नरो यज्ञस्य नेतारो यजमानाः युगानि । युगशब्दः कालवाची । तेन च तत्र कर्तव्यानि कर्माणि लक्ष्यन्ते । यथा दर्शपूर्णमासाविति । अग्निहोत्रादीनि

देवयन्तो युगानि वि तन्वते प्रति भद्राय भद्रम् ॥ २ ॥ भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः । नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः ॥ ३ ॥ तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं संजभार ।

---

कर्माणि वितन्वते विस्तारयन्ति । यद्वा देवयन्तो देवयागार्थं धनमात्मन इच्छन्तो यजमानपुरुषाः युगानि हलावयवभूतानि कर्षणाय वितन्वते प्रसारयन्ति तामुषसमनुगच्छन्तीत्यर्थः । एवंविधं भद्रं कल्याणं सूर्यं प्रति भद्राय कल्याणरूपाय कर्मफलाय स्तुम इति शेषः । यद्वा देवकामा यजमानाः युगानि युग्मानि भूत्वा पत्नीभिः सहिताः सन्तो भद्रं कल्याणमग्निहोत्रादिकं कर्म भद्राय तत्फलार्थं प्रति प्रत्येकं यस्यामुषसि प्रवृत्तायां वितन्वते विस्तारयन्ति । मर्यः मृङ् प्राणत्यागे 'छन्दसि निष्टर्क्य–' इत्यादौ यत्प्रत्ययान्तो निपात्यते । 'यतो नावः' इत्याद्युदात्तत्वम् । युगानि युजेः कर्मणि घञ् । युगशब्दः कालविशेषे रथाद्युपकरणे चेत्युञ्छादिषु पाठाद्गुणाभावोऽन्तोदात्तत्वं च । वितन्वते तनु विस्तारे 'तनादिकृञ्भ्य उः' सहेति योगविभागात्तिङोपसर्गस्य समासे सति 'समासस्य' इत्यन्तोदात्तत्वम् ॥२॥—भद्राः कल्याणा अश्वा एतग्वा इत्येतदुभयमश्वनाम । तत्रैकं क्रियापरं योजनीयम् । अश्वास्तुरगाः व्यापनशीला वा हरितो हर्तारः चित्रा विचित्रावयवाः अनुमाद्यासः अनुक्रमेण सर्वैः स्तुत्या मादनीया एवंभूताः सूर्यस्य एतग्वा अश्वाः । यद्वा एतमेतव्यं गन्तव्यं मार्गं गन्तारोऽश्वाः । एतं शबलवर्णं नीलवर्णं वा प्राप्नुवन्तोऽश्वाः नमस्यन्तोऽस्माभिर्नमस्यमानाः सन्तः । दिवोऽन्तरिक्षस्य पृष्ठमुपरिप्रदेशं पूर्वभागलक्षणं आअस्थुरातिष्ठन्ति प्राप्नुवन्ति । यद्वा हरितो रसहरणशीला रश्मयो भद्रादिविशेषणविशिष्टाः दिवः पृष्ठं नभस्तलमातिष्ठन्ति । आस्थाय च द्यावापृथिवी द्यावापृथिव्यौ सद्यस्तदानीमेवैकेनाह्ना परियन्ति परितो गच्छन्ति । व्याप्नुवन्तीत्यर्थः । अश्वाः अशू व्याप्तौ 'अशूप्रुषि' इत्यादिना क्वन् । एतग्वाः इण् गतौ 'असिहसि' इत्यादिना कर्मणि तन्प्रत्ययः । गमेरौणादिको भावे डुप्रत्ययः । एतव्यं प्रति ग्वो गमनं येषां ते तथोक्ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अनुमाद्यासः मदि स्तुतौ अस्माण्ण्यन्तात् 'अचो यत्' 'यतो नावः' इत्याद्युदात्तत्वम् । नमस्यन्तः 'नमोवरिवः' इति पूजार्थे क्यच् । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । अस्थुः तिष्ठतेश्छान्दसो वर्तमाने लुङ् । 'गातिस्था–' इति सिचो लुक् । 'आतः' इति झेर्जुस् ॥३॥—सूर्यस्य सर्वप्रेरकस्यादित्यस्य तद्देवत्वमीश्वरत्वम् । स्वातन्त्र्यमिति यावत् । महित्वं महत्त्वं माहात्म्यं च तदेव । तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यत् कर्तोः । कर्मनामैतत् । प्रारब्धापरिसमाप्तस्य कृष्यादिलक्षणस्य कर्मणो मध्या मध्येऽपरिसमाप्त एव तस्मिन्कर्मणि विततं विस्तीर्णं स्वकीयं रश्मिजालमस्तं गच्छन्सूर्यः संजभार अस्माल्लोकात्स्वात्मन्युपसंहरति कर्मकरश्च प्रवृ-

यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ ४ ॥
तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे । अ-
नन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ति ॥ ५ ॥

---

त्तमपरिसमाप्तमेव विसृजति । अस्तं यन्तं सूर्यं इच्छेदृशं स्वातन्त्र्यं महिमा च सूर्यव्यतिरिक्तस्य कस्यास्ति । न कस्यापि । सूर्य एवेदृशं स्वातन्त्र्यं महिमानं चाव-गाहते । अपि च इदित्यवधारणे । यदेत् यस्मिन्नेव काले हरितो रसहरणशी-लान्स्वरश्मीन्हरितवर्णानश्वान्वा सधस्थात्सहस्थानादस्मात्पार्थिवाल्लोकादादाय अयुक्त अन्यत्र संयुक्तान्करोति । यद्वा युजिः केवलोऽपि निपूर्वो द्रष्टव्यः । यदै-वासौ स्वरश्मीनश्वान्वा सधस्थात्सह तिष्ठत्यस्मिन्निति सधस्थो रथः । तस्माद्-युक्तामुञ्चत् । आत् अनन्तरमेव रात्री निशावास आच्छादयितृतमः सिमस्मै । सिमशब्दः सर्वशब्दपर्यायः । सप्तम्यर्थे चतुर्थी । सर्वस्मिंल्लोके तनुते विस्तार-यति । यद्वा वासो वासरमहस्तत्सर्वस्माल्लोकादानीय रात्री तमस्तनुते । अत्र निरुक्तम्—तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते । यदासावयुङ्क्त हरणानादित्यरश्मीन्हरितोऽश्वानिति वाथ रात्री वास-स्तनुते सिमस्मै सर्वमहरेव युवती सर्वस्मादिति । महित्वम् मह पूजायाम् औणा-दिक इन्प्रत्ययः । 'तस्य भावस्त्वतलौ' । मध्या मध्यशब्दात्सप्तम्येकवचनस्य 'सुपां सुलुक्' इति डादेशः । कर्तोः करोतेरौणादिकस्तोसुन्प्रत्ययः । विततं विपू-र्वात्तनोतेः कर्मणि निष्ठा । उदित्वेन क्त्वाप्रत्यये इटो विकल्पनात् 'यस्य वि-भाषा' इतीट्प्रतिषेधः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । जभार 'हृग्रहोर्भश्छन्दसि' इति भत्वम् । अयुक्त युजेर्लुङि 'झलो झलि' इति सिचो लोपः । सधस्थात् 'घञर्थे कविधानम्' इत्यधिकरणे कप्रत्ययः । 'सधमादस्थयो-श्छन्दसि' इति सधादेशः । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । रात्री 'रात्रेश्चाजसौ' इति ङीप् ॥ ४ ॥—तत्तदानीमुदयसमये मित्रस्य वरुणस्य एतदुभ-योपलक्षितस्य सर्वस्य जगतोऽभिचक्षे आभिमुख्येन द्योर्नभस उपस्थे उपस्थाने मध्ये सूर्यः सर्वस्य प्रेरकः सविता रूपं सर्वस्य निरूपकं प्रकाशकं तेजः कृणुते करोति । अपिचास्य सूर्यस्य हरितो रसहरणशीला रश्मयो हरिद्वर्णा अश्वा वा । अनन्तमवसानरहितं कृत्स्नस्य जगतो व्यापकं रुशद्दीप्यमानं श्वेतवर्णं पाजः । बल-नामैतत् । अतिबलस्यापि नैशस्य तमसो निवारणे समर्थं अन्यत्तमसो विचक्षणं तेजः संभरन्ति अहनि स्वकीयगमनेन निष्पादयन्ति । तथा कृष्णं कृष्णवर्णमन्यत्त-मः स्वकीयापगमनेन रात्रौ अस्य रश्मयोऽप्येवं कुर्वन्ति किमु वक्तव्यं तस्य माहा-त्म्यमिति सूर्यस्य स्तुतिः । अभिचक्षे संपदादिलक्षणो भावे क्विप् । कृदुत्तरपदप्रकृ-तिस्वरत्वम् । द्योः 'ङसिङसोश्च' इति पूर्वरूपता । उपस्थे 'घञर्थे कविधानम्' इति कप्रत्ययः । मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् । पाजः पाति रक्षतीति पाजो बलम् । 'पातेर्बले जुट् च' इत्यसुन् । जुडागमश्च छान्दसः । मत्वर्थीयस्य विनो लोपः ॥ ५ ॥

अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ६ ॥ ॥ ३ ॥ ( २।३।२२ ) इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ १ ॥ कृष्णं नियानं हरयः सुपर्णा अपो वसाना

---

–हे देवाः द्योतमानाः सूर्यरश्मयः, अद्यास्मिन्काले सूर्यस्यादित्यस्य उदिता उदितः उदये सति इतस्ततः प्रसरन्तो यूयमस्मादंहसः पापात् निष्पिपृत निष्कृष्य पालयत । यदिदमस्माभिरुक्तं नोऽस्मदीयं तन्मित्रादयः षड्देवताः मामहन्तां पूजयन्तु । अनुमन्यन्तां रक्षन्त्विति यावत् । मित्रः प्रमीतेस्त्रायकोऽहरभिमानी देवः । वरुणोऽनिष्टानां निवारयिता राज्यभिमानी । अदितिरखण्डनीया अदीना वा देवमाता । सिन्धुः स्यन्दनशीलोदकाभिमानिनी देवता । पृथिवी भूलोकस्याधिष्ठात्री । द्यौः द्युलोकस्य । उतशब्दः समुच्चये । अद्य 'निपातस्य च' इति संहितायां दीर्घत्वम् । उदिता उत्पूर्वादेतेर्भावे क्तिन् । 'सुपां सुलुक्' इति डादेशः । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । पिपृत पृ पालनपूरणयोः पृ इत्येके लोटि जुहोति । जुहोत्यादित्वाच्छपः श्लुः द्विर्वचनोरदत्वहलादिशेषाः । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् । 'सार्वधातुकमपित्' इति तशब्दस्य ङित्वे सति 'ऋचि तुनुघ'इत्यादिना संहितायां दीर्घः ॥६॥

( 'इन्द्रं मित्रं २।३।२२' ) अमुमादित्यमैश्वर्यविशिष्टमिन्द्रमाहुः । तथा मित्रं प्रमितेर्मरणात्त्रातारं अहरभिमानिनमेतन्नामकं देवमाहुः । वरुणं पापस्य निवारकं राज्यभिमानिनं देवमाहुः । तथाग्निमङ्गनादिगुणविशिष्टमेतन्नामकमाहुः । अथो अपि चायमेव दिवो दिवि भवः सुपर्णः सुपतनो गरुत्मान्गरणवान् पक्षवान्वैतन्नामको यः पक्ष्यस्ति सोऽप्ययमेव । कथमेकस्य नानात्वमिति । उच्यते । अमुमेवादित्यमेकमेव वस्तुतः सन्तं विप्रा मेधाविनो देवतातत्त्वविदो बहुधा वदन्ति तत्तत्कारणेनेन्द्राद्यात्मानं वदन्ति । 'एकैव वा महानात्मा देवता स सूर्य इत्याचक्षते' इत्युक्तत्वात् । किंच तमेव वृष्ट्यादिकारणं वैद्युताग्निं यमं नियन्तारं मातरिश्वानमन्तरिक्षे श्वसन्तं वायुमाहुः । सूर्यस्य ब्रह्मणोऽनन्यत्वेन सार्वात्म्यमुक्तं भवति । अत्र ये केचित् 'अग्निः सर्वा देवता' इत्यादि श्रुतयोऽयमेवाग्निरुत्तरे अपि ज्योतिषी इति मत्वाग्नेरेव सार्वात्म्यप्रतिपादकोऽयं मन्त्र इति वदन्ति तत्पक्षे प्रथमोऽग्निशब्द उद्देश्यः तमग्निमुद्दिश्येन्द्राद्यात्मकत्वं कथयन्ति । अयं मन्त्रो निरुक्ते एवं व्याख्यातः । इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्ति इन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तं दिव्यो दिविजो गरुत्मान्गरणवान्गुर्वात्मा महात्मेति वेति ॥ १ ॥–कृष्णं कृष्णवर्णं नियानं नियमेन गच्छन्तं मेघं हरय उदकस्य हर्तारः सुपर्णाः शोभनपतना रश्मयः अपो वसाना उदकानि वासयन्तो मेघेषु । अद्भिर्मेघान्पूरयन्त इत्यर्थः ।

दिवमुत्पतन्ति । त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते ॥२॥ (३।७।१४) हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ १ ॥ (४।२।११) यत्त्वा सूर्य स्वर्भानुस्तमसा

---

अन्तर्भावितण्यर्थाद्विकर्मकत्वम् । यद्वा कृष्णं नियानं नियमनं रात्रिः । देवानां हि रात्रिर्दक्षिणायनम् तत्प्रति । तस्मिन्वर्षाकाल इत्यर्थः । एवं कुर्वन्तो दिवं द्युलोकं तदाश्रितमादित्यं वोद्दिश्योत्पतन्त्यूर्ध्वं गच्छन्ति । ते रश्मयः ऋतस्य सदनादुदकस्य स्थानादादित्यमण्डलादाववृत्रन्नावर्तन्ते अर्वाञ्च आगच्छन्ति । आदित् अनन्तरमेव यदार्वागागच्छन्ति तदानीमेव घृतेनोदकेन पृथिवी व्युद्यते विविधं क्रियते । कृष्णं निरयणं रात्रिरादित्यस्य हरयः सुपर्णाहरणा आदित्यरश्मय इत्यादि निरुक्तं द्रष्टव्यम् ॥ २ ॥

( 'हंसः शुचिषत् ३।७।१४' ) अनया सौर्यर्चा य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुरित्यादिश्रुत्युक्तो मण्डलाभिमानी देवोऽस्ति, यश्च सर्वप्राणिहृदि चिद्रूपः स्थितः परमात्मा, यच्च निरस्तसमस्तोपाधिकं परं ब्रह्म तत्सर्वमेकमेवेति प्रतिपाद्यते । हंसः हन्तिर्गत्यर्थः । सर्वत्र सर्वदा गन्ता यो हंसोऽसावित्यादि श्रुत्युक्तप्रकारेणैकीकृत्योपास्यः परमात्ममन्त्रप्रतिपाद्य आदित्यः सच शुचौ दीप्ते द्युलोके सीदतीति शुचिषत् । 'अथ यदतः परो दिवोज्योतिर्दीप्यते' इत्यादिश्रुतेः । अनेन द्युस्थान आदित्यः प्रतिपादितः स एव मध्यस्थानो वायुरित्याह । वसुः सर्वस्य वासयिता वायुः स चान्तरिक्षसदन्तरिक्षसंचारी । अथ तस्यैव क्षितिस्थानवेदिकाग्निरूपतामाह । होता देवानामाह्वाता होमनिष्पादको वा वेदिषद्वेद्यां गार्हपत्यादिरूपेण स्थितः अतिथिरतिथिवत्सर्वदा पूज्योऽग्निः दुरोणसत् । दुरोणं गृहनाम । तत्र पाकादिसाधनत्वेन स्थितः । अनेन लौकिकाग्न्यात्मकत्वमुक्तं । नृषन्नृषु मनुष्येषु चैतन्यरूपेण सीदतीति नृषत् । अनेन परमात्मरूपत्वमुक्तम् । पुनरप्यादित्यात्मतामाह । वरसद्वरे वरणीये मण्डले सीदतीति वरसदादित्यः । वरं वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपतीति हि श्रूयते । ऋतं सत्यं ब्रह्म यज्ञो वा तत्र सीदतीत्यृतसदग्निः । व्योमान्तरिक्षं तत्र सीदतीति व्योमसद्वायुः । इदानीमादित्यतोच्यते । अब्जा उदकेषु जातः । उदकमध्ये खल्वयं जायते । गोजाः गोषु रश्मिषु जातः । ऋतं सत्यं सर्वैश्वर्यत्वेन सत्याज्जातः । नह्यसाविन्द्रादिवत्परोक्षो भवति । यद्वोदकेषु वैद्युतरूपेण वा वाडवरूपेण वा जातः । अद्रिजाः अद्रावुदयाचले जातः । एवं महानुभाव आदित्यः ऋतं सत्यमबाध्यं सर्वाधिष्ठानं ब्रह्मतत्त्वं तद्रूपो ह्यसावेव । आदित्यस्योक्तरूपत्वं हंसः शुचिषदित्येष वै हंसः शुचिषदित्यादिना ब्राह्मणे समाम्नातम् ॥ १ ॥

('यत्त्वा सूर्य ४।२।११')इदमादिचतुर्भिर्मन्त्रैरत्रीणां कर्म कीर्त्यते । हे सूर्य प्रेरक देव,त्वा त्वां यद्यदा आसुरः असुरस्य प्राणापहर्तुरसुर्या वा पुत्रः स्वर्भानुः स्वर्भा-

विध्यदासुरः । अक्षेत्रविद्यथा मुग्धो भुवनान्यदीधयुः ॥ १ ॥
(५।५।१) यदुद्य सूर्य ब्रवोनागा उद्यन्मित्राय वरुणाय सत्यम् । वयं देवत्रादिते स्याम तव प्रियासो अर्यमन्गृणन्तः ॥१॥(५।५।४)उत्सूर्यो बृहदुर्चींष्यश्रेत्पुरु विश्वा जनिम मानुषाणाम् । समो दिवा ददृशे रोचमानः क्रत्वा कृतः सुकृतः कर्तृभिर्भूत् ॥ १ ॥ स सूर्य प्रति पुरो न उद्गा एभिः स्तोमेभिरेतशेभिरेवैः । प्र नो मित्राय वरुणाय वोचोनागसो अर्यम्णे अग्नये च ॥ २ ॥ वि नः सहस्रं शुरुधो रदन्त्वृतावानो वरुणो

---

नुसंज्ञकस्तमसा मायानिर्मितेनाविध्यत् । आवृणोदित्यर्थः । तदा भुवनानि सर्वाणि अदीधयुर्दृश्यन्ते । तथा तत्रत्यः सर्वो जनः अक्षेत्रवित्स्वस्वस्थानमजानन् मुग्धो मूढो भवति तथा ॥ १ ॥

( यदद्य सूर्य ५।५।१) हे सूर्य सर्वस्य प्रेरक एतन्नामक देव, उद्यन्नुदयंस्त्वं यद्यदि अद्यास्मिन्ननुष्ठानकालेऽस्मान् ब्रवः ब्रूयाः । किमिति । अनागाः अनागस इति । एते अपापा इति यदि देवेषु मध्ये ब्रूयास्तर्हि वयं हे अदितेऽदीन देव, देवत्रा देवेषु देवानां मध्ये मित्राय वरुणाय च सत्यमवितथं स्यामानागसो भवेम । किंच हे अर्यमन् दातः,त्वां गृणन्तः स्तुवन्तस्तव प्रियासः प्रियाः स्याम त्वत्प्रेमविषया भवेम । यद्वोत्तरार्धं एकं वाक्यम् । हे अदिते हे अर्यमन् उक्तलक्षण देव, वयं देवेषु मध्ये त्वां गृणन्तः तवैव प्रियाः स्याम । यदि मां देवेष्वपापं ब्रूयास्तर्हि तैरयमनपराधीत्यनुगृहीतस्त्वां स्तुत्वा तव प्रियो भवेयमित्यर्थः ॥ १ ॥

( उत्सूर्यो ५।५।४ ) सूर्यः सर्वस्य प्रेरको देवः बृहदत्यधिकं पुरु पुरूणि बहूनि अर्चींषि तेजांसि उदश्रेदूर्ध्वं श्रयति । किंप्रति । मानुषाणां मनुष्याणां विश्वा सर्वाणि जनिमा जनिमानि जानन् । जनशब्दः संघवचनः । तान्प्रत्युदश्रेत् स देवो दिवाऽहनि रोचमानः सन् समो ददृशे एकरूपः प्रतिनियतः सन् ददृशे । तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवतीति हि श्रुतिः । स देवः क्रत्वा सर्वस्य कर्ता कृतः संपादितः प्रजापतिना कर्तृभिः स्तुतिकर्तृभिः सुकृतः स्तुत्या तीक्ष्णीकृतोऽभूद्भवति ॥ १ ॥—हे सूर्य,सः प्रसिद्धस्त्वं नोऽस्मान्प्रति पुरः पुरस्तात् उद्गः उद्गच्छ । कैः साधनैः । एभिः स्तोमेभिः स्तोमैः स्तुत्यैः एतशेभिरेतवर्णैः । स्वार्थिकः शकारः । या जरन्ता युवशा ता पुरुषः कृष्णशवास्यरुत्तरत इत्यादिवत् । तादृशैः एवैर्गमनशीलैरश्वैरुद्गाः । अथ तथा कृत्वास्माभिः स्तुतः सन् नोऽस्माननागसोऽपापान् प्रवोचः । केभ्यः । मित्राय वरुणायार्यम्णेऽग्नये च । अत्र सौर्ये इतरेषां मित्रादीनां संकीर्तनं तेषामपि निपातभाक्त्वादविरुद्धम् । एवं पूर्वत्रोत्तरत्र च मैत्रावरुणार्यमादीनां संकीर्तनमपि न विरुध्यते ॥ २ ॥–नोऽस्मभ्यं शुरुधः शुचेर्दुःखस्य प्रतिरोद्धारः ऋतावानः सत्यवन्तो वरुणादयः सहस्रं सहस्रसंख्याकं धनं वि रदन्तु वितरन्तु । अथवा शुरुधः

मित्रो अग्निः। यच्छन्तु चन्द्रा उपमं नो अर्कमा नः कामं पूपुरन्तु स्तवानाः॥३॥(५।५।५) उद्वेति सुभगो विश्वचक्षाः साधारणः सूर्यो मानुषाणाम्। चक्षुर्मित्रस्य वरुणस्य देवश्चर्मेव यः समविव्यक्तमांसि ॥१॥ उद्वेति प्रसवीता जनानां महान्केतुरर्णवः सूर्यस्य। समानं चक्रं पर्याविवृत्सन्यदेतशो वहति धूर्षु युक्तः ॥ २ ॥ विभ्राजमान उषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः। एष मे देवः सविता चच्छन्द यः समानं न प्रमिनाति धाम ॥३॥ दिवो रुक्म उरुचक्षा उदेति दूरे अर्थस्तरणिर्भ्राजमानः। नूनं जनाः सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपांसि ॥ ४ ॥ यत्रा चक्रुरमृता गातुमस्मै श्येनो न

---

उक्तलक्षणाः सहस्रसंख्याकाः। ओषधी रदन्तु। किंच ते चन्द्रा आह्लादकारिणो नोऽस्मभ्यमुपमं स्तुत्यं अर्कमर्चनीयं यच्छन्तु। किंच स्तवाना अस्माभिः स्तूयमाना नोऽस्माकं काममपेक्षितं पूपुरन्तु पूरयन्तु। हे सूर्य, त्वया अनुज्ञाता इति सूर्यस्य स्तुतिः ॥ ३ ॥

(उद्वेति५।५।५) उद्वेत्युद्गच्छत्ययं सूर्यः सुभगः शोभनभाग्यः सुष्ठुभजनीयो वा। विश्वचक्षाःसर्वस्य द्रष्टा मानुषाणां सर्वेषां मनुष्याणां साधारणः। साधारणत्वप्रतिपादकश्रुतिः पूर्वमुदाहृता। मित्रस्य वरुणस्य च चक्षुः प्रकाशकः देवो द्योतमानः यो देवः चर्मेव चर्मणीव तमांसि समविव्यक् सह विचति संवेष्टयति स महानुभावो देव उद्वेति ॥ १ ॥–अयं सूर्यस्य सूर्यः। विभक्तिव्यत्ययः। उद्वेत्युद्गच्छति। कीदृशोऽयम्। जनानां सर्वेषां प्रसविता सर्वेषु कर्मस्वनुज्ञाता महान्पूज्यः केतुः सर्वस्य प्रज्ञापकः अर्णव उदकप्रदः। किं कुर्वन्नुदेतीत्युच्यते। समानं सर्वेषामेकरूपमेकमेव चक्रं रथाङ्गं चरणशीलं रथं वा पर्याविवृत्सन्पर्यावर्तयितुमिच्छन् यद्रथचक्रं धूर्षु रथस्य युक्त एतश एतशवर्णो हरितवर्णोऽश्वो वहति। एको अश्वो वहति सप्तनामेत्युक्तम् ॥२॥–अयं सूर्यो विभ्राजमानो विशेषेण दीप्यमानः उषसामुपस्थादुपस्थे मध्ये रेभैः स्तोतृभिरनुमद्यमानः सन्नुदेति। किंच एष देवो द्योतमानः सविता मे मह्यं चच्छन्दोपच्छन्दयति कामान्। एष इत्युक्तं क इति। यो देवः समानं सर्वेषां प्राणिनामेकरूपं धाम स्वीयं तेजःस्थानं न प्रमिनाति न हिनस्ति न संकोचयति स देव उदेतीति ॥ ३ ॥–अयं सूर्यो रुक्मो रोचमानः उरुचक्षाः प्रभूततेजाश्च सन् दिवोऽन्तरिक्षादुदेति। यद्वा दिवोऽन्तरिक्षस्य रुक्म आभरणस्थानीयः। कीदृशोऽयं। दूरेअर्थः दूरेगन्ता अर्थोऽर्तेः दूरे प्रार्थ्यमानो वा तरणिस्तारकः भ्राजमानो दीप्यमानः सन्नुदेति। नूनं निश्चयं। जनाः सर्वे प्राणिनः सूर्येण प्रेरकेण देवेन प्रसूता अनुज्ञाताः प्रेरिताःसन्तः अयन् अर्थानि गन्तव्यान्यनुष्ठेयानि अपांसि कर्माणि कृण्वन्कुर्वन्ति ॥४॥–यत्र यस्मिन्नन्तरिक्षे अमृता अमरणधर्माणः पूर्वे देवा अस्मै

दीयन्नन्वेति पाथः ॥ (५।५।१०) उदु त्यद्दर्शतं वपुर्दिव एति प्रतिह्वरे । यदीमाशुर्वहति देव एतशो विश्वस्मै चक्षसे अरम् ॥ १ ॥ शीर्ष्णः शीर्ष्णो जगतस्तस्थुषस्पतिं समया विश्वमा रजः । सप्त स्वसारः सुविताय सूर्यं वहन्ति हरितो रथे ॥ २ ॥ (५।५।११) तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् ॥१॥ ( ६।७।८ ) बण्महाँ असि सूर्य बळादित्य महाँ असि । महस्ते सतो महिमा पनस्यतेद्धा देव महाँ असि ॥ १ ॥ बट् सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि । मह्ना देवानामसुर्यः पुरोहितो विभु

---

सूर्याय गातुं मार्गं चक्रुरकुर्वन् तत्पाथोऽन्तरिक्षं अन्वेत्यनुगच्छति । क इव । दीयन्नाच्छन् श्येनो न शंसनीयगमनो गृध्र इव । अयमर्धर्चः सौर्य इत्युक्तम् ॥

( उदु त्यद्दर्शतं ५।५।१० ) तत् तत् दर्शतं दर्शनीयं वपुर्मण्डलं दिवोऽन्तरिक्षस्य प्रतिह्वरे समीपे उदु एति उदेति । उइति पूरणः । यदीं यदेतन्मण्डलं आशुः शीघ्रगामी एतश एतवर्णोऽश्वो वहति धारयति । किमर्थम् । विश्वस्मै सर्वस्मै अरं चक्षसे सम्यक् सर्वलोकदर्शनाय ॥ १ ॥–शीर्ष्णः शीर्ष्णः सर्वस्यापि शिरसः । तृतीयार्थे पञ्चमी । स्वस्वशिरसेत्यर्थः । सूर्यं वहन्तीत्यनेन संबध्यते । अथवा शिरःशब्देन तद्वान्पदार्थो लक्ष्यते । वीप्सया तस्य कात्स्न्र्यमुच्यते । सर्वस्य श्रेष्ठमित्यर्थः । जगतो जङ्गमस्य तस्थुषः स्थावरस्य पतिं स्वामिनं रथे वर्तमानं सूर्यं सुविताय कल्याणाय विश्वं रजः समया सर्वलोकस्य समीपे 'अभितःपरितःसमया' इत्यादिना समयाशब्दयोगाद्द्वितीया । सप्त सप्तसंख्याकाः स्वसारोऽन्यनिरपेक्षेण स्वयमेव सरन्त्यो हरितो हरिद्वर्णा अश्वा आ वहन्ति ॥ २ ॥

( तच्चक्षुः ५।५।११ ) तत् प्रसिद्धं चक्षुः सर्वस्य प्रकाशकं देवहितं देवानां हितं तेषां हविःस्वीकारस्यैतदधीनत्वात् । अथवा देवेन हितं शुक्रं निर्मलं सूर्यमण्डलं उच्चरदुद्गच्छति तत् शरदः शतं शतसंवत्सरं पश्येम । जीवेम शरदः शतं । पुनःश्रुतिरादरार्था ॥ १ ॥

(बण्महान् ६।७।८) हे सूर्य, त्वं महान् तेजसाधिकोऽसि बट् सत्यम् । नैतन्मिथ्येत्यर्थः । हे आदित्य अदितेः पुत्र, त्वं महान् बलेनाप्यधिकोऽसि बट् सत्यम् । महो महतः सतो भवतस्ते महिमा महत्त्वं पनस्यते स्तोतृभिः स्तूयते । हे देव द्योतनादिगुणयुक्त सूर्य,त्वं महान्वीर्येणाप्यधिकोऽसि भवसि । अद्धा सत्यमेव । अत्र न संशय इत्यर्थः । बट् श्रत् सत्रा अद्धा इति सत्यनामसु पाठात् ॥१॥–हे सूर्य, त्वं श्रवसा श्रवणेन महान्सर्वाधिकोऽसि बट् सत्यम् । हे देव द्योतमान सूर्य, त्वं देवानां मध्ये मह्ना महत्त्वेन महानधिकोऽसि । सत्रा सत्यमेव असुर्योऽसुराणां हन्ता चासि ।

ज्योतिरदाभ्यम् ॥२॥ (७।८।१२) नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत । दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत ॥ १ ॥ सा मा सत्योक्तिः परिपातु विश्वतो द्यावा च यत्र ततनन्नहानि च । विश्वमन्यं निविशते यदेजति विश्वाहापो विश्वहोदेति सूर्यः ॥ २ ॥ न ते अदेवः प्रदिवो निवासते यदेतशेभिः पतरै रथर्यसि । प्राचीनमन्यदनु वर्तते रज उदन्येन ज्योतिषा यासि सूर्य ॥ ३ ॥ येन सूर्य ज्योतिषा बाधसे तमो जगच्च विश्वमुदियर्षि भानुना । तेनास्मद्विश्वामनिरामनाहुतिमपामीवामप दुःष्वप्न्यं सुव ॥ ४ ॥ विश्वस्य हि प्रेषितो रक्षसि व्रतमहेळय-

---

किंच त्वं देवानां पुरोहितो हितोपदेष्टासि । किंच ते ज्योतिस्तेजो विभु महत् अदाभ्यं केनाप्यहिंस्यं च ॥ २ ॥

(नमो मित्रस्य ७।८।१२) हे ऋत्विजः, यूयं मित्रस्य वरुणस्य मित्रावरुणयोश्चक्षसे द्रष्ट्रे महो महते देवाय द्योतमानाय दूरेदृशे दूरे सन्तमपि पश्यते देवजाताय देवेषु जाताय देवार्थमुत्पन्नाय केतवे विश्वस्य प्रज्ञापकाय दिवः पुत्राय पुत्रभूताय । दिवि जायमानत्वात्तत्पुत्रव्यपदेशः । सूर्याय सूर्यार्थं नमः कृत्वा तद्विहितं ऋतं यागादिलक्षणं कर्म सपर्यत पूजयत शंसत स्तुतिमपि कुरुत ॥१॥—सा सत्योक्तिः सत्यत्ववचनं मा मां विश्वतः सर्वतः परिपातु परिरक्षतु । यया सत्योक्त्या यत्र यस्मिन्देशे द्यावा च पृथिवी च द्यावापृथिव्यावहानि रात्रयश्च ततनन्नतन्वन् तत्र विश्वं सर्वमन्यद्भूतजातं निविशते विश्राम्यति । यदेतद्भूतजातमेजति कम्पते विश्वाहा सर्वदा आपश्च स्यन्दन्ते विश्वाहा सर्वदा सूर्यश्चोदेति सा सत्योक्तिर्मां परिपात्वित्यर्थः ॥ २ ॥—हे सूर्य, तव समीपे प्रदिवः प्रत्नः पुरातनः कश्चिददेवोऽसुरो राक्षसो वा न निवासतेऽह्नि वसति । कदेत्यत आह । यद्यदा त्वं पतरैर्गमनशीलैरेतशेभिरश्वैः रथर्यसि रथं कामयसे योक्तुं । किंच प्राचीनमन्यत्त्वदीयं ज्योतिः रज उदकमनुवर्तते अन्येन तेन ज्योतिषा उद्यासि उदेषि । यद्वा प्राचीनमन्यद्रजश्चन्द्राख्यं ज्योतिस्त्वामनुवर्तते ततस्त्वमन्येन ज्योतिषा सहोदेषीत्यर्थः ॥ ३ ॥ हे सूर्य, त्वं येन ज्योतिषा तेजसा तमोऽन्धकारं बाधसे निवारयसि । येन च भानुना तेजसा विश्वं सर्वं जगज्जङ्गममुदियर्षि उद्गमयसि तेन ज्योतिषास्मदस्मत्तो विश्वां सर्वां अनिरामन्नाभावं अनाहुतिमहोमं च अमीवां रोगजातं च अप सुवापगमय । दुःस्वप्न्यं दुःस्वप्नप्रभवमरिष्टं चाप सुव ॥ ४ ॥—हे सूर्य, प्रेषितः प्रेरितः त्वमहेळयन्नक्रुध्यन् विश्वस्य सर्वस्य यजमानस्य व्रतं कर्म रक्षसि हि यज्ञविध्वंसकेभ्यो राक्षसेभ्यः पालयसि । स्वधा हवींष्यनु उच्चरस्युद्गच्छसि च ।

न्नुच्चरसि स्वधा अनु । यदद्य त्वा सूर्योपब्रवामहै तन्नो देवा अनुमंसीरत क्रतुं ॥५॥ तं नो द्यावापृथिवी तन्न आप इन्द्रः शृण्वन्तु मरुतो हवं वचः । मा शूने भूम सूर्यस्य संदृशि भद्रं जीवन्तो जरणामशीमहि ॥ ६ ॥ विश्वाहा त्वा सुमनसः सुचक्षसः प्रजावन्तो अनमीवा अनागसः । उद्यन्तं त्वा मित्रमहो दिवेदिवे ज्योग्जीवाः प्रति पश्येम सूर्य ॥७॥ महि ज्योतिर्बिभ्रतं त्वा विचक्षण भास्वन्तं चक्षुषे चक्षुषे मयः । आ रोहन्तं बृहतः पाजसस्परि वयं जीवाः प्रति पश्येम सूर्य ॥ ८ ॥ यस्य ते विश्वा भुवनानि केतुना प्र चेरते नि च विशन्ते अक्तुभिः। अनागास्त्वेन हरिकेश सूर्याह्नाह्ना नो वस्यसा वस्यसोदिहि ॥ ९ ॥ शं नो भव चक्षसा शं नो अह्ना शं भानुना शं हिमा

---

प्रातर्होमे निवृत्ते सति पश्चादुद्गच्छसीत्यर्थः । तथाच यद्यदाद्यास्मिन्नहनि त्वा त्वां उपब्रवामहै उपब्रूमस्तदा नोऽस्माकं तं क्रतुं तत्कर्म देवा इन्द्रादयोऽनुमंसीरतानुमन्यन्ताम् ॥५॥—द्यावापृथिवी द्यावापृथिव्यौ आपश्चेन्द्रश्च मरुतश्च नोऽस्माकं तं हवमाह्वानं नोऽस्माकं तद्वचः स्तुतिरूपं वाक्यं च । न इति द्विरुक्तिरादरार्था । शृण्वन्तु । किंच वयं सूर्यस्य संदृशि संदर्शने शूने प्रवृद्धाय दुःखाय मा भूम मैव भवेम किंतु जीवन्तश्चिरं प्राणान्धारयन्तो वयं भद्रं कल्याणं जरणां वृद्धत्वममरत्वं चाशीमहि प्राप्नुयाम ॥६॥१॥—हे सूर्य, त्वा त्वां सुमनसः प्रीतियुक्तमनस्काः सुचक्षसः सुदर्शनाः प्रजावन्तः पुत्राद्युपेताः अनमीवाः रोगरहिताः अनागसोऽपराधवर्जिताश्च वयं विश्वाहा सर्वदा यजेमेति शेषः । किंच हे मित्रमहः मित्राणां पूजयितः सूर्य, दिवेदिवे प्रतिदिनं उद्यन्तमुदयं प्राप्नुवन्तं त्वा त्वां ज्योक् चिरं जीवाजीवन्तो वयं प्रतिपश्येम ॥७॥–हे विचक्षण विद्रष्टः सूर्य, महि महज्ज्योतिस्तेजो बिभ्रतं धारयन्तं भास्वन्तं दीप्तिमन्तं चक्षुषे चक्षुषे सर्वेषां द्रष्टॄणां चक्षुषे मयः सुखकरं बृहतो महतः पाजसो बलवतः परि महतो बलवतः । सामुद्रस्योदकस्योपरीत्यर्थः । आरोहन्तं त्वा त्वां जीवाश्चिरं जीवन्तो वयं प्रति प्रतिदिनं पश्येम ॥८॥–हे हरिकेश हरितवर्णकेश सूर्य, यस्य ते तव केतुना प्रज्ञानेन विश्वा विश्वानि भुवनानि भूतजातानि प्रचेरते प्रकर्षेण गच्छन्ति । अक्तुभी रात्रिभिः निविशन्ते च विश्राम्यन्तिच । स्वपन्तीत्यर्थः । स त्वं नोऽस्माकं अनागास्त्वेनापराधवर्जितत्वेन वस्यसा वस्यसा अत्यन्तश्रेयस्करेण वसुमत्तरेण वा अह्नाह्ना तेन तेन दिवसेनोदेह्युद्गच्छ ॥ ९ ॥—हे सूर्य, त्वं चक्षसा तेजसा नोऽस्माकं शं सुखकरो भव । अह्ना दिवसेन शं सुखकरो नोऽस्माकं भव । भानुना रश्मिना च शं भवास्माकं सुखकरो

शं घृणेन। यथा शमध्वञ्छमसद्दुरोणे तत्सूर्य द्रविणं धेहि चित्रम् ॥१०॥ अस्माकं देवा उभयाय जन्मने शर्म यच्छत द्विपदे चतुष्पदे। अदत्पिबदूर्जयमानमाशितं तदस्मे शं योररपो दधातन ॥११॥ यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेळनम्। अरावा यो नो अभि दुच्छुनायते तस्मिन्तदेनो वसवो निधेतन ॥१२॥ (८।८।१६) सूर्यो नो दिवस्पातु वातो अन्तरिक्षात्। अग्निर्नः पार्थिवेभ्यः ॥ १ ॥ जोषा सवितर्यस्य ते हरः शतं सवाँ अर्हति। पाहि नो दिद्युतः पतन्त्याः ॥२॥ चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः। चक्षुर्धाता दधातु नः ॥३॥ चक्षुर्नो धेहि चक्षुषे चक्षु-

भव। हिमा शैत्येन च शं भव। घृणेनौष्ण्येन च शंकरो भव। यथा यादृशेन नोऽस्माकमध्वन्नध्वनि मार्गे शं भवति। दुरोणे गृहे च शं सुखमसद्भवति तच्चित्रं पूजनीयं द्रविणं धनं धेह्यस्मभ्यं प्रयच्छ ॥ १० ॥—हे देवाः, सूर्येणाभ्यनुज्ञाता यूयमस्माकं द्विपदे मनुष्यात्मकाय चतुष्पदे पश्वात्मकाय चोभयायोभयविधाय जन्मने भूतजाताय शर्म सुखं यच्छत दत्त। किंच यथास्मत्पुत्रादिकं अदद्भक्षणीयं पिबत्पानीयं पिबन्नोर्जयमानं बलवन्तमिवात्मानमाचरदाशितं सुहितं च भवति। तथा अस्मेऽस्माकं तत् शं रोगशान्तिनिमित्तकं सुखं योर्विषययोगजनितं सुखं च अरपः अपापं च दधातन प्रयच्छत ॥११॥—हे वसवो वासयितारो देवाः, वो युष्माकं वयं जिह्वया वाचा मनसः प्रयुती प्रयुत्या प्रयोगेण उरु महद्देवहेळनं देवक्रोधनं च यदेनश्चकृमाकार्ष्म। योऽस्मच्छत्रुर्नोऽस्मानभि प्रति अरावा गमनवान् भूत्वा दुच्छुनायते पापान्याचरति अस्मानुद्वेजयति वा तस्मिन्नस्मच्छत्रौ तदेनोऽस्माभिः कृतं पापं निधेतन सूर्यस्याज्ञया निधत्त। स्थापयतेत्यर्थः ॥ १२ ॥

(सूर्यो नो८।८।१६) सूर्यः सर्वस्य प्रेरकः शोभनीयो वा देवो दिवो द्युलोकात् द्युलोकवर्तिनो जनान्नोऽस्मान्पातु रक्षतु। वातो वायुश्चान्तरिक्षान्मध्यमस्थानगताद्बाधकादस्मान्रक्षतु। तथा पृथिवीस्थानोऽग्निश्च पार्थिवेभ्यः पृथिव्यां वर्तमानेभ्यः शत्रुभ्यो नोऽस्मान्रक्षतु ॥१॥—हे सवितः सर्वस्य प्रेरक सूर्य, जोषास्मत्स्तुत्यादिकं सेवस्व। यस्य ते तव हरो रसहरणशीलं तेजः शतं सवान्बहून्यज्ञान्प्रति अर्हति योग्यं भवति। यद्वा प्रकाशनादिद्वारा पूजयति स त्वं नोऽस्मान्पतन्त्या निपतन्त्याः शत्रुभिरस्मासु क्षिप्यमाणाया दिद्युतः। वज्रनामैतत्। द्योतमानायाः शक्तेरायुधात्पाहि रक्ष ॥२॥—सविता प्रेरको देवो नोऽस्माकं चक्षुःप्रकाशकमिन्द्रियमिन्द्रियानुग्राहकं तेजो वा दधातु। उतापि च पर्वत इन्द्रसहचरः पर्वताख्योऽपि देवो नोऽस्माकं चक्षुर्दधातु। धाता सर्वस्य विधाता आदित्यानामन्यतमश्च नोऽस्माकं

वि॒ख्यै त॒नूभ्यः॑ । सं चे॒दं वि च॑ पश्येम ॥ ४ ॥ सुसं॒दृशं॑ त्वा व॒यं प्रति॑ पश्येम सूर्य । वि प॑श्येम नृ॒चक्ष॑सः ॥ ५ ॥

(८।८।२८) वि॒भ्राड्बृ॒हत्पि॑बतु सो॒म्यं मध्वायु॒र्दध॑द्य॒ज्ञप॑ता॒ववि॑ह्रुतम् । वात॑जूतो॒ यो अ॑भि॒रक्ष॑ति॒ त्मना॑ प्र॒जाः पु॑पोष पुरु॒धा वि रा॑जति ॥१॥ वि॒भ्राड्बृ॒हत्सुभृ॑तं वाज॒सात॑मं॒ धर्म॑न्दि॒वो ध॒रुणे॑ स॒त्यमर्पि॑तम् । अ॒मि॒त्र॒हा वृ॑त्र॒हा द॑स्यु॒हन्त॑मं॒ ज्योति॑र्जज्ञे असुर॒हा स॑पत्न॒हा ॥ २ ॥ इ॒दं श्रेष्ठं॒ ज्योति॑षां॒ ज्योति॑रुत्त॒मं वि॑श्व॒जिद्ध॑न॒जिदु॑च्यते बृ॒हत् । वि॒श्व॒भ्राड्भ्रा॒जो

---

चक्षुर्विदधातु ॥३॥—नोऽस्माकं चक्षुषे रूपोपलब्धिकारणायेन्द्राय चक्षुः प्रकाशकं तदनुग्राहकं तेजः हे सूर्य, धेहि विधेहि कुरु । यद्वा न इति व्यत्ययेन बहुवचनम् । चक्षुषे चक्षुःसंज्ञाय नो मह्यं चक्षुरिन्द्रियं वा तेजो वा हे सूर्य, धेहि प्रयच्छ । तनूभ्योऽस्माकं शरीरेभ्यः तनयेभ्यो वा विख्यै विख्यानाय प्रकाशनाय चक्षुः त्वदीयं प्रकाशं विधेहि । यत एवं तस्मात्कारणात्त्वदीयेन तेजसा वयं च इदं सर्वं जगत् संपश्येम सम्यग्द्रष्टारो भवेम । विपश्येम विविधं च सविशेषं द्रष्टारो भवेम ॥४॥—हे सूर्य, सुसंदृशं सुष्ठु संद्रष्टारं त्वा त्वां वयं प्रतिपश्येम प्रत्येकं द्रष्टारो भूयास्म । तथा नृचक्षसः नृभिर्मनुष्यैरस्माभिर्द्रष्टव्यान्पदार्थान् विपश्येम विद्रष्टारो भवेम । यद्वा नृचक्षसो नृणां शत्रुमनुष्याणां हिंसकाः सन्तो वयं विशिष्टज्ञाना भवेम ॥ ५ ॥

(विभ्राट्८।८।२८)विभ्राट् विभ्राजमानो विशेषेण दीप्यमानः सूर्यो बृहन्महत्परिवृढं सोम्यं सोममयं मधु पिबतु । किं कुर्वन् । यज्ञपतौ यजमाने अविह्रुतमकुटिलं आयुर्दधत्कुर्वन् यः सूर्यो वातजूतो वातेन महावायुना प्रेर्यमाणःसन् त्मना आत्मना स्वयमेव अभिरक्षति सर्वं जगदभिपश्यन्पालयति । राशिचक्रस्य वायुप्रेर्यत्वात्सूर्यस्यापि तत्प्रेर्यत्वम् । स सूर्यः प्रजाः पुपोष वृष्ट्यादिप्रदानेन पोषयति । पुरुधा बहुधा विराजति विशेषेण दीप्यते च ॥ १ ॥—विभ्राट् विभ्राजमानं बृहत्प्रौढं सुभृतं सुपुष्टं वाजसातमं वाजस्यान्नस्य बलस्य वा दातृतमं धर्मन् धर्मणि वायुना धारयितव्ये दिवो द्युलोकस्य धरुणे धारके सूर्यमण्डले अर्पितं निक्षिप्तं सत्यमविनश्वरं अमित्रहा अमित्राणामप्रियाणां हन्तृ वृत्रः वृत्राणामावृण्वतां हन्तृ दस्युहन्तमं दस्यूनामुपक्षपयितॄणां हन्तृतमं असुरहा असुराणां क्षेप्तॄणां घातकं सपत्नहा सपत्नानां सहजशत्रूणामपि घातकमीदृग्भूतं ज्योतिः सौरं तेजो जज्ञे प्रादुर्भवति ॥ २ ॥—इदं सौरं तेजः श्रेष्ठं प्रशस्यतमं ज्योतिषामन्येषां ग्रहनक्षत्रादीनामपि ज्योतिः प्रकाशकं अतएवोत्तममुत्कृष्टं विश्वजिद्विश्वस्य सर्वस्य जेतृ धनजिद्धनस्य च जेतृ बृहत्प्रभूतमुच्यते एवंगुणविशिष्टमिति सर्वैरभिधीयते । अपिच विश्वभ्राट् विश्वस्य

महि॒ सूर्यो॑ दृ॒शे उ॒रु प॑प्रथे॒ सह॒ ओजो॒ अच्यु॑तम् ॥ ३ ॥ वि॒भ्राज॒ञ्ज्योति॑षा॒ स्व१॒॑रग॑च्छो रोच॒नं दि॒वः। येने॒मा विश्वा॒ भुव॑ना॒न्याभृ॑ता वि॒श्वक॑र्मणा वि॒श्वदे॑व्यावता ॥४॥(८।८।४७) आ यं गौः पृश्नि॑रक्रमी॒दस॑दन्मा॒तरं॑ पु॒रः। पि॒तरं॑ च प्र॒यन्त्स्वः॑ ॥१॥ अ॒न्तश्च॑रति रोच॒नास्य प्रा॒णाद॑पान॒ती। व्य॑ख्यन्महि॒षो दिव॑म् ॥२॥ त्रिं॒शद्धाम॒ वि रा॑जति॒ वाक्प॑त॒ङ्गाय॑ धीयते ॥

---

प्रकाशयिता भ्राजो भ्राजमानः महि महान्सूर्यः दृशे दर्शनाय उरु विस्तीर्णं सहः तमसोऽभिभवितृ अच्युतं च्युतिरहितमविनाशं ओजस्तेजोरूपं बलं पप्रथे विस्तारयति ॥ ३ ॥—हे सूर्य, ज्योतिषा तेजसा स्वः सर्वं जगत् विभ्राजन्विभ्राजयन् दिवः संबन्धि रोचनं अगच्छः प्राप्नोः। विश्वकर्मणा सर्वव्यापारहेतुना विश्वदेव्यावता विश्वेषां देवानां हितो यागादिर्विश्वदेव्यस्तद्वता येन सौरेण तेजसा इमानि परिदृश्यमानानि विश्वा सर्वाणि भुवनान्युदकानि भौमानि आभृता घर्मकालेऽभृतानि भवन्ति। यद्वा सर्वाणि भूतजातानि आभृता आसमन्ताद्भृतानि पोषितानि भवन्ति तेन ज्योतिषेत्यन्वयः ॥ ४ ॥

(आ यं गौः:८।८।४७) गौर्गमशीलः पृश्निः प्राप्तवर्णः प्राप्ततेजा अयं सूर्यः अक्रमीदाक्रान्तवान्। उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च पुरः पुरस्तात्पूर्वस्यां दिशि मातरं सर्वस्य भूतजातस्य निर्मात्रीं पृथिवीं असददासीदति प्राप्नोति। सदेश्छान्दसो लुङ् लृदित्वाच्चलेरङादेशः। ततः पितरं पालकं द्युलोकं चशब्दादन्तरिक्षं च प्रयन्प्रकर्षेण शीघ्रं गच्छन् स्वः सुअरणः शोभमानो भवति। यद्वा पितरं स्वर्गलोकं प्रयन्वर्तते ॥१॥—अस्य सूर्यस्य रोचना रोचमाना दीप्तिः अन्तः शरीरमध्ये मुख्यप्राणात्मना चरति वर्तते। किंकुर्वती। प्राणादपानती मुख्यप्राणस्य प्राणाद्याः पञ्च वृत्तयस्तत्र प्राणनं नाडीभिरूर्ध्वं वायोर्निर्गमनं तथाविधात्प्राणात्प्राणनादनन्तरं अपानती अपानं नाडीभिरवाङ्मुखं वायोर्नयनं तत्कुर्वती। अपपूर्वादनितेर्लटः शतृ अदादित्वाच्छपो लुक् 'उगितश्च' इति ङीप् 'शतुरनुमः' इति नद्या उदात्तत्वम्। यद्वा अन्तर्द्यावापृथिव्योर्मध्ये अस्य सूर्यस्य रोचना रोचमाना दीप्तिश्चरति गच्छति। रुच दीप्तौ 'अनुदात्तेतश्च हलादेः' इति युच्। किंकुर्वती। प्राणात्प्राणनादुदयानन्तरं अपानती सायंसमयेऽस्तं गच्छन्ती ईदृश्या दीप्त्या युक्तः। अतएव महिषो महान्सूर्यः दिवमन्तरिक्षमुदयास्तमययोर्मध्ये व्यख्यद्विचष्टे प्रकाशयति। महेः अविमह्योष्टिषच् प्रत्ययः चक्षिङः ख्याञ्। छान्दसे लुङि 'अस्यतिवक्ति' इत्यादिना च्लेरङादेशः ॥२॥—त्रिंशद्धाम धामानि स्थानानि। वचनव्यत्ययः। वस्तोर्वासरस्याहोरात्रस्यावयवीभूतानि। अहःशब्दोऽवधारणे। द्युभिः सूर्यस्य दीप्तिभिरेव विराजति विराजन्ते विशेषेण दीप्यन्ते। व्यत्ययेनैकवचनम्। मुहूर्तान्यत्र धामान्यु-

प्रतिवस्तोरह्द्युभिः ॥३॥(८।८।४७)ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ १ ॥ समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥ सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥३॥(७।८।११)सविता पश्चातात्सविता पुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् । सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥ १ ॥ श्रीसूर्यनारायणार्पणमस्तु । इति सौरसूक्तानि समाप्तानि ॥

## अथ देवतार्चनविधिः ।

श्रीः॥मदनरत्ने मरीचिः। विधाय देवतापूजां प्रातर्होमादनन्तरम्। इति। आचाररत्ने शौनकोऽप्येवम्। उपवेशनमन्त्रमाह व्यासः। पृथिव्या मेरुपृष्ठ तु ऋषिरित्यभिधीयते । सुतलं छन्द इत्याहुः कूर्मो वै देवता स्मृता । मेरोरारोहणं त्वस्य विनियोगः प्रकीर्तितः । इति । पूज्यदेवताः स्मृत्यर्थसारे । ब्र-

---

च्यन्ते पञ्चदशरात्रेः पञ्चदशाह्नः पतङ्गाय पतति गच्छतीति पतङ्गः सूर्यस्तस्मै श्रुतिरूपाय वाक्प्रतिधीयते प्रतिमुखं स्तोतृभिः क्रियते । यद्वा वस्तोरहनि त्रिंशद्धामानि । घटिकाभिप्रायमेतत् । त्रिंशद्घटिकाः । अत्यन्तसंयोगे द्वितीया । एतावन्तं कालं द्युभिर्दीप्तिभिरसौ सूर्यो विराजति विशेषेण दीप्यते । तस्मिंश्च समये वाक् त्रयीरूपा तस्मै सूर्यरूपाय पतङ्गाय प्रतिधीयते प्रतिमुखं धार्यते स्तूयते सूर्यः सर्वत इत्यर्थः । श्रूयते हि–'ऋग्भिः पूर्वाह्ने दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः' इत्यादि । यदा त्विदं सूक्तं सार्पराज्ञ्या आत्मस्तुतिस्तदा सूर्यात्मना स्तूयत इत्यवगन्तव्यम् ॥ ३ ॥

( सविता पश्चा ७।८।११ ) पश्चातात्पश्चिमतः स्थितः सविता पुरस्तात्पूर्वतः स्थितः सविता उत्तरात्तादुत्तरतः स्थितश्च अधरात्तात् दक्षिणतश्च स्थितः सविता नोऽस्माकं सर्वतातिं सर्वमभिलषितं धनादिकं सुवतु प्रेरयतु । किंच सवितैव नोऽस्मभ्यं दीर्घं बहुकालीनमायुः रासतां ददातु । बहुधा सवितृपदग्रहणमत्यन्तमादरार्थम् ॥ १ ॥ इति सौरसूक्तमन्त्राणां भाष्यं संपूर्णम् ॥

---

१ ऋतंचेति त्र्यृचस्य भाष्यं पूर्वं २१ पृष्ठे संध्यायामघमर्षणप्रसङ्गे गतमिति नात्र पुनःसंगृहीतं तत्तत एवालोचनीयम् ।

ह्माणं विष्णुमीशानं सूर्यमग्निं गणाधिपम् । दुर्गां सरस्वतीं लक्ष्मीं गौरीं वा नित्यमर्चयेत् । इति । तत्रापि कलौ हरिहरयोः पूजा प्रशस्ता । तदुक्तं महाभारते । कलौ कलिमलध्वंसं सर्वपापहरं हरिम् । येऽर्चयन्ति नरा नित्यं तेऽपि वन्द्या यथा हरिः । स्कान्दे । ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान्हरिः । द्वापरे भगवान्विष्णुः कलौ देवो महेश्वरः । इति । हरेरर्चनं यद्यपि । अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च । षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् । इत्याग्नेयपुराणवाक्यादनेकत्र प्रतीयते तथापि कलौ शालग्रामे शिवनाभिसंज्ञके वा शिलायामेव प्रशस्तम् । तथोक्तं स्कान्दे । कामासक्तोऽथ वा क्रुद्धः शालग्रामशिलार्चनात् । भक्त्या वा यदि वाऽभक्त्या कलौ मुक्तिमवाप्नुयात् । वैवस्वतभयं नास्ति तथा च कलिकालजम् । प्रयोगपारिजाते । तत्राप्यामलकीतुल्या पूज्या सूक्ष्मैव या भवेत् । यथा यथा शिला सूक्ष्मा तथा स्यात्तु महत्फलम् । पाद्मे । दृश्यते शिखरे लिङ्गं शालग्रामसमुद्भवम् । तस्य योगेश्वरो नाम ब्रह्महत्यां व्यपोहति । प्रयोगपारिजाते स्कान्दे । यवमात्रे तु गर्ते स्याद्यवार्धं लिङ्गमुच्यते । शिवनाभिरिति ख्यातस्त्रिषु लोकेषु दुर्लभः । पाद्मे । शालग्रामोद्भवं चक्रं चक्रं द्वारावतीभवम् । उभयोः पूजनं यत्र मुक्तिस्तत्र न संशयः । शिवपूजनमपि कलौ बाणलिङ्गे प्रशस्तम् । तथाच भविष्ये । बाणलिङ्गानि राजेन्द्र ख्यातानि भुवनत्रये । न प्रतिष्ठा न संस्कारस्तेषामावाहनं तथा । इति । हेमाद्रौ । पक्वजम्बूफलाकारं कुक्कुटाण्डसमाकृति । भुक्तिमुक्तिप्रदं चैव बाणलिङ्गमुदाहृतम् । स्मृत्यर्थसारे । शालग्रामे च चक्राङ्के पट्टमुद्रासु देवताः । नित्यं सन्ति हिरण्येषु रत्नगोब्राह्मणेषु च । इति । ऋग्विधाने । अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम् । प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः ।

आपो ह्यायतनं तस्य तस्मात्तासु सदा हरिः । तस्य सर्वगतत्वात्तु स्थण्डिले भावितात्मनाम् । दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा । अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् । तथा पुरुषसूक्तेन सर्वान्देवान्सदार्चयेत् । इति ऋग्विधानाच्च । अङ्गुष्ठाधिकतरप्रतिमां धातुमयीं पर्वणि स्नापयेन्नतु नित्यम् । स्मृत्यर्थसारे । पौरुषेणैव सूक्तेन गायत्र्या प्रणवेन वा । स्वैर्मन्त्रैरर्चयेन्नित्यं पत्रैः पुष्पैस्तथाम्बुभिः । इति कूर्मपुराणात् । हेमाद्रौ । देवतानामभिर्वा स्याच्चतुर्थ्यन्तैर्नमोन्वितैः । तल्लिङ्गैरेव वा मन्त्रैरर्चयेद्गुर्वनुज्ञया । इति । अत्रोपासनासंप्रदायेन पित्राद्युपदिष्टदेवतायाः वेदानुसारेण पूजनं कुर्यादिति सिद्धान्तः । स्त्रीशूद्रादीना विष्णुशिवाद्यर्चने नाधिकारः । बृहन्नारदीये । स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर । स्पर्शने नाधिकारोऽस्ति विष्णोर्वा शंकरस्य च । इति । पाद्मे । स्त्रीशूद्रपतितादीनां षण्ढादीनां विकर्तिनाम् । नैवाधिकारो विज्ञेयः शालग्रामशिलार्चने । इति । व्यासः । प्रतिमापट्टयन्त्राणां नित्यं स्नानं न कारयेत् । कारयेत्पर्वदिवसे यथा मलनिवारणम् । इति । वस्त्रस्य न प्रतिदिनमपूर्वतानियम इत्युक्तं तत्त्वसागरसंहितायां विद्यासारे । यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठन्ति देवताः । निर्माल्यं न भवेत्तावत्स्वर्णरत्नविभूषणम् । इति । तत्रापूर्वाभावे पर्युषितादि । तत्र भागीरथ्यतिरिक्तं पर्युषितं जलं त्याज्यम् । पत्रपुष्पाणि च वर्ज्यानि । पङ्कजं पञ्चरात्रं स्याद्दशरात्रं च बिल्वकम् । तुलस्येकादशाहात्तु पुनः प्रक्षाल्य पूजयेत् । इति हेमाद्रिवचनाद्ग्राह्यम् । तथा । नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणेश्वरम् । दूर्वाभिर्नार्चयेद्दुर्गां केतकैर्न महेश्वरम् । शालग्रामशिलामेव नाक्षतैरर्चयेद्द्विजः । इति । पञ्चायतनातिरिक्तोऽयं निषेध इति हेमाद्रिः । तथा ।

यस्य यस्य यो यो नियमस्तस्य तस्य तत्तन्निषेधवचनप्राबल्याभावो बोद्धव्यो न्यायात्। तथा। नाङ्गुष्ठैर्मर्दयेद्देवं नाधः पुष्पैः समर्चयेत्। कुशाग्रैर्न पिबेत्तोयं वज्रपातसमं भवेत्। इति हेमाद्रिः। देवपूजायां दार्वाद्यासनं निषिद्धमित्याचाररत्ने। तथाच रामार्चनचन्द्रिकायाम्। वंशाश्मदारुधरणितृणपल्लवनिर्मितम्। वर्जयेदासनं धीमान्दारिद्र्यव्याधिदुःखदम्। कृष्णाजिनं व्याघ्रचर्म कौशेयं वेत्रनिर्मितम्। वस्त्राजिनं कम्बलं वा कल्पयेदासनं मृदु। इति॥

## अथ सर्वसाधारणदेवपूजाप्रयोगः।

बहिः कर्माङ्गाचमनं कृत्वा देवगृहं प्रविश्य। पृथ्वि त्वयेत्यस्य मेरुपृष्ठ ऋषिः कूर्मो देवता सुतलोऽनुष्टुप्छन्दः मेरुपृष्ठासने विनियोगः। पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम्। ॐभूर्भुवःस्वः इत्यासने उपविश्य यथासंभवं पूजासंभारानासाद्य देवाद्दक्षिणे घृतदीपं वामतस्तैलदीपं संस्थाप्य प्राणानायम्य इष्टदेवता गुर्वादींश्च नमस्कृत्य देशकालावुत्कीर्त्य। ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं यथामिलितसंभारैर्देवपूजां करिष्य इति संकल्प्य भूतशुद्धिं कुर्यात्। सर्षपान्विकिरन्मन्त्रौ पठेत्। अपसर्पन्तु वामदेवो भूतान्यनुष्टुप्। भूतोत्सादने विनियोगः। अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः। ये भूता विघ्नकर्तारस्ते गच्छन्तु शिवाज्ञया। अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम्। सर्वेषामवरोधेन पूजाकर्म समारभे इति वामपादतलपार्ष्णेन भूमिं त्रिः प्रहृत्य। देवा आयान्तु। यातुधाना अपयान्तु। विष्णो देवयजनं रक्षस्व। इति भूमौ प्रादेशं कुर्यात्। येभ्यो मातेत्यस्य गयःप्लातो विश्वेदेवा जगती

मनुष्यगन्धनिवारणे विनियोगः।(८।२।३)ॐयेभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः । उक्थशुष्मान्वृषभरान्त्स्वप्नसस्ताँ आदित्याँ अनुमदा स्वस्तये॥१॥एवापित्र इत्यस्य वामदेवो बृहस्पतिस्त्रिष्टुप् । मनुष्यगन्धनिवारणे विनियोगः । (३।७।२७।)ॐएवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः।बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् १ इत्यृचौ पठित्वा घण्टाध्वनिं कुर्यात् । आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् । कुर्वे घण्टारवं तत्र देवताह्वानसन्निधौ। इति घण्टां वादयित्वा चन्दनेन षट्कोणं मण्डलत्रयमुदक्संस्थमालिख्य गन्धाद्यैर्मण्डलान्यभ्यर्च्य दक्षिणमण्डले शङ्खं प्रक्षाल्याद्भिरापूर्य स्थाप्य मध्यमण्डले ताम्रमयमर्घ्यपात्रमद्भिरापूर्य स्थाप्योत्तरमण्डले ताम्रमयं कलशमद्भिरापूर्यस्थाप्यान्यान्येकादश पात्राणि तत्पुरतः प्राक्संस्थान्युदक्संस्थानि वासादयेत् । तेषां विनियोगश्च मलस्नानार्थमेकमाचमनार्थं चत्वारि पञ्चामृतार्थं पञ्च पानीयार्थमेकमेवमेकादश पात्राण्यासाद्यवा शङ्खमर्घ्यपात्रं कलशं च गन्धादिनाभ्यर्च्य शङ्खं नत्वा तस्मिंस्तीर्थानि स्मरेत् । शङ्खं चन्द्रार्कदैवत्यं वरुणं चाधिदैवतम् । पृष्ठे प्रजापतिं

---

( येभ्यो माता०८।२।३ ) माता सर्वस्य निर्मात्री पृथिवी येभ्यो देवेभ्यो देवार्थं मधुमन्माधुर्योपेतं पयः सारभूतं क्षीरं पिन्वते क्षरति । तथा अदितिरदीना अद्रिबर्हाः मेघैः परिवृढा प्रवृद्धा परिवृद्धमेघा वा द्यौश्च पीयूषं पिन्वते । द्यावापृथिव्यौ हविरुत्पादयत इत्यर्थः । ऋषिरात्मानं संबोध्याह । उक्थशुष्मानतिबलान् वृषभरान्वृष्टेराहर्तॄन् । 'हृग्रहोर्भः–'इति भः । स्वप्नसः सुकर्मणः तानादित्यानदितेः पुत्रान्देवान्स्वस्तयेऽविनाशाय अनुमदानुस्तुहि । माद्यतेर्लोटि व्यत्ययेन शप् । मन्दतेर्वा स्तुत्यर्थस्य 'अनित्यमागमशासनम्' इति नुमभावः ॥ १ ॥

( एवा पित्रे० ३।७।२७ ) पित्रे पालकाय विश्वदेवाय सर्वदेवतारूपाय । देवानां मन्त्रप्रतिपाद्यत्वादस्य च मन्त्राभिमानित्वाद्वैश्वदेवत्वम् । यद्वा अत्र देवशब्दः स्तुत्यर्थः । सर्वैः स्तुत्याय वृष्णे वर्षकाय बृहस्पतये देवाय एवमेवमुक्तप्रकारेण यज्ञैस्तत्साधनैर्हविर्भिराज्यचर्वादिलक्षणैर्नमसा स्तुत्या च विधेम परिचरेमहे बृहस्पते सुप्रजाः शोभनप्रजा वीरवन्तो वीर्योपेता वयं रयीणां धनानां पतयः स्याम ॥ १ ॥

विद्यादग्रे गङ्गासरस्वती । तथा । पृथिव्यां यानि तीर्थानि स्थावराणि चराणि च । तानि तीर्थानि शङ्खेऽस्मिन्विशन्तु ब्रह्मशासनात् । इत्युच्चार्य शङ्खमुद्रामर्घ्यमुद्रां कलशमुद्रां च क्रमेण प्रदर्श्य कलशदेवतां स्मरेत् । कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्रास्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः । कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुंधरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः । अङ्गैश्च सहिताः सर्वे कलशांबुसमाश्रिताः । अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा । आयान्तु देवपूजार्थं दुरितक्षयकारकाः । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु देवपूजार्थं दुरितक्षयकारकाः । इति कलशदेवताः स्मृत्वा शङ्खोदकैः सप्रणवव्याहृत्या पूजासंभारानात्मानं चाभ्युक्ष्य । ॐ वह्निमण्डलाय नमः इति नत्वा । देवानुत्थाप्य निर्माल्यं विसृज्य प्रतिष्ठापनं कुर्यात् । तदस्त्वित्यस्याप्रतिरथो मैत्रावरुणो जगती । देवताप्रतिष्ठापने विनियोगः । (४।३।१) ॐ तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम् । अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥ १ ॥ गृहा वै प्रतिष्ठासूक्तं तत्प्रतिष्ठिततमया वाचा शंस्तव्यं तस्माद्यद्यपि दूरइव पशूँल्लभते गृहानेवै नाना जिगमिषति गृहाहि पशूनां प्रतिष्ठा प्रतिष्ठा । ततः प्राणप्रतिष्ठां कुर्यात् । असुनीते पुनरस्मासु चक्षुरिति

---

( तदस्तु० ४।३।१ ) अत्र लिङ्गसिद्धा देवताः । हे मित्रावरुणा मित्रावरुणौ, तदिदं सूक्तं शस्तं स्तुतमस्तु भवतु । हे अग्ने, तत्सूक्तं शस्तमस्तु । अस्मभ्यं शं सुखाय योर्दुःखानाममिश्रणायेदं शस्तमस्तु । वयं च अशीमहि प्राप्नुयाम । गाधं स्थितिं उतापिच प्रतिष्ठां स्थितेरविच्छित्तिं चाशीमहि । नमो नमस्करोमि । दिवे द्योतमानाय सूर्याय बृहते महते सादनायाश्रयाय विश्वस्य ॥ १ ॥

मन्त्रेण(८।१।२३)ॐअसुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् । ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्ति ॥१॥ पुरुषसूक्तेन सद्योजातादिपञ्चमन्त्रैर्वा प्राणप्रतिष्ठां कुर्यादिति केचित् । स्वामिन्सर्वजगन्नाथ यावत्पूजाविसर्जनम् । तावत्त्वं प्रीतिभावेन शिलायां संनिधो भव । शान्तो भव । सुप्रसन्नो भव । वरदो भव । अभिमुखो भव । सुप्रतिष्ठो भव । अत्र प्राणप्रतिष्ठा आवाहनं च कृताकृतं बोध्यम् । ततः स्वस्याङ्गन्यासं कृत्वा देवस्याङ्गन्यासं च कुर्यात् ॥ ॥ पुरुषसूक्तन्यासः । करपज्जानुकटिषु नाभिहृत्कण्ठबाहुषु । मुखाक्षी मस्तके चैव वामादिषु तु पौरुषे । सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायण ऋषिः।पुरुषो देवता । अनुष्टुप्छन्दः ।अन्त्या त्रिष्टुप् ।न्यासे विनियोगः(८।४।१७)ॐसहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम्॥१॥ वामकरे । ॐपुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं । उतामृतत्व-

( असुनीते० ८।१।२३) हे असुनीते प्राणप्रदायिनि देवि, अस्मासु ।अस्मदीये सुबन्धावित्यर्थः । पुनश्चक्षुः प्रकाशकं नयनम् । ईक्षणसामर्थ्यमित्यर्थः। किंच प्राणं पुनरस्मासु धेहि स्थापय। वयं च ज्योक् चिरं उच्चरन्तमुद्गच्छन्तं सूर्यं देवं पश्येम। हे अनुमते देवि, स्वस्ति अविनाशं यथा तथा नोऽस्मान्मृळय सुखय ॥ १ ॥

## पुरुषसूक्तभाष्यम् ।

( सहस्रशीर्षा० ८।४।१७ ) सहस्रशीर्षेति षोडशर्चं षष्ठं सूक्तम् । नारायण ऋषिरन्त्या त्रिष्टुप् शिष्टा अनुष्टुभः । अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः 'पुरुषान्न परं किंचित्' इत्यादिश्रुतिषु प्रसिद्धः स देवता । तथा चानुक्रान्तम् । 'सहस्रशीर्षा षोडश नारायणः पौरुषमानुष्टुभं त्रिष्टुबन्तं तु' इति गतो विनियोगः। सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षा । सहस्रशब्दस्योपलक्षणत्वादनन्तैः शिरोभिर्युक्त इत्यर्थः । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तः पातित्वात् तदीयान्येवेति सहस्रशीर्षत्वम् । एवं सहस्राक्षत्वं सहस्रपात्त्वं च । स पुरुषो भूमिं ब्रह्माण्डगोलकरूपां विश्वतः सर्वतो वृत्वा परिवेष्ट्य दशांगुलपरिमितं देशमत्यतिष्ठदतिक्रम्य व्यवस्थितः । दशांगुलमित्युपलक्षणम्। ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ॥१॥—यदिदं वर्तमानं जगत्सर्वं तत् पुरुष एव।यच्च भूतमतीतं जगद्यच्च भव्यं भविष्यज्जगत्तदपि

स्येशानो यदन्नेनातिरोहति ॥२॥ दक्षिणकरे।ॐ एतावानस्य म-
हिमातो ज्यायांश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपाद-
स्यामृतं दिवि ॥ ३ ॥ वामपादे । ॐ त्रिपादूर्ध्व उदैत्पुरुषः
पादोऽस्येहाभवत्पुनः । ततो विष्वङ् व्यक्रामत्साशनानशने
अभि ॥ ४ ॥ दक्षिणपादे । ॐ तस्माद्विराळजायत विराजो
अधि पूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५॥

---

पुरुष एव । यथास्मिन्कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवास्तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः । उत अपिच अमृतत्वस्य देवत्वस्यायमीशानः स्वामी । यद्यस्मात्कारणादन्नेन प्राणिनामन्नेन भोग्येन निमित्तेनातिरोहति स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति । तस्मात्प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः ॥२॥ —अतीतानागतवर्तमानरूपं जगद्यावदस्ति एतावान्सर्वोऽपि अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषो न तु तस्य वास्तवं स्वरूपम् । वास्तवस्तु पुरुषः । अतो महिम्नोऽपि ज्यायानतिशयेनाधिकः । एतच्चोभयं स्पष्टीक्रियते । अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादश्चतुर्थांशः अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपममृतं विनाशरहितं सद्दिवि द्योतनात्मके स्वप्रकाशस्वरूपे व्यवतिष्ठत इति शेषः । यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याम्नातस्य परब्रह्मण इयत्ताया अभावात्पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात्पादत्वोपन्यासः ॥ ३ ॥—योऽयं त्रिपात्पुरुषः संसारस्पर्शरहितः ब्रहुलस्वरूपः सोऽयमूर्ध्व उदैत् अस्मादज्ञानकार्यात्संसाराद्बहिर्भूतः अत्रत्यैर्गुणदोषैरस्पृष्ट उत्कर्षेण स्थितवान् स्थितस्य तस्य योऽयं पादो लेशः सोऽयमिह मायायां पुनरभवत् सृष्टिसंहाराभ्यां पुनःपुनरागच्छति । अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तम्—'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति । ततो मायायामागत्यानन्तरं विष्वङ् देवतिर्यगादिरूपेण विविधः सन् व्यक्रामद्व्याप्तवान् । किं कृत्वा । साशनानशने अभि अभिलक्ष्य साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणिजातम्, अनशनं तद्रहितमचेतनं गिरिनद्यादिकं तदुभयं यथा स्यात्तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥४॥—विष्वङ् व्यक्रामदिति यदुक्तं तदेवात्र प्रपञ्च्यते—तस्मादिति । तस्मादादिपुरुषाद्विराट् ब्रह्माण्डदेहोऽजायत उत्पन्नः । विविधानि राजन्ते वस्तून्यत्रेति विराट् विराजो अधि विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषः तद्देहाभिमानी कश्चित्पुमानजायत । सोऽयं सर्ववेदान्तवेद्यः परमात्मा । स एव स्वकीयया मायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत् । एतच्चाथर्वणिका उत्तरतापनीये विस्पष्टमामनन्ति—'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव' इति । स जातो विराट्पुरुषोऽत्यरिच्यत

वामजानौ । ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥ दक्षिणजानौ । ॐ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः। तेन देवा अयजन्त साध्या ऋषयश्च ये॥७॥वामकट्यां । ॐतस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यं।पशूंस्तांश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये॥८॥दक्षिणकट्यां। ॐतस्माद्यज्ञात्सर्वहुतऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥९॥ नाभौ । ॐतस्मादश्वा अजायन्त येकेचोभयादतः।गावो ह जज्ञिरे तस्मात्तस्माज्जाता अ-

---

अतिरिक्तोऽभूद्देवतिर्यङ्मनुष्यादिरूपोऽभूत् । पश्चाद्देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः । अथो भूयः सृष्टेनन्तरं तेषां जीवानां पुरः ससर्ज । पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥५॥—यद्यदा पूर्वोक्तक्रमेण देवशरीरेषूत्पन्नेषु सत्सु देवा उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासंभवात्पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वतान्वतिष्ठन् । तदानीमस्य यज्ञस्य वसन्तो वसन्तर्तुरेवाज्यमासीदभूत् । तमेवाज्यत्वेन संकल्पितवन्त इत्यर्थः । एवं ग्रीष्म इध्म आसीत् । तमेवेध्मत्वेन संकल्पितवन्त इत्यर्थः । तथा शरद्धविरासीत् । तामेव पुरोडाशादिहविष्ट्वेन संकल्पितवन्त इत्यर्थः। एवं पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन संकल्पः, अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन संकल्प इति द्रष्टव्यम् ॥ ६ ॥—यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः । कीदृशमित्यत्राह । अग्रतः सर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नम्। एतच्च प्रागेवोक्तम् । 'तस्माद्विराळजायत विराजो अधि पूरुषः' इति । तेन पुरुषरूपेण पशुना देवा अयजन्त । मानसयागं निष्पादितवन्त इत्यर्थः । के ते देवा इत्यत्राह । साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयस्तदनुकूला ऋषयो मन्त्रद्रष्टारश्च ये सन्ति ते सर्वेऽप्ययजन्तेत्यर्थः ॥ ७ ॥—सर्वहुतः सर्वात्मकः पुरुषो यस्मिन्यज्ञे हूयते सोऽयं सर्वहुत् तादृशात्तस्मात्पूर्वोक्तान्मानसाद्यज्ञात्पृषदाज्यं दधिमिश्रमाज्यं संभृतं संपादितम् । दधि चाज्यं चेत्येवमादिभोग्यजातं संपादितमित्यर्थः । तथा वायव्यान्वायुदेवताकांस्ताँल्लोकप्रसिद्धान् आरण्यान्पशूंश्चक्रे उत्पादितवान् । आरण्या हरिणादयः, तथा ये च ग्राम्या गवादयस्तानपि चक्रे । पशूनामन्तरिक्षद्वारा वायुदेवतात्वं यजुर्ब्राह्मणे समाम्नायते 'वायवस्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षा अन्तरिक्षदेवत्याः खलु वै पशवो वायव एवैनान्परिददाति' इति ॥ ८ ॥—सर्वहुतस्तस्मात्पूर्वोक्ताद्यज्ञात् ऋचः सामानि जज्ञिरे उत्पन्नाः । तस्माद्यज्ञाच्छन्दांसि गायत्र्यादीनि जज्ञिरे । तस्माद्यजुरजायत ॥ ९ ॥—तस्मात्पूर्वोक्ताद्यज्ञात् अश्वा अजायन्त उत्पन्नाः । ये के चाश्वव्यतिरिक्ता गर्दभा अश्वतराश्चोभयादत ऊर्ध्वाधोभागयोर्दन्तयुक्ताः सन्ति तेऽप्यजायन्त । तथा तस्मा-

जावयः॥१०॥हृदये।ॐयत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते॥११॥ कण्ठे। ॐ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥१२॥ वामबाहौ। ॐचन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत॥१३॥ दक्षिणबाहौ। ॐनाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन्॥१४॥मुखे। ॐसप्तास्यासन्परिधयस्त्रिःसप्त समिधः कृताः

---

यज्ञात् गावश्च जज्ञिरे। किंच तस्माद्यज्ञादजा अवयश्च जाताः॥१०॥—प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते। प्रजापतेः प्राणरूपा देवा यद्यदा पुरुषं विराड्रूपं व्यदधुः संकल्पेनोत्पादितवन्तः। तदानीं कतिधा कतिभिः प्रकारैर्व्यकल्पयन्विविधं कल्पितवन्तः। अस्य पुरुषस्य मुखं किमासीत् कौ बाहू अभूतां कौ ऊरू कौ च पादौ उच्येते। प्रथमं सामान्यरूपाः प्रश्नाः पश्चान्मुखं किमित्यादिना विशेषविषयाः प्रश्नाः॥११॥—इदानीं पूर्वोक्तप्रश्नानामुत्तराणि दर्शयति। अस्य प्रजापतेर्ब्राह्मणो ब्राह्मणत्वजातिविशिष्टः पुरुषो मुखमासीत्। मुखादुत्पन्न इत्यर्थः। योऽयं राजन्यः क्षत्रियत्वजातिविशिष्टः स बाहू कृतः बाहुत्वेन निष्पादितः। बाहुभ्यामुत्पादित इत्यर्थः। तत्तदानीमस्य प्रजापतेः यत् यावूरू तद्रूपो वैश्यः संपन्नः। ऊरुभ्यामुत्पादित इत्यर्थः। तथास्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान्पुरुषोऽजायत। इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां सप्तमकाण्डे 'स मुखतस्त्रिवृतं निरमिमीत' इत्यादौ विस्पष्टमाम्नाता। अतः प्रश्नोत्तरे उभे अपि तत्परत्वेनैव योजनीये॥ १२ ॥—यथा दध्याज्यादिद्रव्याणि गवादयः पशव ऋगादिवेदाः ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्नाः, एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह। प्रजापतेर्मनसः सकाशात् चन्द्रमा जातः। चक्षोश्चक्षुषः सूर्योऽप्यजायत। अस्य मुखादिन्द्रश्चाग्निश्च देवावुत्पन्नौ। अस्य प्राणाद्वायुरजायत॥ १३ ॥—यथा चन्द्रादीन्प्रजापतेर्मनःप्रभृतयोऽकल्पयन् तथान्तरिक्षादीन् लोकान्प्रजापतेर्नाभ्यादयो देवा अवयवा अकल्पयन्नुत्पादितवन्तः। एतदेव दर्शयति। नाभ्याः प्रजापतेर्नाभेरन्तरिक्षमासीत्। शीर्ष्णः शिरसो द्यौः समवर्ततोत्पन्ना। अस्य पद्भ्यां पादाभ्यां भूमिरुत्पन्ना। अस्य श्रोत्राद्दिश उत्पन्नाः॥ १४ ॥—अस्य सांकल्पिकस्य यज्ञस्य गायत्र्यादीनि सप्त छन्दांसि परिधय आसन्। ऐष्टिकस्याहवनीयस्य त्रयः परिधय औत्तरवेदिकास्त्रय आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः। अत एवाम्नायते 'न पुरस्तात्परिदध्यादादित्यो ह्येवोद्यन्पुरस्ताद्रक्षांस्यपहन्ति' इति ततएते आदित्यस-

देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥ नेत्रयोः । ॐयज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥ मूर्ध्नि । ततो ब्राह्मणोस्येत्यादिपञ्चभिर्हृदयं शिरःशिखा कवचमस्त्रं चेति पञ्चाङ्गानीति स्मृतिमहार्णवे । अतोदेवेति षड्भिः षडङ्गमिति हेमाद्रिः ॥ ॥ अथ पञ्चाङ्गन्यासः ॥ ॥ ॐब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ हृदयायनमः । ॐचन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ शिरसेस्वाहा । ॐ नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥ शिखायैवषट् । ॐ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधः कृताः । देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुं ॥ कवचायहुं । ॐयज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ॥ तेह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ अस्त्रायफट् ॥ ॥ अथ षडङ्गन्यासः ॥

---

हिताः सप्त परिधयोऽत्र सप्त छन्दोरूपाः । तथा समिधस्त्रिःसप्त त्रिगुणितसप्तसंख्याका एकविंशतिः कृताः । द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंश इति श्रुताः पदार्था एकविंशतिदारुयुक्तेध्मत्वेन भाविताः । यद्यः पुरुषो वैराजोऽस्ति तं पुरुषं देवाः प्रजापतिप्राणेन्द्रियरूपा यज्ञं तन्वाना मानसं यज्ञं कुर्वाणाः पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः । एतदेवाभिप्रेत्य पूर्वत्र 'यत्पुरुषेण हविषा' इत्युक्तम् ॥ १५ ॥—पूर्वं प्रपञ्चेनोक्तमर्थं संक्षिप्यात्र दर्शयति । देवाः प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन संकल्पेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः । तस्मात्पूजनात्तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यान्यासन् । एतावता सृष्टिप्रतिपादकसूक्तभागार्थः संगृहीतः । अथोपासनतत्फलानुवादकभागार्थः संगृह्यते । यत्र यस्मिन्विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातना विराडुपास्तिसाधका देवाः सन्ति तिष्ठन्ति तं नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानस्तदुपासका महात्मानः सचन्त समवयन्ति प्राप्नुवन्ति ॥ १६ ॥ इति पुरुषसूक्तभाष्यम् ॥

( १।२।७ ) ॐअतो॑ दे॒वा अ॑वन्तु नो॒ यतो॒ विष्णु॑र्वि॒चक्र॒मे । पृ॒थि॒व्याः स॒प्त धाम॑भिः ॥ १ ॥ अङ्गुष्ठाभ्यांनमः हृदयायनमः ॥ ॐइ॒दं विष्णु॒र्वि॒च॑क्रमे त्रे॒धा नि द॑धे प॒दं । समू॑ढमस्य पां-

(अतो देवा १।२।७)प्रातःसवने सोमातिरेके एकं शस्त्रं शंसनीयम् । तत्र अतोदेवा–इत्याद्याःषट्ऋचः । 'सोमातिरेके' इति खण्डे सूत्रितम् । 'महां इन्द्रो यऽओजसा' 'अतो देवा अवन्तु नः' इति 'ऐन्द्रीभिर्वैष्णवीभिश्च' इति अप्तोर्यामेच्छावाकातिरिक्तोक्थेऽपि एताः षट् ऋचः स्तोत्रियानुरूपार्थाः । तथा च 'यस्य पशवः' इति खण्डे सूत्रितम् 'अतो देवा अवन्तु न इति स्तोत्रियानुरूपौ' इति । दर्शपूर्णमासयोः प्रायश्चित्तहोमेऽप्याद्ये विनियुक्ते । तथैव 'वेदं पत्न्या' इति खण्डे सूत्रितम् । 'अतो देवा अवन्तुन इति द्वाभ्यां व्याहृतिभिश्चे'ति । याज्यानुवाक्ययोर्मध्ये लौकिकभाषणे 'अतो देवा' इत्येषा जप्या । सूत्रितं हि 'आपद्यतो देवा अवन्तु न इति जपेत्' इति ॥—विष्णुः परमेश्वरः सप्तधामभिः सप्तभिर्गायत्र्यादिभिश्छन्दोभिः साधनभूतैः । यतः पृथिव्या यस्माद्भूप्रदेशाद्विचक्रमे विविधं पादक्रमणं कृतवान् । अतोऽस्मात्पृथिवीप्रदेशान्नोऽस्मान् देवा अवन्तु । विष्णोः पृथिव्यादिलोकेषु छन्दोभिः साधनैः जयं तैत्तिरीया आमनन्ति । 'विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन्' इति । विष्णोस्त्रिविक्रमावतारे पादत्रयक्रमणस्य पृथिव्युपादानम् । पृथिवीप्रदेशाद्रक्षणं नाम भूलोके वर्तमानानां पापनिवारणम् । अत एतच्छब्दात् 'पञ्चम्यास्तसिल्' इति तसिल् । 'एतदस्त्रतसोः' इत्यशादेशः । लित्स्वरेणाकार उदात्तः । यतः तसिलः 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञायां त्यदाद्यत्वं लित्स्वरः । विष्णुः । 'विषेः किच्च'इति नुप्रत्ययः । कित्वान्न गुणः । नित्यनुवृत्तेराद्युदात्तत्वम् । विचक्रमे । सुविति योगविभागाद्विशब्दस्य समासः । समासान्तोदात्तत्वम् । यद्वृत्तयोगान्न निघातः । सप्त 'सुपां सुलुक्' इति भिसो लुक् । धामभिः दधातेः 'आतो मनिन्' इति मनिन् । नित्स्वरः ॥ १ ॥—वैष्णवोपांशुयाजस्य इदं विष्णुरित्येषानुवाक्या उक्ता देवता इति खण्डे सूत्रितम् । 'इदं विष्णुर्विचक्रमे त्रिर्देवः पृथिवीमेष एताम्' इति । गार्हपत्याहवनीययोर्मध्ये श्वातिक्रमणेऽनयैव श्वपदेषु भस्म प्रक्षिपेत् । विध्यपराध इति खण्डे सूत्रितम् । भस्मना शुनः पदं प्रतिवपेत् 'इदं विष्णुर्विचक्रमे' इति आतिथ्यायां प्रधानस्य हविष एषैवानुवाक्या । अथातिथ्येळान्तेति खण्डे सूचितम् । 'इदं विष्णुर्विचक्रमे तदस्य प्रियमभिपाथो अश्यां' इति । उपसत्सु वैष्णवस्यैषैवानुवाक्या । अथोपसदिति खण्डे सूत्रितम् । 'गयस्फानो अमीवहा इदं विष्णुर्विचक्रमे' इति । विष्णुस्त्रिविक्रमावतारधारी इदं प्रतीयमानं सर्वं जगदुद्दिश्य विचक्रमे विशेषेण पादक्रमणं कृतवान् । तदा त्रेधा त्रिभिः प्रकारैः पदं निदधे स्वकीयं पादं प्रक्षिप्तवान् । अस्य विष्णोः पांसुरे धूलियुक्तपादस्थाने समूढं इदं सर्वं जगत्सम्यगन्तर्भूतम् । सेयमृग्यास्केनैवं व्याख्याता—'विष्णुर्विशतेर्वा व्यश्नोतेर्वा यदिदं किंच तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधा

सुरे ॥ २ ॥ तर्जनीभ्यांनमः शिरसेस्वाहा ॥ ॐत्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥३॥ मध्यमाभ्यांनमः शिखायै वषट् ॥ ॐविष्णोः कर्माणि पश्यत

---

भावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः । समूळहमस्य पांसुरेऽप्यायनेऽन्तरिक्षे पदं न दृश्यतेऽपि वोपमार्थे स्यात्समूळहमस्य पांसुल इव पदं न दृश्यते' इति । 'पांसवः पादैः सूयन्त इति पन्नाः शेरत इति वा पंसनीया भवन्तीति वा' इति । यदिदं किंचिद्विभागेनावस्थितं तद्विक्रमते विष्णुरादित्यः । कथमित्यत आह । त्रेधा निदधे पदं धत्ते पदम् । निधानैः पादैः ।क । तत्र तावत् 'पृथिव्यामन्तरिक्षे दिवि' इति शाकपूणिः । पार्थिवोऽग्निर्भूत्वा पृथिव्यां यत्किंचिदस्ति तद्विक्रमते तदधितिष्ठति । अन्तरिक्षे विद्युदात्मना । दिवि सूर्यात्मना । यदुक्तम्—'तमू अकृण्वन्त्रेधा भुवे कम्' इति । 'समारोहणे उदयगिरावुद्यन्पदमेकं निधत्ते विष्णुपदे मध्यंदिने अन्तरिक्षे गयशिरसि अस्तगिरौ इत्यौर्णवाभ आचार्य एवं मन्यते । समूळहमस्य पांसुरे अस्मिन्नाप्यायने एतस्मिन्नन्तरिक्षे सर्वभूतवृद्धिहेतौ यन्मध्यंदिनं पदं विद्युदाख्यं तत्समूढमन्तर्हितं न नित्यं दृश्यते । तदुक्तम्—'स्वपनमेतन्माध्यमिकं ज्योतिरनित्यदर्शनमिति । अपि वोपमार्थे स्यात्समूळहमस्य पांसुल इव पदं न दृश्यते' इति । यथा पांसुलप्रदेशे पदं न्यस्तमुत्क्षेपणसमनन्तरमेव पांसुभिराकीर्णत्वान्न दृश्यते एवमस्य मध्यमं विद्युदात्मकं पदमाविष्कृतिसमकालमेव व्यवधीयते नावतिष्ठत इत्यर्थः । पांसुरेति रो मत्वर्थीयः । अथ पांसवः कस्मात्ते हि पादैः सूयन्ते जन्यन्त इत्यर्थः । अथवा पन्नाः शेरत इति पंसनीया ध्वंसनीया ध्वंसनार्हास्ते भवन्ति तदाकीर्णस्य दुर्दर्शकत्वात् । त्रेधा । 'एधाच्च' इत्येधाच्प्रत्ययः । चितोऽन्तोदात्तः । समूळहम् । वह प्रापणे निष्ठेति क्तः । 'वचि स्वपि यज' इत्यादिना संप्रसारणम् । ढत्वष्टुत्वढलोपदीर्घत्वानि । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अस्य 'इदमोऽन्वादेशे' इत्यशनुदात्तः प्रत्ययश्च सुप्स्वरेण पांसुरे 'नगपांसुपाण्डुभ्यश्च' इति वक्तव्यमिति मत्वर्थीयो रः प्रत्ययस्वरः ॥२॥—उपसदि वैष्णवयागस्य प्रातःकाले याज्या सायंकालेऽनुवाक्या त्रीणि पदेत्येषा । सूत्रितं च—'त्रीणि पदा विचक्रमे इति स्विष्टकृदादि लुप्यत' इति । अदाभ्यः केनापि हिंसितुमशक्यः । गोपाः सर्वस्य जगतो रक्षको विष्णुः अत एतेषु पृथिव्यादिस्थानेषु त्रीणि पदानि विचक्रमे । किं कुर्वन् । धर्माण्यग्निहोत्रादीनि धारयन्पोषयन् । पदा 'सुपां सुलुक्' इत्यादिना विभक्तेर्डादेशः तस्य स्थानिवद्भावेनानुदात्तत्वे प्राप्ते उदात्तनिवृत्तिस्वरेणोदात्तत्वम् । गोपाः गोपामृतस्येत्यत्रोक्तम् । अदाभ्यः दभेः 'ऋहलोर्ण्यत्' इति ण्यत् नञ्समासः अव्ययपूर्वपदप्रकृतिस्वरत्वम् । धारयन् शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण णिच एव स्वरः शिष्यते ॥ ३ ॥—हे ऋत्विगादयः, विष्णोः कर्माणि पालनादीनि पश्यत । यतो यैः कर्मभिः व्रतान्यग्निहोत्रादीनि पस्पशे सर्वो यजमानः स्पृष्टवान् । विष्णोरनुग्रहादनुतिष्ठतीत्यर्थः । तादृशो विष्णुरिन्द्रस्य युज्यो योग्योऽनुकूलः सखा

यतो व्रतानि पस्पशे इन्द्रस्य युज्यः सखा ॥ ४ ॥ अनामिकाभ्यांनमः कवचायहुं ॥ ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः।दिवीव चक्षुराततं ॥ ५ ॥ कनिष्ठिकाभ्यांनमः नेत्रत्रयायवौषट् ॥ ॐ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदं ॥ ६ ॥ करतलकरपृष्ठाभ्यांनमः अस्त्रायफट्॥ॐभूर्भुवःस्वरोमिति दिग्बन्धः। एवं न्यासविधिं कृत्वा । देवता यथोपदिष्टागमोक्तप्रकारेण ध्यात्वा नत्वाचार्चयेत्।तद्यथा । सहस्रशीर्षेत्यस्यपूर्ववदृष्यादिस्मृत्वा पूजायां विनियोगः । ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ श्रीपरमेश्वरायनमः परमेश्वरमावाहयामि। नित्यमावाहनाभावे ध्यायामीति वदेत् । ॐपुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ श्रीपरमेश्वराय० आसनंस० । ॐएतावा-

---

भवति । विष्णोरिन्द्रानुकूल्यम् 'त्वष्टा हतपुत्र' इत्यनुवाके । 'अथ चैतर्हि विष्णुः' इत्यादिना प्रपञ्चेन तैत्तिरीया आमनन्ति । पस्पशे स्पश बाधनस्पर्शनयोः लिटि द्विर्भावे शर्पूर्वाः खय इति पकारः शिष्यते सकारो लुप्यते यद्वृत्तयोगादनिघातः। युज्यः । युजेर्बाहुलकात्क्यप् । कित्त्वाद्गुणाभावः । क्यपः पित्वादनुदात्तत्वम् । धातुस्वरः॥४॥—सूरयो विद्वांस ऋत्विगादयः विष्णोः संबन्धि परममुत्कृष्टं तच्छास्त्रप्रसिद्धं पदं स्वर्गस्थानं शास्त्रदृष्ट्या सर्वदा पश्यन्ति । तत्र दृष्टान्तः । दिवीव आकाशे यथा आततं सर्वतः प्रसृतं चक्षुर्निरोधाभावेन विशदं पश्यसि तद्वत् । सदा 'सर्वैकान्य' इति दाप्रत्ययः 'सर्वस्य सोऽन्यतरस्यां दि' इति सर्वशब्दस्य सभावः व्यत्ययेनाद्युदात्तत्वम्।दिवि'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं चेति तदेव शिष्यते । चक्षुः नब्विषयस्येत्याद्युदात्तत्वम् । आततम् तनोतेः कर्मणि क्तः 'यस्य विभाषा'इतीट्प्रतिषेधः। 'अनुदात्तोपदेश' इत्यादिना नलोपः।कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'गतिरनन्तरः' इति गतेरुदात्तत्वम् ॥५॥—पूर्वोक्तं विष्णोर्यत्पदमस्ति तत्पदं विप्रासो मेधाविनः समिन्धते सम्यक् दीपयन्ति । कीदृशाः विपन्यवः विशेषेण स्तोतारः । जागृवांसः शब्दार्थयोः प्रमादराहित्येन जागरूकाः। विप्रासः'आज्जसेरसुक्'। विपन्यवः विशेषेण स्तोतारः। स्तुत्यर्थस्य पनेर्बाहुलकादौणादिको युप्रत्ययः तत्र प्रत्ययस्वरः। जागृवांसः जागृ निद्राक्षये लिटः क्वसुः क्रादिनियमात्प्राप्तस्येटो 'वस्वेकाजाद्घसाम्' इति नियमान्निवृत्तिः ॥६॥

नस्य महिमातोज्यायाँश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥श्रीपरमेश्वरायनमः पाद्यं०। ॐत्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः । ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ श्रीपरमेश्वरायनमः अर्घ्यं सम० । ॐ तस्माद्विराळजायत विराजो अधि पूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः । श्रीपरमेश्वरायनमः आचमनीयं० । ॐयत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ श्रीपरमेश्वरायनमः मलापकर्षस्नानं० । अत्र प्रसङ्गात्पञ्चामृतस्नानानि वक्ष्यन्ते । यथा । तत्र दुग्धदधिघृतमधुशर्करेति पञ्चद्रव्याणि सामान्येन पूर्वं संपाद्य स्नापनकाले॥आप्यायेत्यस्य गोतमःसोमो गायत्री । पयःस्नापने वि०।(१।६।२२) ॐआप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।भवा वाजस्य संगथे ॥१॥ इत्यनया पयसा संस्नाप्य शुद्धवारिणा स्नापयेत् । दधिक्राव्ण इत्यस्य वामदेवो दध्यनुष्टुप् । दधिस्नापने वि०।(३।७।१३)ॐदधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।सुरभि नो मुखा करत्प्रण आयूंषि तारिषत्॥१॥इति दध्ना संस्नाप्य पुनःपूर्ववच्छुद्धोदकेन स्नापयित्वा

---

(आप्यायस्व० १।६।२२)हे सोम, त्वमाप्यायस्व वर्धस्व । ते तव वृष्ण्यं वीर्यं सामर्थ्यं विश्वतः सर्वतः समेतु संगच्छतां त्वया संयुक्तं भवतु । एवंभूतस्त्वं वाजस्यान्नस्य संगथे संगमने भव । अस्माकमन्नप्रदो भवेत्यर्थः । वृष्ण्यम् वृष सेचने 'कनिन्युवृषि ' इत्यादिना कन् । वृषिण भवं वृष्ण्यं 'भवे छन्दसि' इति यत् । 'अल्लोपो नः' इत्यकारलोपः । 'ये चाभावकर्मणोः' इति प्रकृतिभावस्तु व्यत्ययेन न प्रवर्तते 'यतो नावः' इत्याद्युदात्तत्वम् । भव 'द्व्यचोतस्तिङः' इति संहितायां दीर्घत्वम् । संगथे 'पातृतुदिवचि-'इत्यादिना विधीयमानस्थक्प्रत्ययो बहुलवचनाद्गमेरपि भवति । थाथादिनोत्तरपदान्तोदात्तत्वम् ॥ १ ॥

(दधिक्राव्णो ३।७।१३) दधिक्राव्णो देवस्य स्तुतिमकारिषं करवाणि । जिष्णोर्जयशीलस्याश्वस्य व्यापकस्य वाजिनो वेगवतः । स देवोऽस्माकं मुखा मुखानि चक्षुरादीन्द्रियाणि सुरभि सुरभीणि करत्करोतु । नोऽस्मभ्यमायूंषि प्रतारिषत्प्रवर्धयतु । प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ १ ॥

घृतंमिमिक्षइत्यस्य गृत्समदोऽग्निस्त्रिष्टुप्। घृतस्नाप० (२।५।२३) ॐघृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम। अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम्।१। इति घृतेन स्नापयित्वा शुद्धोदकेन स्नापयेत्। मधु वाता इति तृचस्य गोतमो विश्वेदेवा गायत्री। मधुस्नापने वि०।(१।६।१८) ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः॥१॥मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता॥२॥मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः।३। इति मधुना स्नापयित्वा शुद्धोदकेन स्नापयेत्। स्वादुःपवस्वेत्यस्य वेनो भार्गवो विश्वेदेवा जगती। शर्करास्नापने

---

( घृतं मिमिक्षे २।५।२३ ) अस्याग्नेर्घृतमाज्यं मिमिक्षे सिञ्चामि। यतोऽस्य घृतं योनिः कारणम्। उत्पन्नोऽपि घृते श्रित आश्रितः। अस्याग्नेर्घृतमेव धाम तेजः घृतेन ह्ययं दीप्यते। इदानीं संबोध्योच्यते। हे अग्ने, वृषभ फलस्य वर्षितः, त्वं स्वाहाकृतं स्वाहाकारेण दत्तं हव्यं चरुपुरोडाशादि सर्वेष्वपि हविःषु दीयमानेषु आवह देवानाहूय तान्मादयस्व प्रीणय। ततस्त्वं स्वाहाकृतं स्वाहाकारेण दत्तं हव्यं चरुपुरोडाशादि वक्षि वह॥ १ ॥

( मधु वाता० १।६।१८ ) ऋतायते ऋतं यज्ञमात्मन इच्छते यजमानाय वाता वायवः मधु माधुर्योपेतं कर्मफलं क्षरन्ति वर्षन्ति। प्रयच्छन्तीत्यर्थः। तथा सिंधवः स्यन्दनशीला नद्यः समुद्रा वा मधु माधुर्योपेतं स्वकीयं रसं क्षरन्ति। एवं नोऽस्मभ्यमोषधीः फलपाकान्ता ओषधयः ताश्च माध्वीर्माधुर्योपेताः सन्तु भवन्तु। मधु अस्मादुत्तरस्य मत्वर्थीयस्य 'लुगकारेकाररेफाश्च वक्तव्याः' इति लुक्। ऋतायते ऋतमात्मन इच्छति 'सुप आत्मनः क्यच्' 'न छन्दस्यपुत्रस्य' इतीत्वदीर्घयोर्निषेधः 'अन्येषामपि' इति संहितायां दीर्घत्वम्। क्यजन्ताल्लटः शतृ 'शतुरनुमः' इति विभक्तेरुदात्तत्वम्। माध्वीः 'मधोरञ्च' इति मत्वर्थीयोऽञ्प्रत्ययः। 'ऋत्व्यवास्त्व्य' इत्यादावञि यणादेशोऽपि निपात्यते। 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। ओषधीः ओषः पाक आसु धीयत इत्योषधयः 'कर्मण्यधिकरणे च' इति किप्रत्ययः। 'कृदिकारादक्तिनः' इति ङीप् जसि पूर्ववत्पूर्वसवर्णदीर्घः दासीभारादिषु पठितत्वात्पूर्वपदप्रकृतिस्वरत्वम्। तच्च वजन्तमाद्युदात्तम् ॥१॥—नक्तं रात्रिर्नोऽस्माकं मधु मधुमती माधुर्योपेतफलप्रदा भवतु। उत अपिच उषसः उषःकालोपलक्षितान्यहानि च मधुमन्ति भवन्तु। पार्थिवं रजः पृथिव्याः संबन्धी लोकः अस्माकं मधुमान्माधुर्यविशिष्टफलयुक्तो भवतु पिता वृष्टिप्रदानेन सर्वेषां पालयिता द्यौर्द्युलोकोऽपि मधु मधुयुक्तो भवतु। पार्थिवं 'पृथिव्या ञाञौ' इति प्राग्दीव्यतीयोऽञ्प्रत्ययः। रजः

वि०।(७।३।१०)ॐस्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवीतुनाम्ने। स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमाँ अदाभ्यः॥१॥ इति शर्करया स्नापयित्वा शुद्धोदकेन संस्नाप्यार्चां रुद्रेण कद्रुद्रायेमारुद्रायातेपितरिमारुद्रायस्थिरधन्वन इति रुद्रसूक्तैश्चतुर्भिः आवोराजानं तवश्रिये तमुष्टुहि भुवनस्य त्र्यम्बकमितिमन्त्रैश्चाभिषिञ्चेद्रुद्रानुवाकैर्गोशृङ्गसौवर्णराजतताम्रमयेनाभिषिच्य शङ्खोदकैः पुरुषसूक्तविष्णुसूक्ताथर्वशीर्षश्रीसूक्तैश्चाभिषिच्य। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि। बलाय श्रियै यशसेऽन्नाद्याय भूर्भुवःस्वः अमृताभिषेकोऽस्तु। इत्यभिषेकं समापयेदिति। एतच्च नैमित्तिकपूजासंगत्यर्थं ग्रन्थान्तरादधिकमप्युक्तं संग्रहार्थम्। प्रकृतमनुसरामः।श्रीप० आचमनीयं समर्प०। ॐतं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः।तेन देवा अयजन्त साध्या ऋषयश्च ये॥श्रीप०वस्त्रं स०।आचमनीयं स०। ॐतस्माद्यज्ञात्सर्वहुतःसंभृतं पृषदाज्यं। पशून्तांश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये॥ श्रीपरमेश्वराय नमः यज्ञोपवीतं०। आचमनीयं। ॐतस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥

---

शब्दो लोकवाची। 'लोका रजांस्युच्यन्त' इति यास्कः। रजन्त्यस्मिञ्जना इति रजः। असुनि 'रजकरजनरजःसूपसंख्यानम्' इति रञ्जेर्नलोपः॥२॥—नोऽस्माकं वनस्पतिः वनानां पालयिता यूपाभिमानी देवः मधुमान्माधुर्योपेतफलवानस्तु। तादृशं फलमस्मभ्यं प्रयच्छत्वित्यर्थः। सूर्यः सर्वस्य प्रेरकः सविता च मधुमानस्तु। गावोऽग्निहोत्राद्यर्था धेनवश्च नोऽस्माकं माध्वीर्माधुर्योपेतेन पयसा युक्ता भवन्तु। वनस्पतिः वनानां पतिर्वनस्पतिः। पारस्करादित्वात्सुट्। वनपतिशब्दावाद्युदात्तौ। 'उभे वनस्पत्यादिषु युगपत्' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम्॥ ३॥

(स्वादुः पवस्व ७।३।१०) हे सोम, स्वादुस्त्वं दिव्याय जन्मने देवगणाय पवस्व। तथा सुहवीतुनाम्ने शोभनाह्वाननामधेयायेन्द्राय त्वं पवस्व। मित्राय वरुणाय वायवे बृहस्पतये च पवस्व। मधुमान्मधुररसः अदाभ्योऽन्यैरहिंस्यस्त्वम्॥ १॥

श्रीपरमेश्वराय गन्धं समर्पयामि।(५।१।२१)ॐअहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः। हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः॥१॥श्रीपर०परिमलद्रव्याणि सौभाग्यद्रव्याणि च समर्पयामि। ॐतस्मादश्वा अजायन्त ये केचोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥श्रीपरमेश्वराय नमः पुष्पाणि०।ॐयत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते॥ श्रीपरमेश्वराय नमः धूपं०। ॐ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥श्रीपरमेश्वराय नमः दीपं०। ॐचन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत॥ श्रीपरमेश्वराय नमः महानैवेद्यं समर्पयामि। ॐप्राणाय स्वाहा ॐअपानाय० ॐव्यानाय० ॐउदानाय० ॐसमानाय० ॐब्रह्मणेस्वाहा। मध्येपानीयंस० अनन्तरमाचमनं सम०चन्दनेन करोद्वर्तनं फलं ताम्बूलं च दद्याद्यथाप्राप्तं। ॐनाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन्॥ श्रीपरमेश्वराय नमः नमस्कारान् स०। पञ्चाधिकान्वा नित्यं कुर्यात्। ॐसप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम्।

---

(अहिरिव०५।१।२१) अत्र धन्विनः प्रकोष्ठे बन्धनीयस्य हस्तघ्नस्य स्तुतिः। हस्तघ्नो हस्ते हस्तसमीपे वर्तिनि प्रकोष्ठे स्थितः सन् ज्यया हन्यत इति हस्तघ्नः 'घञर्थे कविधानम्' इति कः। ज्यायाः हेतिं ज्याहेतुकां हिंसां परिबाधमानो निवारयन्। भोगैः शरीरेण। वचनव्यत्ययः। अहिरिव सर्प इव बाहुं प्रकोष्ठम्। लक्षणया बाहुशब्दः प्रकोष्ठे वर्तते। परिवेष्टयति। किंच विश्वा विश्वानि वयुनानि ज्ञानानि ज्ञातव्यानि 'माया वयुनम्' इत्यज्ञनामसु पाठात्। विद्वाञ्जानन् पुमान्पौरुषोपेतः स्वयं पुमांसं धन्विनं विश्वतः सर्वतः परिपातु रक्षतु। तथाच यास्कः 'अहिरिव भोगैः परिवेष्टयति बाहुं ज्याया वधात्परित्रायमाणो हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन्पुमान्पुरुनामा भवति पुंसतेर्वेति॥ १॥

श्रीपरमेश्वराय० प्रदक्षिणात्रयमधिकं वा । ॐयज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ श्रीपरमेश्वराय नमः दक्षिणां स० । प्रत्यहं दक्षिणारहितमपि देवार्चनं कार्यमिति हेमाद्रिः । पूजासाफल्यार्थं प्रदक्षिणमित्यृग्विधाने । (७।४।४।)ॐ श्रिये जातः श्रिय आनिरियाय श्रियं वयो जरितृभ्यो ददाति । श्रियं वसाना अमृतत्वमायन्भवन्ति सत्या समिथा मितद्रौ ॥ १ ॥ श्रिय एवैनं तच्छ्रियामादधाति संततमृचा वषट्कृत्यं संतत्यै संधीयते प्रजया पशुभिर्य एवं वेद । याज्यया यजति प्रत्तिर्वै याज्या पुण्यैव लक्ष्मीः पुण्यामेव तल्लक्ष्मीं संभावयति पुण्यां लक्ष्मीं संस्कुरुते ॥ श्रीपरमेश्वराय नमः नीराजनदीपं समर्पयामि । नमो महद्भ्य इत्यस्य देवरातो दैवीत्रिष्टुप् । पुष्पाञ्जलिसमर्पणे वि० । (१।२।२४।)ॐनमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो

---

(श्रिये जातः ७।४।४)स सोमः श्रिये जातः संपदर्थं प्रादुर्भूतो भवति । तदेवाह श्रिये श्र्यर्थमेव आनिरियाय अंशुभ्य आभिमुख्येन निर्गच्छति । निर्गतश्च स सोमः जरितृभ्यः स्तोतृभ्यः श्रियं वयोन्नं जीवनं चादधाति विदधाति प्रयच्छति । तेन दत्तां श्रियं वसाना आच्छादयन्तः स्तोतारः अमृतत्वं देवत्वं अमरणत्वं वा आयन्प्राप्नुवन् तस्मिन्मितद्रौ मितगमने सोमे समिथा । युद्धनामैतत् । सम्यक्प्राप्यतेऽत्रेति समीण इति एतेः संपूर्वस्य थक्प्रत्ययः । तानि युद्धानि सत्या सत्यानि यथार्थानि भवन्ति नतु वितथानि । तेन सोमेन पराजितानि भवन्तीत्यर्थः ॥ १ ॥

( नमो महद्भ्यो २।२।२४ ) अग्निना प्रेरितः शुनःशेपो विश्वान्देवाननया तुष्टाव । तथाचाम्नायते 'तमग्निरुवाच विश्वान्नु देवान्स्तुह्यथ त्वोत्स्रक्ष्यामीति स विश्वान्देवांस्तुष्टाव नतो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चेति' । 'महान्तो गुणैरधिकाः' अर्भको गुणैर्युवानस्तरुणाः, आशिना वयसा व्याप्ता वृद्धाः, यथोक्तचतुर्विधदेहयुक्तेभ्यो देवेभ्यो नमोऽस्तु । यदि शक्नवाम कथंचिद्धनादिसंपत्त्या शक्ताश्चेत्तदानीं देवान्यजामहे देवा ज्यायसो ज्येष्ठस्य देवताविशेषस्य आ सर्वतः प्रसृतं शंसं स्तोत्रं आवृक्षि अहं विच्छिन्नं माकार्षम् । आशिनेभ्यः अशू व्याप्तौ 'बहुलमन्यत्रापि' इत्यौणादिक इयच्प्रत्ययः 'चितः' इत्यन्तोदात्तत्वम् । यजाम शपः पित्त्वादनुदात्तत्वम् तिङश्च लसार्वधातुकस्वरेण धातुस्वरः । शक्नवाम शक्लृ शक्तौ 'आडुत्तमस्य पिच्च' इति तिङः पिद्भावादनुदात्तत्वे सति विकरणस्वरः । 'निपातैर्यद्यदिहन्त' इति निघातप्रति-

नम आशिनेभ्यः। यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः॥१॥श्रीपरमेश्वराय नमः मन्त्रपुष्पाञ्जलिं समर्पयामि। न्यूनातिरिक्तदोषपरिहारार्थं पुनः शक्त्या प्रदक्षिणं कुर्यात्। यानि कानि च पापानि जन्मान्तरकृतानि च। तानि तानि विनश्यन्ति प्रदक्षिणपदेपदे। इति मन्त्रेण प्रदक्षिणां कृत्वा साष्टाङ्गं प्रणम्येष्टदेवतां स्मृत्वा पुरुषसूक्तं जप्त्वा नत्वा च भो ईश्वर क्षमस्वेति प्रार्थयेत्। ततः। शङ्खमध्ये स्थितं तोयं भ्रामितं केशवोपरि। अङ्गलग्नं मनुष्याणां ब्रह्महत्यां व्यपोहति। इति देवोपरि सजलं शङ्खं भ्रामयित्वा शिरस्यभ्युक्ष्य शङ्खं घण्टां गरुडं च पूजयेदिति केचित्। तत्र नैवेद्यशेषमनेन मन्त्रेण। बाणरावणचण्डीशनन्दीभृङ्गीगणादयः। महादेवप्रसादं च सर्वे गृह्णन्तु शांभवाः। शंभुगणेभ्यो नमः॥ विष्वक्सेनोद्धवाक्रूराः सनकाद्या महर्षयः। लक्ष्मीकान्तप्रसादं च सर्वे गृह्णन्तु वैष्णवाः। विष्णुगणेभ्यो नमः इति समर्प्य देवं क्षमापयेत्। तत्र मन्त्राः (८।१।२५) ॐअयं मे हस्तो भगवानयं मे भगवत्तरः। अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः॥१॥ (८।१।२५) अयं मातायं पितायं जीवातुरागमत्। इदं तव

---

षेधः। ज्यायसः प्रशस्यशब्दादीयसुनि 'ज्य च' इति ज्यादेशः 'ज्यादादीयसः' इतीयसुन ईकारस्यात्वं नित्वादाद्युदात्तत्वम्। शंसं 'हलश्च' इति घञ्। वृक्षि ओव्रश्चू छेदने व्यत्ययेनात्मनेपदोत्तमपुरुषैकवचनं इट् च्लेः सिच् 'स्वरतिसूति' इत्यादिनेडभावः 'स्कोः संयोगाद्योः' इत्युपधासकारलोपः व्रश्चादिना षत्वम्। 'षढोः कः सि' इति कत्वं 'आदेशप्रत्यययोः' इति षत्वं 'न माङ्योगे' इत्यडभावः॥१॥

( अयं मे हस्तो ८।१।२५ ) अनया बन्ध्वादयो लब्धजीवं सुबन्धुं पाणिभिरस्पृशन्। अयं मे हस्तो भगवान्भाग्यवान्। यस्मात्सजीवं सुबन्धुं स्पृशति तस्मात्। तथा अयं मे हस्तो भगवत्तरोऽतिशयेन भाग्यवान्। तथा अयं मे हस्तो विश्वभेषजो जीवचिकित्सासाधनसर्वौषधवान् तत्स्थानीयो वा। अयं शिवाभिमर्शनो मङ्गलस्पर्शनः। यतो जीवन्तं स्पृशति अत इत्यर्थः॥ १॥

( अयं माता ८।१।२५ ) अयमग्निर्माता अयमेव पिता अयं जीवातुर्जीवयिता आगमदाजगाम। अतो हे सुबन्धोर्जीव, परिधौ वर्तमान, यस्मादिदं शरीरं तव

प्रसर्पणं सुबन्धवेहि निरिहि ॥२॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे । आवाहनं न जानामि न जानामि तवार्चनम् । पूजां चैव न जानामि क्षम्यतां परमेश्वर । स्वस्ति प्रजाभ्यः परिपालयन्तां न्यायेन मार्गेण महीं महीशाः । गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु । काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी । देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः । अन्यथा शरणं नास्ति त्वमेव शरणं मम । तस्मात्कारुण्यभावेन रक्षस्व परमेश्वर । मत्समो नास्ति पापिष्ठस्त्वत्समो नास्ति पापहा । इति संचिन्त्य देवेश यथेच्छसि तथा कुरु । भूमौ स्खलितपादानां भूमिरेवावलम्बनम् । त्वयि जातापराधानां त्वमेव शरणं मम । इत्यादि संप्रार्थ्य देवतीर्थं हृद्गमं पात्रान्तरेण पिबेत् । तत्प्रकारः पूजापटले । उदकं चन्दनं चक्रं शङ्खं च तुलसीदलम् । घण्टा पुरुषसूक्तं च ताम्रपात्रमथाष्टमम् । शालग्रामशिला चैव नवभिस्तीर्थमुच्यते । इति । तथा यस्य यदाराध्यदैवतं तेन तस्यैव वा तीर्थनैवेद्यादिग्राह्यम् । पाद्मे । पीते धृते च शिरसि सर्वास्तुष्यन्ति देवताः । प्रायश्चित्तं हि पापानां कलौ पादोदकं हरेः । इति । कालमृत्युहरं पुण्यं ब्रह्महत्याविनाशनम् । व्याधिघ्नं पुण्यदं पास्ये सुरपादावनेजनम् । इति । अनेन यथाशक्ति मया कृतपूजनाख्येन कर्मणा भगवान्परमात्मा श्रीपरमेश्वरः प्रीयतामितीश्वरार्पणं कुर्यात् ॥

---

प्रसर्पणं प्रकर्षेण गतिसाधनं अत इदं प्रत्येह्यागच्छ । निरिहि निर्गच्छ परिधेः सकाशात् ॥ अन्ये एवमाचक्षते । हे निर्गतप्राण सुबन्धोः संबन्धिन्, अयं । विभक्तिव्यत्ययः । इयं माता अयं पिता अयं जीवातुर्जीवनफलभूतः पुत्रश्चागमदिति संबध्यते । सर्वे त्वामागता दुःखिताः सन्तः । शिष्टं समानम् ॥ १ ॥

## पूजामूलवचनानि।

श्रीः॥ एतत्षोडशोपचारपूजाप्रकारस्तु ऋग्विधाने। अर्चनं संप्रवक्ष्यामि विष्णोरमिततेजसः। यत्कृत्वा मुनयः सर्वे ब्रह्मनिर्वाणमाप्नुयुः। नारायण महाबाहो शृणुष्वैकमनाः प्रभो। वक्ष्ये पुरुषसूक्तस्य त्रिष्टुबन्त्यस्य देवता। पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः। स्नात्वा यथोक्तविधिना प्राङ्मुखः शुद्धमानसः। आनुष्टुभस्य सूक्तस्य विधानं त्वर्चनं प्रति। प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे। तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत्। पञ्चमीं वामजानौ च षष्ठीं वै दक्षिणे न्यसेत्। सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे कटौ। नवमीं नाभिमध्ये तु दशमीं हृदि विन्यसेत्। एकादशीं कण्ठदेशे द्वादशीं वामबाहुके। त्रयोदशीं दक्षिणे च आस्यदेशे चतुर्दशीम्। अक्ष्णोः पञ्चदशीं चैव षोडशीं मूर्ध्नि विन्यसेत्। एवं न्यासविधिं कृत्वा पञ्चाङ्गानि समाचरेत्। ब्राह्मणोस्येत्यादिकाभिर्ऋग्भिः पञ्चाङ्गकल्पना। हृदयं शिरः शिखा कवचमस्त्रं चेति। प्रकारान्तरेण हेमाद्रौ हृदयादि। अतोदेवादिषड्भिस्तु हृदयादिषु योजयेत्। एवं न्यासविधिं कृत्वा पूजयेच्च विधानतः। आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमम्। द्वितीययासनं दद्यात्पाद्यं चैव तृतीयया। अर्घ्यं चतुर्थ्या दातव्यं पञ्चम्याचमनीयकम्। षष्ठ्या स्नानं प्रदेयं तु सप्तम्या वस्त्रमेव च। यज्ञोपवीतमष्टम्या नवम्या चानुलेपनम्। पुष्पं दशम्या दातव्यमेकादश्या तु धूपकम्। द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदनम्। स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम्। चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणां। उद्वासनं तु षोडश्या उपचारास्तु षोडश। दक्षिणा हि

यथाशक्ति षोडश्या तु प्रदीयते । पूजादिसाफल्यार्थं या दक्षिणा दीयते सा षोडशेन यज्ञेनयज्ञमिति मन्त्रेण दद्यादिति स्मृतिमहार्णवे । पुनः प्रदक्षिणं कृत्वा जपं कुर्यात्समाहितः । यथाशक्ति जपित्वा तु सूक्तं तस्मै निवेदयेत् । इत्येवमुक्तः पुरुषस्य विष्णोरर्चाविधिर्विष्णुकुमारनाम्ना । मुक्त्यैकमार्गप्रतिबोधनाय दृष्ट्वा विधानं त्विह नारदोक्तम् । आचाररत्ने शौनकः । प्रातर्मध्यंदिने सायं विष्णुपूजां समाचरेत् । अशक्तौ विस्तरेणैव प्रातः संपूज्य केशवम् । मध्याह्ने चैव सायं च पुष्पाञ्जलिमपि क्षिपेत् । इति । एवं गुरूपदिष्टागमोक्तप्रकारेण वा वेदानुसारेण वार्चयेत् । तथाच स्मृत्यर्थसारे । सर्वे चागममार्गेण कुर्युर्वेदानुसारिणा । गुरूक्तेनैव मार्गेण वेदबाह्येन नार्चयेत् । यां कांचिद्देवतां कश्चिदाराधयितुमिच्छति । स सर्वोपाययत्नेन ब्राह्मणान्गाश्च तोषयेत् । इति देवपूजाविधिः ॥

## अथ गुरुपूजादि ।

श्रीः ॥ स्मृत्यर्थसारे । एवं देवार्चनं कृत्वा गुरुं संपूज्य यत्नतः । पुष्पं क्षिप्त्वा प्रणम्याथ नित्यदानं स्वशक्तितः । कृत्वा वृद्धान्नमस्कृत्य कर्तव्यं मङ्गलेक्षणम् । विप्राग्न्यर्काम्बुगोहेमनृपाज्यं मङ्गलं स्मृतम् । अग्निचित् कपिला सत्री यज्वा स्रष्टाऽन्नदोऽम्बुधिः । ज्ञानसिद्धस्तपःसिद्धः शतायुर्धार्मिकः शुचिः । एते पापहराः सर्वे सदा पश्येन्नमेदपि । तथा । रोचनं चन्दनं दिव्यं मृदङ्गं दर्पणं मणिम् । घृतं चाग्निं गुरुं विप्रं प्रातः पश्येत्सदा बुधः । कृष्णब्राह्मीं च दूर्वां च चन्दनं शङ्खपुष्पिकाम् । सिद्धार्थकान्प्रियंगूंश्च प्रातः शिरसि धारयेत् । तथा । पापिष्ठं दुर्भगं चान्धं नग्नमुत्कृत्तनासिकम् । प्रातर्न पश्येदेतांस्तु दृष्ट्वा पश्येद्दिवाकरम् । नग्नं बालव्यतिरिक्तमिति नृसिं-

हः । इति गुरुपूजादि । ततो वेदाद्यधीत्याध्याप्य चानिषिद्धजीविकया धनं संपाद्य सूर्योपरागद्वादश्यतिरिक्ततिथौ द्वादशघटिकोर्ध्वं मध्याह्नस्नानं कुर्यात् ॥

## अथ मध्याह्नस्नानम् ।

तत्र मृत्तिकास्नानं केचिदाहुः । तत्तु कृताकृतमिति आचारदीपे कमलाकरः । तच्च प्रतिपत्षष्ठ्येकादशीरविभौमभृगुवारभरणीकृत्तिकामघानक्षत्रातिरिक्ततिथौ मृत्तिकास्नानं कुर्यान्नतु प्रातः । तद्यथा । प्रक्षालितपाणिपाद आचान्तो बद्धशिखः शुचिदेशे जलतीरे शुद्धमृदं दर्भांस्तण्डुलान्यवतिलांश्च निधाय प्राणानायम्य देशकालौ संकीर्त्य ममात्मनः कायवाङ्मनःकृतकर्मदोषपरिहारद्वारा आयुरभिवृद्धिद्वारा च श्रीपरमेश्वरप्रीत्यर्थं मृत्तिकास्नानं करिष्ये इति संकल्प्य मृदमभिमन्त्रयेत् । अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे। शिरसा धारयिष्यामि रक्षस्व मां पदेपदे । उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् । मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता । त्वया हृतेन पापेन गच्छामि परमां गतिम् । इत्यभिमन्त्र्य गायत्र्याभ्युक्ष्य त्रिरावृत्तेन गायत्रीशिरसा त्रिधा विभज्यैकेन भागेन नाभेरधः पादपर्यन्तं सर्वाण्यङ्गान्युद्धर्त्याप्स्वाप्लुत्य मृच्छेषं प्रक्षाल्य स्नात्वा द्विराचम्य तृतीयभागं सव्ये पाणौ कृत्वा ॐभूर्भुवःस्वः इत्युदकसंस्थं त्रिधा विभज्य दक्षिणभागस्थमन्नाय फडिति प्रणवेन दशदिक्षु निक्षिप्योत्तरभागं तीर्थे तूष्णीं निक्षिप्य मध्यभागं पाणिभ्यां संलिप्य गायत्र्या सूर्याय प्रदर्श्य गायत्र्या प्रणवेन वा समुच्चयेन वा सर्वाण्यङ्गान्युद्धर्त्य ॐसुमित्र्या न आप ओषधयः सन्तु इति दक्षिणेन पाणिनाद्भिरात्मानं परिषिच्य दुर्मित्र्यास्तस्मै सन्तु योऽस्मा-

न्द्वेष्टि यं च वयं द्विष्मः । इति मृच्छेषं प्रक्षाल्य पूर्वोक्तवरुणप्रार्थनादि किंचिद्वस्त्रनिष्पीडनं जङ्घाप्रक्षालनान्तं कर्म प्रातःस्नानवच्चरेत् । पूर्वोक्ततिथिवारादिनिषिद्धतिथौ तु मृत्तिकास्नानं जलेनैव कृत्वोर्ध्वपुण्ड्रधारणादिपूर्ववत्कुर्यात् । एतच्छक्तौ । अशक्तौ तु प्रातर्वत्स्नानमात्रं कुर्यादित्याचारदीपे कमलाकरः । इति मध्याह्नस्नानविधिः ॥

## अथ मध्याह्नसंध्या ।

सा चोक्ता गृह्यपरिशिष्टशौनकजयन्तपारिजातादिभिः । आचम्य प्राणानायम्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं मध्याह्नसंध्यामुपासिष्ये इति संकल्प्य पूर्ववत्प्रथममार्जनं कृत्वा मन्त्राचमनं कुर्यात् । तद्यथा । आपःपुनन्त्वित्यस्य नारायण ऋषिः । आपः पृथिवी देवता । अष्टी छन्दः । मन्त्राचमने विनियोगः । ॐआपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम् । यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहꣳ स्वाहा । इति मन्त्रेणापः पीत्वाचम्य पूर्ववद्द्वितीयतृतीयचतुर्थमार्जनाद्यघमर्षणान्तं कृत्वा द्विराचम्यार्घ्यं दद्यात् । हंसः शुचिषदिति मन्त्रस्य गौतमो वामदेवः सूर्यो जगती । मध्याह्नसंध्यार्घ्यदाने विनियोगः । ॐहंसः[1] शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ श्रीसूर्यायेदमर्घ्यं दत्तं नममेति मन्त्रेण सूर्याभिमुखस्तिष्ठन्नेव मन्त्रावृत्त्या त्रिःसकृद्वार्घ्यं दत्वात्मानं परिषिच्य द्विराचामेत् । तत उत्थायोर्ध्वबाहुरुन्मुखः सूर्यमुपतिष्ठेत् । उदुत्यमिति त्रयोदशर्चस्य सूक्तस्य काण्वः प्रस्कण्वः सूर्यो नवाद्या गायत्र्योऽन्त्याश्च-

---

१ एषां सौरमन्त्राणां भाष्यं पूर्वं सौरप्रसङ्गाद्गतमिति नात्र संगृहीतम् ।

तस्रोऽनुष्टुभोऽन्त्यस्तृचो रोगघ्न उपनिषदन्त्योऽर्धर्चो द्विषघ्नः । सूर्योपस्थाने विनियोगः । ॐउदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥ अदृश्रमस्य केतवो विरश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा ॥ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम् ॥ प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ् विश्वं स्वर्दृशे ॥१॥ येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ॥ वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः । पश्यन्जन्मानि सूर्य ॥ सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण ॥ अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः । ताभिर्याति स्वयुक्तिभिः ॥ उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि । अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥ उदगादयमादित्यो विश्वेन सहसा सह । द्विषन्तं मह्यं रन्धयन्मो अहं द्विषते रधम् ॥ २ ॥ चित्रं देवानामिति षळर्चस्य सूक्तस्याङ्गिरसः कुत्सः सूर्यस्त्रिष्टुप् । सूर्योपस्थाने विनियोगः । ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् । यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ॥ भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः । नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः ॥ तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं संज-

भार । यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे । अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ति ॥ अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ३ ॥ स्मृत्यर्थसारमतात् हंसः शुचिषदित्यस्याः पूर्ववदृष्यादि स्मृत्वा ऋचं पठेत् । परिशिष्टमतात्तु तच्चक्षुरित्यस्य वसिष्ठः सविता पुरउष्णिक् । सूर्योपस्थाने विनियोगः । ॐ तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् । इत्युपतिष्ठेत् । एतदुपस्थानाशक्तौ तु उदुत्यं चित्रंदेवानामिति ऋग्भ्यामेवोपतिष्ठेदिति जयन्तनिबन्धे गोभिलसूत्रे चोक्तम् । तत उपविश्य त्रीन्प्राणायामान्विधाय न्यासादि प्रागुक्तं कृत्वा करौ हृदि निधाय यथेष्टकालं सावित्रीं जप्त्वोत्तरन्यासान्ते गुरुमभिवाद्य द्विराचामेत् । इति मध्याह्नसंध्याविधिः ॥ अत्र ब्रह्मयज्ञो मध्याह्नसंध्यायाः पूर्वं पश्चाद्वेति विप्रतिपत्तौ तत्त्वमुच्यते । मध्याह्ने त्वादौ मध्याह्नसंध्यां कृत्वैव ब्रह्मयज्ञः कर्तव्यः । यदा तु क्वचिद्देशकालवशान्मध्याह्नात्पूर्वं क्रियते तदा आदौ ब्रह्मयज्ञस्ततो मध्याह्नसंध्येति । अस्य तत्त्वमाश्वलायनस्मृतौ संग्रहे शाकलकारिकायां स्मृत्यर्थसारादौ चावगन्तव्यम् ।

## अथ ब्रह्मयज्ञः ।

श्रीः॥अक्लिन्नवासा द्विराचम्य प्रागग्रदर्भेषु प्राङ्मुख आसीन उभाभ्यामपि पाणिभ्यां पवित्रे धृत्वा प्राणानायम्य देशकालावुत्कीर्त्य मम देवर्षिपितृतृप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ब्रह्मयज्ञेन यक्ष्ये । इति संकल्प्य वामजानूपरि दक्षिणपादं निधाय । यद्वा स्थलसंकोचादौ वामपादाङ्गुष्ठोपरि दक्षिणपादाङ्गुष्ठं नि-

धाय चरणपार्श्वमेलनेन मध्ये उपस्थाकृतिं कृत्वेति पृथ्वीचन्द्रोदयः । एवमुपस्थं कृत्वा सव्यं पाणिं प्रागङ्गुलिमुत्तानं दक्षिणजानुशिरसि निधाय तस्मिन्नप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशावनखच्छेदितौ पवित्रे निधाय तस्मिन्दक्षिणपाणिं न्यञ्चं प्रागङ्गुलिं निधाय समाहितमनाः स्वगृहे मनसान्यत्र मध्यमेन स्वरेण पठेत् । ॐभूर्भुवः स्वः । तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्रचो॒दया॑त् ॥ इति गायत्रीमन्त्रं पच्छोऽर्धर्चशः सर्वं क्रमेण पठेत् । (१।१।१) अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् । होता॑रं रत्न॒धात॑मम् ॥ १ ॥ अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॑ नूत॑नैरु॒त । स दे॒वाँ एह व॑क्षति ॥ २ ॥ अ॒ग्निना॑ र॒यिम॑श्नव॒त्पोष॑मे॒व दि॒वेदि॑वे ।

---

(अग्निमीळे १।१।१) इदमाद्यं नवर्चं सूक्तम् । अग्निं नव मधुच्छन्दा वैश्वामित्र इत्युक्तत्वात् । अग्निनामकं देवं ईळे स्तौमि । ईड स्तुताविति धातुः । डकारस्य ळकारो बह्वृचाध्येतृसंप्रदायप्राप्तः—'अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः । अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम्' इति । मन्त्रस्य होत्रा प्रयोजनत्वादहं होता स्तौमीति लभ्यते । कीदृशमग्निम् । यज्ञस्य पुरोहितम् । यथा राज्ञः पुरोहितस्तदभीष्टं संपादयति तथाग्निरपि यज्ञस्यापेक्षितं होमादि संपादयति । यद्वा यज्ञस्य संबन्धिनि पूर्वभागे आहवनीयरूपेणावस्थितम् । पुनः कीदृशम् । देवं दानादिगुणयुक्तम् । होतारमृत्विजं देवानां यज्ञेषु होतृनामकऋत्विगग्निरेव । तथाच श्रूयते अग्निर्वै देवानां होतेति । पुनरपि कीदृशम् । रत्नधातमं यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा । अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति—'अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति संनममानो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वानीतात्स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवति । अस्या ऋचो विस्तरार्थं ऋग्भाष्ये द्रष्टव्यः । विस्तरभिया नात्र संगृहीतः ॥ १ ॥—अयमग्निः पूर्वेभिः पुरातनैर्भृग्वङ्गिरःप्रभृतिभिर्ऋषिभिरीड्यः स्तुत्यः । नूतनैरुत इदानींतनैरस्माभिरपि स्तुत्यः । सोऽग्निः स्तुतः सन्निह यज्ञे देवान्हविर्भुज आवक्षति । वह प्रापण इति धातुः । आवहत्वित्यर्थः । पूर्वेभिरित्यत्र 'बहुलं छन्दसि' इति भिस ऐसादेशाभावः । पूर्व पर्व मर्व पूरण इति धातुः । पूर्वेति धातोरच्प्रत्यय औणादिकः । इन्प्रत्ययान्त ऋषिशब्दः ऋष्यन्धकेति निपातनाल्लघूपधगुणाभावः । किन्प्रत्ययो वात्र ज्ञेयः । तौ शब्दौ नित्स्वरेणाद्युदात्तौ ईड्यशब्दस्य ण्यत्प्रत्ययान्त-

यशसं वीरवत्तमम् ॥ ३ ॥ अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवेषु गच्छति ॥ ४ ॥ अग्निर्होता कविक्रतुः

---

त्वात् 'तित्स्वरितम्' इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेन 'ईडवन्द' इत्यादिना आद्युदात्तत्वम् । नवशब्दस्य नू इत्यादेशस्तन्प्रत्ययश्च महावार्तिके विहितः ततो नित्स्वरेणाद्युदात्तः । अवशिष्टस्वरा अग्न्यादिषु नूतनान्तेषु पूर्ववदुन्नेयाः । उतशब्दो यद्यपि विकल्पार्थे प्रसिद्धस्तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः । उच्चावचेष्वर्थेषु निपतन्तीति निपातत्वम् । तर्हि 'निपाता आद्युदात्ताः' इत्युकारस्योदात्तः प्राप्त इति चेत् न । प्रातःशब्दवदन्तोदात्तत्वात् यथा प्रातःशब्दोऽन्तोदात्तत्वेनैव स्वरादिषु पठितः एवमुतशब्दस्यापि पाठो द्रष्टव्यः । स्वरादेराकृतिगणत्वात् । यद्वा 'एवादीनामन्तः' इत्यन्तोदात्तत्वम् । स इत्यत्र फिट्स्वरः । देवशब्दः पूर्ववत् । देवानित्यस्य नकारस्य संहितायां 'दीर्घादटि' इति रुत्वम् । 'अत्रानुनासिक' इत्यनुवृत्तौ 'आतोऽटि नित्यम्' इत्याकारः सानुनासिकः 'भोभगो–' इति रोर्यकारः सच 'लोपः शाकल्यस्य' इति लुप्यते तदसिद्धत्वान्न पुनः संधिकार्यम् । आङो निपातत्वादाद्युदात्तत्वम् । इदमो ह्प्रत्यये सति निष्पन्नत्वादिह शब्दे प्रत्ययस्वरः । वहतिधातोर्लोडर्थे छान्दसो लृट् तस्य प्रत्ययगतस्य यकारस्य लोपोऽपि छान्दसः । यद्वा 'सिब्बहुलं लेटि' इति सिप्प्रत्ययः । लेटोऽडाटौ' इत्यडागमश्च ततो वक्षतीति संपद्यते तस्य 'तिङ्ङतिङः' इति तिङन्तत्वान्निघातः संहितास्वराः पूर्ववत्॥२॥–योऽयं होत्रास्तुत्योऽग्निस्तेनाग्निना निमित्तभूतेन यजमानो रयिं धनमश्नवत्प्राप्नोति । कीदृशं रयिम् । दिवेदिवे पोषमेव प्रतिदिनं पुष्यमाणतया वर्धमानमेव नतु कदाचिदपि क्षीयमाणं यशसं दानादिना यशोयुक्तं वीरवत्तमं अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम् । सति हि धने पुरुषाः संपद्यन्ते । रयिशब्दो मघमित्यादिधननामसु पठितस्तत्र फिट्स्वरः । अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप् 'इतश्च लोपः' इतीकारलोपः 'लेटोऽडाटौ' इत्यडागमः । ततोऽश्नवदिति भवति तस्य निघातः । घञन्तत्वात्पोषशब्द आद्युदात्तः । एवशब्दस्य निपातत्वेऽपि 'एवादीनामन्तः' इत्यन्तोदात्तत्वम् । वकारान्ताद्दिवृशब्दात्परस्याः सप्तम्याः 'सुपां सुलुक्' इत्यादिना शेभावे सति 'सावेकाचः' इत्यादिना 'ऊडिदंपदात्' इत्यादिना वा तस्योदात्तत्वम् । 'नित्यवीप्सयोः' इति द्विर्भावे सत्युत्तरभागस्य 'अनुदात्तं च' इत्यनुदात्तत्वम् । यशोऽस्यास्तीति विग्रहे सति 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वम् फिट्स्वरेणान्तोदात्ताद्वीरशब्दादुत्तरयोर्मतुप्तमपोः पित्वादनुदात्तत्वम् । 'ह्रस्वनुड्भ्याम्' इति तु न सावर्णान्तत्वात् 'न गोश्वन्–' इति प्रतिषेधः॥३॥–हे अग्ने, त्वं यं यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवानसि सइत्स एव यज्ञो देवेषु तृप्तिं जनयितुं स्वर्गं गच्छति प्राच्यादि चतुर्दिगन्तेष्वाहवनीयमार्जालीयगार्हपत्याग्नीध्रीयस्थानेष्वग्निरस्ति । परिशब्देन होत्रीयादिधिष्ण्यव्याप्तिर्विवक्षिता । कीदृशं यज्ञम् । अध्वरं हिंसारहितम् । नह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति । अग्निशब्दस्य षाष्ठिकमामन्त्रिता-

स॒त्यश्चि॒त्रश्र॑वस्तमः । दे॒वो दे॒वेभि॒राग॑मत् ॥ ५ ॥ १ ॥ यद॒ङ्ग दा॒शुषे॒ त्वम॑ग्ने भ॒द्रं क॑रि॒ष्यसि॑ । तवेत्तत्स॒त्यम॑ङ्गिरः ॥ ६ ॥ उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम् । नमो॒ भर॑न्त॒ एम॑-

---

द्युदात्तत्वम् । न विद्यतेऽध्वरोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वम् । विश्वत इत्यत्र तसिलः प्रत्ययस्वरत्वं बाधित्वा पूर्ववर्णस्य 'लिति' इत्युदात्तत्वं । परिभूरित्यत्राव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन कृदुत्तरपदप्रकृतिस्वरत्वम् । असीति तिङन्तस्य 'यद्वृत्तान्नित्यम्' इति निघाताभावः ॥ ४ ॥—अयमग्निर्देवोऽन्यैर्देवेभिर्देवैर्हविर्भोजिभिः सहागमत् अस्मिन्यज्ञे समागच्छतु । कीदृशोऽग्निः । होता होमनिष्पादकः । कविक्रतुः कविशब्दोऽत्र क्रान्तवचनो न तु मेधाविनाम । क्रतुः प्रज्ञानस्य कर्मणो वा नाम । ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा सत्योऽनृतरहितः फलमवश्यं प्रयच्छतीत्यर्थः । चित्रश्रवस्तमः श्रूयत इति श्रवः कीर्तिः अतिशयेन चित्रकीर्तियुक्तः । कविक्रतुः चित्रश्रवस्तम इत्यत्रोभयत्र बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वम् । सत्सु साधुः सत्यः 'सत्यादशपथे' इत्यत्रान्तोदात्तो हरदत्तेन निपातितः । लोडन्तस्य गच्छत्विति शब्दस्य छत्वाभाव उकारलोपश्च छान्दसः ततो रूपं गमदिति भवति । स्पष्टमन्यत् ॥ ५ ॥१॥—अङ्गेत्यभिमुखीकरणार्थो निपातः । अङ्ग हे अग्ने, त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं यद्भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तद्भद्रं तवेत् । तवैव सुखहेतुरिति शेषः । हे अङ्गिरोऽग्ने, एतच्च सत्यं नत्वत्र विसंवादोऽस्ति यजमानस्य वित्तादिसंपत्तौ सत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति । भद्रशब्दार्थं शाट्यायनिनः समामनन्ति—'यद्वै पुरुषस्य वित्तं तद्भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रम्' इति । अङ्गशब्दस्य निपातत्वेऽप्यभ्यादित्वादन्तोदात्तत्वम् । दाशुषे 'दाश्वान्साह्वान्' इति सूत्रेण दाश्च दाने इति धातोः क्वसुन्प्रत्ययो निपातितः तत्र प्रत्ययस्वरः आमन्त्रितस्याग्निशब्दस्य पदात्परत्वेनाष्टमिकानुदात्तत्वं न शङ्कनीयं अपादादाविति पर्युदस्तत्वात् । ततः षाष्ठिकमाद्युदात्तत्वमेव । भद्रशब्दस्य नब्विषयत्वेनाद्युदात्तत्वप्रसक्तावपि भदि कल्याणे इति धातोरुपरि रक्प्रत्ययेन निपातनादन्तोदात्तत्वम् । अस्मिन्वाक्ये यच्छब्दप्रयोगात् 'निपातैर्यद्यदिहन्त' इति निघाते प्रसिद्धेऽस्य प्रत्ययस्वरेण सति शिष्टेन करिष्यसिशब्द उपान्त्योदात्तः । तवेत्यत्र 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् । अङ्गिरा अङ्गारा इति यास्कः । ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनन्ति 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' इति तस्मादङ्गिरोनामकमुनिकारणत्वादङ्गाररूपस्याग्नेरङ्गिरस्त्वम् । अत्र पदात्परत्वेनाष्टमिकानुदात्तत्वम् ॥ ६ ॥—हे अग्ने, वयमनुष्ठातारो दिवेदिवे प्रतिदिनं दोषावस्तः रात्रावहनि च धिया बुद्ध्या नमोभरन्तो नमस्कारं संपादयन्तः उप समीपे त्वा एमसि त्वामागच्छामः । उपशब्दस्य निपातस्वरः 'त्वामौ द्वितीयायाः' इति युष्मच्छब्दस्यानुदात्तत्वादेशः । दोषाशब्दो रात्रिवाची वस्त इत्यहर्वाची द्वन्द्वसमासे कार्तकौजपादित्वादाद्युदात्तः 'सावेकाचः' इति धियो विभक्तिरुदात्ता 'नमः' इति

सि ॥ ७ ॥ राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानं स्वे दमे ॥ ८ ॥ स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥ ९ ॥ २ ॥ (अग्निर्वै देवानामवमो विष्णुः परमः । अथ महाव्रतं । एष पन्था एतत्कर्म । अथातः संहिताया उपनिषत् । विदामघवन्विदा । महाव्रतस्य पंचविंशतिं सामिधेन्यः । इषेत्वोर्जेत्वा । अग्न आयाहि वीतये । शं नो देवीरभिष्टये । अथैतस्य समाम्नायस्य । समाम्नायः समाम्नातः । मयरसतजभनलगसंमितं । गौः । ग्मा । पंचसंवत्सरमयं । अथ शिक्षां प्रवक्ष्यामि । वृद्धिरादैच् । योगीश्वरं याज्ञवल्क्यं । नारायणं नमस्कृत्य । अथातो धर्मं व्याख्यास्यामः । अथातो धर्मजिज्ञासा । अथातो ब्रह्मजिज्ञासा । तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्ति-

---

निपातः । भरन्त इत्यत्र शपः पित्वाच्छतुर्लसार्वधातुकत्वाच्चानुदात्तत्वे सति धातुस्वरः शिष्यते । इमसीत्यत्र 'इदन्तो मसि' इति मसिरित्यादेशो निघातश्च ॥ ७ ॥ —पूर्वमन्त्रे त्वामुपेमसीत्यभिमुद्दिश्योक्तम् । कीदृशं त्वाम् । राजन्तं दीप्यमानम् । अध्वराणां राक्षसकृतहिंसारहितानां यज्ञानां गोपां रक्षकं ऋतस्य सत्यस्यावश्यंभाविनः कर्मफलस्य दीदिविं पौनःपुन्येन भृशं वा द्योतकम् । आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते । स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भिर्वर्धमानम् । राजन्तं वर्धमानमित्यत्रोभयत्र पूर्ववद्धातुस्वरः शिष्यते । दीदिविशब्दस्य 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ ८ ॥—हे अग्ने, स त्वं योऽस्मदर्थं सूपायनः शोभनप्राप्तियुक्तो भव । तथा नोऽस्माकं स्वस्तये विनाशराहित्यार्थं सचस्व समवेतो भव । तत्रोभयत्र दृष्टान्तः । यथा सूनवे पुत्रार्थं पिता सुप्रापः प्रायेण समवेतो भवति तद्वत् । अस्मच्छब्दादेशस्य न इत्येतस्य 'अनुदात्तं सर्वं' इत्यनुदात्तत्वम् । चादयोऽनुदात्ता इतीवशब्दोऽनुदात्तः 'इवेन नित्यसमासः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' इति समस्तः पितेवेतिशब्दो मध्योदात्तः । शोभनमुपायनं यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वम् । सचस्वेत्यत्र पादात्परत्वं नास्तीति न निघातः । लसार्वधातुकानुदात्तत्वे सति धातुस्वरावशेषः ॥ ९ ॥ २ ॥

---

१ अग्निर्वैइत्यारभ्य शंचतुष्पदे इत्यन्तो धनुश्चिह्नान्तर्गतो भागोऽस्यां चन्द्रिकायां नैव गृहीतः किंच तस्यासंग्रहे प्रमाणमप्युपपादितमस्ति ग्रन्थकृता अतो नास्यावश्यकत्वं परंत्वस्यान्यत्र बहुभिः संग्रहात्तथैव शिष्टाचारप्रामाण्याच्चात्र संगृहीतोऽस्ति ।

मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजं। शं नो अस्तु द्विपदे शं चतुष्पदे।) नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमि। इति त्रिः पठित्वा प्रणवं वदेदिति श्रुतिः। एष ब्रह्मयज्ञक्रमस्तु नारायणवृत्तौ जयन्तनिबन्धे च। प्रणवव्याहृतीः सकृदुक्त्वा गायत्रीं पच्छोऽर्धर्चशोऽनवसानां चैवं त्रिरुक्त्वा ऋचं सूक्तमनुवाकं वा तावदधीत्य नमो ब्रह्मण इत्येतां च त्रिरुक्त्वा प्रणवं वदेदिति ब्रह्मयज्ञः। अत्र सूक्तेन ब्रह्मयज्ञपक्षे अग्निमीळे इति सूक्तं पठेदिति याज्ञवल्क्यः। ऋक्पठनपक्षे गायत्रीं जातवेदां वा पठेदिति शौनकः। तथा। अत्र ऋष्यादिस्मरणं मध्ये मध्ये प्रणवोच्चारणं च न कुर्यादिति कृष्णभट्टीकारः। तद्वचनं च। न च स्मरेदार्षं छन्दः श्राद्धे वैतानिके मखे। ब्रह्मयज्ञे च वै तद्वत्तथोंकारं तु नोच्चरेत्। इति। एवं ब्रह्मयज्ञं कृत्वोपवीती प्राङ्मुख उपविश्य साक्षताभिरद्भिः सव्यान्वारब्धदक्षिणपाणिना जलाशये जलेऽन्यत्र ताम्रादिपात्रे पर्णे कुशे वा तर्पयेत्॥ प्रजापतिस्तृप्यतु। ब्रह्मा तृप्यतु। वेदास्तृप्यन्तु। देवास्तृप्यन्तु। ऋषयस्तृप्यन्तु। सर्वाणि छन्दांसि तृप्यन्तु। ॐकारस्तृप्यतु। वषट्कारस्तृप्यतु। व्याहृतयस्तृप्यन्तु। सावित्री तृप्यतु। यज्ञास्तृप्यन्तु। द्यावापृथिवी तृप्यतां। अन्तरिक्षं तृप्यतु। अहोरात्राणि तृप्यन्तु। सांख्यास्तृप्यन्तु। सिद्धास्तृप्यन्तु। समुद्रास्तृप्यन्तु। नद्यस्तृप्यन्तु। गिरयस्तृप्यन्तु। क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसस्तृप्यन्तु। नागास्तृप्यन्तु। वयांसि तृप्यन्तु। गावस्तृप्यन्तु। साध्यास्तृप्यन्तु। विप्रास्तृप्यन्तु। यक्षास्तृप्यन्तु। रक्षांसि तृप्यन्तु। भूतानि तृप्यन्तु। एवमन्तानि तृप्यन्तु। इत्येकोनत्रिंशन्मन्त्रैः कुशाग्रैर्देवतीर्थेनैकैकवारं तर्पणं कुर्यात्॥ ततो

निवीती सयवाभिरद्भिः । अथ ऋषयः । शतर्चिनस्तृप्यन्तु । माध्यमास्तृप्यन्तु । गृत्समदस्तृप्यतु । विश्वामित्रस्तृप्यतु । वामदेवस्तृप्यतु । अत्रिस्तृप्यतु । भरद्वाजस्तृप्यतु । वसिष्ठस्तृप्यतु । प्रगाथास्तृप्यन्तु । पावमान्यस्तृप्यन्तु । क्षुद्रसूक्तास्तृप्यन्तु । महासूक्तास्तृप्यन्तु । इति द्वादशमन्त्रैः कुशमध्यैर्ऋषितीर्थेन सकृन्मन्त्रेण सकृत्तूष्णीमेवं द्विवारं तर्पणं कुर्यात् । ततः प्राचीनावीत्यन्वाचितसव्यजानुः सतिलाभिरद्भिः सुमन्तुजैमिनिवैशंपायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्यास्तृप्यन्तु । जानन्तिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाण्डव्यमाण्डूकेयास्तृप्यन्तु । गर्गीवाचक्नवी तृप्यतु । वडवाप्रातीथेयी तृप्यतु । सुलभामैत्रेयी तृप्यतु । कहोळं तर्पयामि । कौषीतकं तर्पयामि । महाकौषीतकं तर्पयामि । पैङ्ग्यं तर्पयामि । महापैङ्ग्यं तर्पयामि । सुयज्ञं तर्पयामि । सांख्यायनं तर्पयामि । ऐतरेयं तर्पयामि । महैतरेयं तर्पयामि । शाकलं तर्पयामि । बाष्कलं तर्पयामि । सुजातवक्त्रं तर्पयामि । औदवाहिं तर्पयामि । महौदवाहिं तर्पयामि । सौजामिं तर्पयामि । शौनकं तर्पयामि । आश्वलायनं तर्पयामि । ये चान्ये आचार्यास्ते सर्वे तृप्यन्तु । इति त्रयोविंशतिमन्त्रैः पितृतीर्थेन [1]कुशमूलाग्रैः खड्गेन सकृन्मन्त्रेण द्विस्तूष्णीमेवं त्रिवारं तर्पयेत् । पितृतर्पणक्रमस्तु हेमाद्रौ । ताताम्बात्रितयं सपत्नजननी मातामहादित्रयं सस्त्रि स्त्रीतनयादि तातजननीस्वभ्रातरस्तत्स्त्रियः । ताताम्बात्मभगिन्यपत्यधवयुक् जायापिता सद्गुरुः शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे । इति ॥ तर्पणप्रकारमाह यमः । संबन्धनामगोत्रेण स्वधान्ते तु नमोन्ततः । वस्वादिरूपं निर्दिश्य तर्पयेत्पितृपूर्वकम् । इति । तथा । नामोच्चारणे विशेषो हेमाद्रौ ।

---

१ कुशाग्रैस्तर्पयेद्देवान्मनुष्यान्कुशमध्यतः । द्विगुणीकृतमूलाग्रैः पितॄन्संतर्पयेद्द्विजः । इत्याचारमयूखे ।

शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु । गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः । इति । तथा । स्त्रीणां दान्तं नाम निर्दिशेदिति पृथ्वीचन्द्रोदये गोभिलसूत्रम् । गौडास्तु देवीशब्दान्तमाहुः । अन्ये तु देवीदामिति द्वयोः समुच्चयमाहुस्तद्युक्तमिति सांप्रदायिकाः । व्यासः । एकैकमञ्जलिं देवा द्वौद्वौ तु सनकादयः । अर्हन्ति पितरस्त्रींस्त्रींस्त्रियश्चैकैकमञ्जलिम् । इति । अस्यापवादमाह यमः । मातृमुख्यास्तु यास्तिस्रस्तासां त्रींस्त्रीन्जलाञ्जलीन् । सापत्नाचार्यपत्नीनां द्वौद्वौ दद्याज्जलाञ्जली । इति । अन्यासामेकैकेति । जलाञ्जलीति शाखान्तरविषयम् । अन्वारब्धेन सव्येन दक्षिणेन तु पाणिना । सव्योत्तराभ्यां पाणिभ्यामथवा तर्पणं भवेत् । इति । स्मृत्यर्थसारस्मृतिसंग्रहौ । पाणिभ्यामित्यपि पूर्ववद्व्याख्येयम् । दक्षिणं प्रतीयादनादेशे इति श्रौतसूत्रपरिभाषायामुक्तम् । अत्र पितृतर्पणे रूपं वक्तव्यमिति प्रयोगपारिजाते । नेति हेमाद्रिः । तथात्र द्वितीयाविभक्तिर्ज्ञेया । अथ तर्पणप्रयोगः । अस्मत्पितरममुकशर्माणममुकगोत्रं वसुरूपं स्वधानमस्तर्पयामि । अत्र द्रव्यभेदात्प्रतितर्पणं मन्त्रावृत्तिरिति कमलाकरः । सकृन्मन्त्रेण द्विस्तूष्णीं सर्वत्रैवं कर्मावृत्तिरिति सूत्रान्नानुवृत्तिरिति । अस्मत्पितामहं अमु० अमुकगो० रुद्र० स्वधान० । अस्मत्प्रपितामहं अमु० अमुकगो० आदित्यरूपं स्वधा० । अस्मन्मातरं गङ्गादेवीदां अमुकगोत्रां वसुरूपां स्वधा० । अस्मत्पितामहीं यमुनादेवीदां अमुकगो० रुद्ररूपां स्वधा० । अस्मत्प्रपितामहीं सरस्वतीदेवीदां अमुकगोत्रां आदित्यरूपां स्वधा० । अस्मत्सापत्नमातरं अमुकदेवीदां अमुकगो० वसुरूपां स्वधा० । अस्मान्मातामहं अमुकशर्माणं अमुकगोत्रं वसुरूपं सपत्नीकं स्वधा० । अस्मन्मातृपितामहं अमुकशर्माणं अमुकगोत्रं रुद्ररूपं सपत्नीकं

स्वधा० ॥ अस्मन्मातृप्रपितामहं अमुकशर्माणं अमुकगोत्रं आदित्यरूपं सपत्नीकं स्वधा० । अस्मत्पत्नीं अमुकदेवीदां अमुकगोत्रां वसुरूपां स्वधा० । अस्मत्पुत्रं अमुकशर्माणं अमुकगोत्रं वसुरूपं सपत्नीकं सापत्यं स्वधा० । अस्मद्दुहितरं अमुकदेवीदां अमुकगोत्रां वसुरूपां सभर्तृकां सापत्यकां स्वधा० अस्मत्पितृव्यं अमुकशर्माणं अमुकगोत्रं वसुरूपं सपत्नीकं स्वधान० । अस्मन्मातुलं अमुकशर्मा० अमुकगोत्रं वसुरूपं सपत्नीकं स्वधा० । अस्मद्भ्रातरं अमुकश० अमुकगोत्रं वसुरूपं सपत्नीकं सापत्यं स्वधा० । अस्मत्पितृष्वसारं अमुकदेवीदां अमुकगोत्रां वसुरूपां सभर्तृकां सापत्यां स्वधा० । अस्मन्मातृष्वसारं अमुकदेवीदां अमुकगोत्रां वसुरूपां सभर्तृकां सापत्यकां स्वधा० । अस्मद्भगिनीं अमुकदां० अमुकगोत्रां वसुरूपां सभर्तृकां सापत्यकां स्वधा० । अस्मच्छ्वशुरं अमुकश० अमुकगोत्रं वसुरूपं सपत्नीकं स्वधा० । अस्मद्गुरुं अमुकश० अमुकगोत्रं वसुरूपं सपत्नीकं स्वधा० । अस्मदाचार्यं अमुकश० अमुकगोत्रं वसुरूपं स्वधा० । अस्मदाचार्यपत्नीं अमुकदेवीदां अमुकगोत्रां वसुरूपां स्वधा० । अस्मच्छिष्यं अमुकश० अमुकगोत्रं वसुरूपं सपत्नीकं स्वधा० । अस्मन्मित्रं अमुकश० अमुकगोत्रं वसुरूपं सपत्नीकं स्वधानमस्तर्पयामीति । स्मृत्यर्थसारे । सुहृत्संबन्धिबान्धवांश्च द्रव्यान्नदातृपोषकरिक्थदांस्तत्पत्नीश्च रूपं निर्दिश्य तर्पयेत् । तिलाभावे स्वर्णरौप्यताम्रदर्भयुतोदकैः । खड्गमौक्तिकहस्तेन कार्यं वा तिलतर्पणम् । न केवलं जलेनैव कर्तव्यं सति संभवे । सप्तम्यां रविवारे च जन्मर्क्षदिवसेषु च । गृहे निषिद्धं सतिलं तर्पणं तद्बहिर्भवेदिति । अत्र गृहादावुद्धृतोदकेन तर्पणे विशेषमाह योगियाज्ञवल्क्यः । यदुद्धृतं प्रसिंचेत्तु तिलान्संमिश्रयेज्जले । अतोऽन्यथा

तु सव्येन तिला ग्राह्या विचक्षणैः । यस्तु गृहे तिलतर्पणनिषेधः स पृथक् तिलाभिप्रायो ज्ञेयः । गृहे त्वनुद्धृतोदकासंभवात् उद्धृते तु तिलसंमिश्रणाभिधानाच्चेत्यादिग्रन्थान्तरादवगन्तव्यम् । ततः । आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः । तृप्यन्तु पितरः सर्वे मातृमातामहादयः । अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् । तिलतर्पणनिषेधे तु तिलोदकमित्यत्र इदमस्तु कुशोदकमित्याद्यूहः कार्य इति केचित् । याज्ञिकास्तु मन्त्रलोपमाहुः । सद्यस्कालायां प्रकृतौ श्वोयज्ञायेतिवन्न प्रकृतावूह इति न्यायात् । ये केचास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः । ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् । इति मन्त्रेण परिधानीयवस्त्रं चतुर्गुणमुपरिदशं स्थले निष्पीड्य वामप्रकोष्ठे निक्षिप्योपवीती द्विराचम्य गङ्गातिरिक्तवस्त्रस्रावितजलैः (?) पूर्णपात्रं देवपूजासाधनं चादाय गृहमागत्य वैश्वदेवं कुर्यात् । इति ब्रह्मयज्ञतर्पणम् ॥

## अथ वैश्वदेवः ।

तथाच कारिकायाम् । वैश्वदेवे गृहस्थस्य प्रातरारम्भणं भवेत् । तन्त्रं नास्त्यत्र भगवद्वृत्तिकारवचो यथा । औपासनाग्निमन्यं वा समिध्याथ हविर्भुजम् । इति । अन्यं पचनाग्निमायतने स्थण्डिले वा संस्थाप्याचम्याग्नेः पश्चात्प्राङ्मुख उपविश्य प्राणानायम्याग्निं प्रदीप्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसायंवैश्वदेवाभ्यां यक्ष्ये इति संकल्प्य ( जुष्टो दमूना आत्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् । एह्यग्ने राहूगणो गोतमोऽग्निस्त्रिष्टुप् । अग्न्यावाहने विनियोगः । ( ३।८।१८ ) ॐजुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप

( जुष्टो दमूना ३।८।१८ ) जुष्टः पर्याप्तो दमूना दानमना दान्तमना वा अति-

याहि विद्वान् । विश्वा अग्ने अभियुजो विहत्या शत्रूयतामाभरा भोजनानि ॥ १ ॥ ( १।५।२४ ) एह्यग्न इह होता निषीदादब्धः सु पुर एता भवा नः । अवतां त्वा रोदसी विश्वमिन्वे यजामहे सौमनसाय देवान् ॥ २ ॥ इत्यक्षतैरावाह्य आच्छादनं दूरीकृत्य । समस्तव्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती अग्निप्रतिष्ठापने विनियोगः । ॐ भूर्भुवः स्वः पावकनामानमग्निं प्रतिष्ठापयामि इत्यग्निं प्रतिष्ठाप्य प्रोक्षितेन्धनादि निक्षिप्य वेणुधमन्या प्रबोध्य ध्यायेत् ) ॥ चत्वारिश्रृङ्गेत्यस्य वामदेवोऽग्निस्त्रिष्टुप् ॥ अग्निमूर्तिध्याने विनियोगः ॥ ३।८।१० ) ॐ चत्वारि श्रृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य । त्रिधा बद्धो वृषभो

---

थिस्तद्वत्पूज्यः सन् इमं नोऽस्मदीयं यज्ञं उपयाह्युपगच्छ विद्वान्जानन् हे अग्ने, विश्वा अभियुजः सर्वानभियोक्तॄन् विहत्य शत्रूयतां तेषां भोजनान्यन्नानि धनान्याभर आहर । अतिथिरभ्यमतो गृहान्भवतीत्यादि निरुक्तं द्रष्टव्यम् ॥ १ ॥

( एह्यग्न इह १।५।२४ ) हे अग्ने, एह्यागच्छ । इहास्मिन्यज्ञे होता देवानामाह्वाता सन् निषीदोपविश । उपविश्य नोऽस्माकं पुरएता पुरतो गन्ता सुभव सुष्ठु भव । यस्मात्त्वं अदब्धः राक्षसादिभिरहिंस्योऽसि तादृशं त्वां विश्वमिन्वे सर्वं व्याप्नुवन्त्यौ रोदसी द्यावापृथिव्यौ त्वां त्वामवतां रक्षताम् आगत्योपविश्य च द्यावापृथिवीभ्यां रक्षितश्चरन् महे महते सौमनसाय सौमनस्याय देवान्दानादिगुणयुक्तानिन्द्रादीन्यज हविर्भिः पूजय । निषीद 'सदिरप्रतेः' इति षत्वम् । सौमनसाय सुमनसो भावः सौमनसं 'तस्येदम्' इति संबन्धसामन्ये अण् प्रत्ययः । स चात्र भावलक्षणे संबन्धविशेषे पर्यवस्यति । यद्वा 'हायनान्तयुवादिभ्योऽण्' इति भावे अण् । युवादिष्वस्य पाठो द्रष्टव्यः ॥ २ ॥

( चत्वारि श्रृङ्गा ३।८।१० ) यद्यपि सूक्तस्याग्निसूर्यादिपञ्चदेवतात्मकत्वात्पञ्चधायं मन्त्रो व्याख्येयस्तथापि निरुक्ताद्युक्तनीत्या यज्ञात्मकाग्नेः सूर्यस्य च प्रकाशात्मकत्वेन तत्परतया व्याख्यायते । अस्य यज्ञात्मकस्याग्नेः चत्वारिश्रृङ्गा चत्वारो वेदाः श्रृङ्गस्थानीयाः । यद्यप्यापस्तम्बेन 'यज्ञं व्याख्यास्यामः । स त्रिभिर्वेदैर्विधीयते' इत्युक्तं तथाप्याथर्वणस्येतरानपेक्ष्यैवैकाग्निसाध्यानां कृत्स्नकर्मणामभिधायकत्वात् तदपेक्षया चत्वारिश्रृङ्गेत्युक्तम् । त्रयो अस्य पादाः सवनानि त्रीण्यस्य पादाः प्रवृत्तिसाधनत्वात्पादा इत्युच्यन्ते । द्वे शीर्षे ब्रह्मौदनं प्रवर्ग्यश्च । इष्टिसोमप्राधान्येनेदमुक्तम् । सप्तहस्तासः सप्त छन्दांसि हस्ता मुख्यसाधनं । छन्दांस्यपि देवताप्री-

रोरवीति महो देवो मर्त्यां आविवेश ॥ १ ॥ इत्यग्निमूर्तिं ध्यात्वाग्नेरीशानीं दिशमारभ्य प्रदक्षिणं त्रिरम्भसा परिसमुह्य तथैव परिषिच्य विश्वानिन इति द्वाभ्यां पूर्ववदग्निमलंकृत्यान्त्ययोपस्थाय हविष्यं सिद्धान्नं पृथक् पात्रे उद्धृत्य तत्पात्रमग्नावधिश्रित्य प्रोक्ष्योदगुद्वास्याग्नेः पश्चिमतो निधाय तदन्नं त्रिधा विभज्य सर्पिषाभ्यज्य दक्षिणजानुं संपात्य हृदि सव्यं पाणिं निधाय दक्षिणभागस्थितादन्नादङ्गुल्यग्रैः पिण्डप्रमाणमार्द्रामलकमितं वादाय प्रणवादिवर्जितैः स्वाहान्तैः। सूर्याय स्वाहा सूर्यायेदं नमम। एवमुत्तरत्रोद्देशत्यागौ कुर्यात्। प्रजापतये स्वाहा। सोमायवनस्पतये स्वाहा। अग्नीषोमाभ्यां स्वाहा। इन्द्राग्निभ्यां स्वाहा। द्यावापृथिवीभ्यां स्वाहा। धन्वन्तरये स्वाहा। इन्द्राय स्वाहा। विश्वेभ्यो देवेभ्यः स्वाहा। ब्रह्मणे स्वाहा। अग्नये

---

णनस्य मुख्यसाधनमिति हस्तव्यवहारः। त्रिधाबद्धः मन्त्रब्राह्मणैस्त्रिप्रकारं बद्धः। बन्धनमस्य तन्निष्पाद्यत्वात्। वृषभः फलानां वर्षिता। रोरवीति भृशं शब्दायते। ऋग्यजुःसामोक्तैः शस्त्रयागस्तुतिरूपैः होत्राद्युत्पादितैर्ध्वनिभिः असौ रौति। एवं महोदेवः एष यज्ञात्मा महानुभावो देवः मर्त्यानाविवेश मर्त्यैर्यजमानैर्निष्पाद्यत्वात्प्रवेश उपचर्यते। अत्र यास्कः। चत्वारिशृङ्गेति वेदा वा एत उक्ता इत्यादिना निरवोचत्तदत्रानुसंधेयम्॥ ॥ अथ सूर्यपक्षे व्याख्यायते। अस्यादित्यस्य चत्वारि शृङ्गाणि चतस्रो दिश एताः श्रयणार्हत्वाच्छृङ्गाणीत्युपचर्यन्ते। त्रयो अस्य पादाः त्रयो वेदाः पादस्थानीया भवन्ति गमनसाधनत्वात्। तथाहि। 'ऋग्भिः पूर्वाह्ने दिवि देव ईयते' इत्युपक्रम्य 'वेदैरशून्यस्त्रिभिरेति सूर्यः' इति हि वेदत्रयेण गतिराम्नाता। द्वे शीर्षे अहश्च रात्रिश्चेति द्वे शिरसी। सप्तहस्तासो अस्य सप्तरश्मयः षड्विलक्षणा ऋतव एकः साधारण इति सप्त हस्ता भवन्ति। त्रिधा बद्धः त्रिषु स्थानेषु क्षित्यादिष्वद्भ्याद्यात्मकत्वेन संबद्धः ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिस्त्रेधा बद्धो वा वृषभो वर्षिता रोरवीति शब्दं करोति वृष्ट्यादिद्वारा स महो महान्देवो मर्त्यानाविवेश तन्नियन्तृतया 'सूर्य आत्मा जगतस्तस्थुषश्च' इतिहि श्रुतम्। एवमबादिपक्षेऽपि योज्यम्। शाब्दिकास्तु शब्दब्रह्मपरतया चत्वारिशृङ्गेति चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्चेत्यादिना व्याचक्षते, अपरे त्वपरथा तत्सर्वमत्र द्रष्टव्यम्॥ १॥

---

१ इमे मन्त्रास्तद्भाष्यं च पूर्वमौपासनहोमे गतं तत्र द्रष्टव्यम्।

स्वाहा । ततः प्रजापतयेस्वाहेत्यादिब्रह्मण इत्यन्ताः पूर्ववन्न-वाहुतीर्विकल्पेन हुत्वोंचम इत्युपस्थाय परिसमूहनपर्युक्षणे कृत्वा विभूतिधारणं कुर्यात् । इति देवयज्ञः ॥

## ॥ अथ भूतयज्ञः ॥

अग्नेरुत्तरतो भूमिं संप्रोक्ष्य मध्यभागस्थितादन्नाद्बदरीफल मितमादाय सूर्याय स्वाहेत्यारभ्य पूर्ववद्दशभिः प्राक्संस्थां पङ्क्तिं कृत्वान्तरालं मुक्त्वा तदग्रेऽपि प्राक्संस्थां पङ्क्तिं कुर्यात्। अद्भ्यः स्वाहा । ओषधिवनस्पतिभ्यः स्वाहा । गृहाय स्वाहा । गृहदेवताभ्यः स्वाहा । वास्तुदेवताभ्यः स्वाहा । वास्तुदेवताभ्य इदंनमम । अद्भ्यो हुताद्बलेः प्रत्यक् । इन्द्राय स्वाहा। ऐन्द्रादुत्तरे इन्द्रपुरुषेभ्यःस्वाहा । अन्तरालस्य दक्षिणे यमाय स्वाहा । तदुत्तरे यमपुरुषेभ्यः स्वाहा । अन्तरालस्य पश्चिमे वरुणाय स्वाहा । तदुत्तरे वरुणपुरुषेभ्यः स्वाहा । अन्तरालस्यो-त्तरे सोमाय स्वाहा । तदुत्तरे सोमपुरुषेभ्यः स्वाहा । अन्तराल-मध्येऽपि पङ्क्तिरूपाश्चतस्र एवेति गृह्यपरिशिष्टजयन्तौ । ब्रह्मा-दिभ्यश्चतुर्भ्यश्च अन्तराले बलीन्हरेत् । इति वचनात् । तद्यथा । ब्रह्मणे स्वाहा । ब्रह्मपुरुषेभ्यः स्वाहा । विश्वेभ्योदेवेभ्यः स्वाहा । सर्वेभ्योभूतेभ्यः स्वाहा । दिवाचारिभ्यः स्वाहा । सोमपुरुष-बलेरुत्तरे रक्षोभ्यः स्वाहा । रक्षोभ्य इदंनमम । परिषेकं ततः कृत्वा पितृयज्ञो भवेदथ । इति जयन्तः । एवमेवाग्नये स्वाहेत्यारभ्य सर्वेभ्यो भूतेभ्यो नक्तंचारिभ्यः स्वाहेति विशे-षेण पूर्वाद्द्वितीयभूतयज्ञं परिषेकान्तं कृत्वा पितृयज्ञौ कुर्यात्। अत्र भूतयज्ञादावपि सर्वत्रोद्देशत्यागौ कुर्यादित्याचारदीपे कमलाकरः । इति भूतयज्ञः ।

## अथ चक्राकारं बलिहरणम्.




१ चक्राकारं तंत्रपक्षेबलिहरणमिदं ॥ पृथग्बलिहरणपक्षेप्रातरग्नि प्रजापतिरहिताश्चक्रेपंचदशैवाहुतयो मध्येदिवाचारीत्येकैवाहुतिश्च ॥ द्वितीयंत्वाद्याहुतिद्वयरहितंमध्येनक्तंचारियुक्तंच ॥——नकारंतुप्राक्संस्थाहुत्यात्मकमुपरिधर्मसिंधौवालोचनीयं ॥ विस्तरभयान्नात्रन्यस्तं ॥ बलावनुद्धृतेनाद्यान्नोद्धरेच्चस्वयंबलिम् ॥ इतिवाक्याद्बलिहरणंतत्कालएव कर्त्तव्योन्यःकोऽप्युद्धरेदितिसिद्धम् ॥

## अथ पितृयज्ञः ।

शौनकः । आग्नेय्यभिमुखो भूत्वा प्राचीनावीत्यतः परम् । पात्रस्योत्तरदेशस्थं भागं चैव तृतीयकम् । अङ्गुष्ठपर्वमात्रान्नं परिगृह्य प्रयत्नतः । तज्जलेनाप्लाव्य वामजानु संपात्य स्वधा-पितृभ्य इति मन्त्रमुच्चार्य पराचीनपाणिना पितृतीर्थेन यमा-येत्यस्योर्ध्वं प्राग्दक्षिणतो निनयेत् । पितृभ्य इदं नमम । एवमेव द्वितीयं पितृयज्ञं कृत्वा परिषेकौ कुर्यात् । परिषेकं ततः कुर्याद्वैश्वदेवं समापयेत् । इति जयन्तवचनात् । इति पितृयज्ञः ।

## अथ वायसबलिः ।

तत्र पितृयज्ञान्नशेषं पिण्डप्रमाणमादाय वामेन जलपात्रं चादाय गृहाद्बहिर्द्वारि गत्वा भूमौ जलमासिच्य तत्र । ऐन्द्र-वारुणवायव्यां याम्यां नैर्ऋतिकाश्च ये । ते काकाः प्रतिगृह्णन्तु भूम्यां पिण्डं मयार्पितम् । वैवस्वतकुले जातौ द्वौ श्यामशबलौ शुनौ । ताभ्यां पिण्डो मया दत्तो रक्षेतां पथि मां सदा। ये भूताः प्रचरन्ति दिवा नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्ठाः। तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्ददातु। इति सर्वेभ्यो बलित्रयं दत्वा गोदोहनमात्रं तत्र स्थित्वाति-थिमाकाङ्क्षेत् । ततो हस्तौ पादौ प्रक्षाल्याचम्य गृहं प्रविशेत्। ॐ शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयं नो अस्तु । शिवा दिशः प्रदिश उद्दिशो न आपो विद्युतः परि पान्तु सर्वतः शान्तिः शान्तिः शान्तिः । यजमाने बहिर्द्वारि गते पत्न्याद्यन्ये वा भूतयज्ञादिबलीनुद्धृत्याप्सु गोद्विजाग्न्यति-थिभ्यो वा प्रतिपादयेयुः । इति काकबलिः॥ अत्रैवमनुष्ठानक-र्मणि कानिचिन्मूलवाक्यानि लिख्यन्ते । तथा च भट्टोजीये आश्वलायनस्मृतिः ॥ सायं प्रातर्वैश्वदेवः कर्तव्यो बलिकर्म

च । अनश्नतापि कर्तव्यमन्यथा किल्बिषी भवेत् । वैश्वदेवो दिवा नक्तं न भवेच्चेत्पृथक्पृथक् । प्रातरेव द्विरावृत्त्या कुर्याच्च सह तद्द्विजः । तत्रैव बृहदाश्वलायनस्मृतौ । सूर्यादिभ्यो हुनेत्पूर्वमग्न्यादिभ्यस्ततः परम् । हुत्वा व्याहृतिभिः पश्चाद्भूतयज्ञौ तथैव च । इति । अत्रान्नेन व्याहृतिहोमो वैकल्पिकः । तथाशब्दस्तु देवयज्ञसहत्ववद्भूतयज्ञपितृयज्ञक्रियार्थः । एवकारस्तु देवयज्ञादीनां परस्परं सहत्वानिश्चयार्थः । चकारस्तु पितृयज्ञद्योतनार्थ इति । अत्र देवभूतपितृयज्ञा वैश्वदेवत्वेनोच्यन्त इति स्मृत्यर्थसारप्रयोगपारिजातौ । अन्नेन व्याहृतिहोमो विधुरपर इति प्रतिभाति ॥

## अथ मनुष्ययज्ञः ।

गृहागतमतिथिमभ्यागतं वा प्राङ्मुखमुपवेश्य निवीती ब्राह्मणभोजनपर्याप्तमन्नं सनकादिमनुष्येभ्य इदं नममेति त्यक्त्वा तेन भोजयेत् । ततः स्मृतिप्राप्तं नित्यश्राद्धं शक्तौ सत्यां कुर्यान्न वा । अतिथ्यभ्यागताभावे तु पात्रान्तरे षोडशग्रासपरिमितान्नं त्यक्त्वा ब्राह्मणादिभ्यः प्रतिपादयेत् । तदभावे ब्रह्मयज्ञदक्षिणार्थं शक्त्या यतिब्रह्मचर्यादिभ्यो भिक्षात्रितयं वा दद्यात् । इति मनुष्ययज्ञः ॥

## अथातिथियत्यादिपूजा ।

अथ भिक्षादानप्रशंसामाह यमः । सत्कृत्य भिक्षवे भिक्षां यः प्रयच्छति मानवः । गोप्रदानसमं पुण्यं तस्याह भगवान्यमः । इति भिक्षुकानाह याज्ञवल्क्यः । यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः । अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः । गौतमः । यतिहस्ते जलं दद्याद्भैक्षं दद्यात्पुनर्जलम् । तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम् । ब्रह्मचारिणे स्वस्तीति वाचयित्वा तद्धस्ते अपः प्रदाय भिक्षां दद्यात् । अन्येषां भिक्षादाने न जलदानादि ।

अतिथयश्च । शूद्रो वा यदि चाण्डालः शत्रुर्वा ब्रह्मघातकः । आगतो वैश्वदेवान्ते सोऽतिथिः स्वर्गदायकः । इति । यतिब्रह्मचारिणौ यदि वैश्वदेवान्ते समागच्छतस्तदा त्वेवम् । यदि वैश्वदेवात्पूर्वमागच्छतस्तदा कथमित्याह गौतमः । वैश्वदेवे तु संप्राप्ते भिक्षुके गृहमागते । उद्धृत्य वैश्वदेवार्थं भिक्षां दत्वा विसर्जयेत् । वैश्वदेवाकृतं पापं शक्तो भिक्षुर्व्यपोहति । नहि भिक्षुकृतान्दोषान्वैश्वदेवो व्यपोहति । यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ । तयोरन्नमदत्वा तु भुक्त्वा चान्द्रायणं चरेत् । इति निषेधश्रवणात् । तस्मात्पुरुषाहारप्रमाणमन्नं वैश्वदेवार्थं नैवेद्यार्थं च पृथक्पृथगुद्धृत्य शिष्टान्नाद्भिक्षां दत्वा भिक्षुकं विसृज्य ततो वैश्वदेवादि कुर्यादिति माधवः ॥ पञ्चयज्ञप्रशंसामाह मरीचिः । यत्फलं सोमपानेन प्राप्नोति धनवान् द्विजः । सम्यक्पञ्चमहायज्ञैर्दरिद्रस्तदवाप्नुयात् । इति । इति पञ्चमहायज्ञाः ॥ ॥ अथ पूर्वोक्तदेवपूजाराधनमादाय गन्धादिपञ्चोचारैरेव पूजां कुर्यात् । अत्र वैष्णवास्तु वैश्वदेवात्प्राग्देवपूजां कुर्वन्ति । विष्णोर्निवेदितान्नेनेत्यादिवचनात् । वैश्वदेवान्ते देवपूजां कुर्यादिति बहवः । आश्वलायनानां तु गृह्यपरिशिष्टे । स एव देवयज्ञोऽहरहर्गोदानसंमितः सर्वाभीष्टप्रदः स्वर्ग्योऽपवर्ग्यश्च तस्मादेनमहरहः कुर्वीत तमेनं वैश्वदेवहुतशेषेण पृथगन्नेन वा कुर्यान्नास्य शेषेण वैश्वदेवं कुर्यादित्युक्तत्वादादौ वैश्वदेवस्ततो देवपूजेति युक्तमित्याचारदीपे कमलाकरः । तथा वैश्वदेवविधिं कृत्वा नैवेद्यादीन्प्रकल्पयेत् । स्नातः स्पर्शाधिकारी स्यात्संध्याशुद्धो मनोर्जपे । वैश्वदेवविशुद्धोऽसौ विष्णोरन्नं निवेदयेत् । इति धर्मप्रदीपे वृद्धमनूक्तेः । तथा माधवीये दिवैवार्चनात्प्रागेव वैश्वदेवक्रियोक्तिरस्तीत्यलम् । एवं यथासंप्रदायं देवार्च-

नमभिधाय गन्धाद्युपचारैर्गोब्राह्मणपूजां च कृत्वा भुञ्जीयात्॥

## अथ भोजनविधिः ॥

आश्वलायनस्मृतौ। अष्टम्योश्च चतुर्दश्यो रात्रावश्नीत नित्यशः। एकादश्यामुपवसेच्छुक्लपक्षे विशेषतः। अर्कपर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा। एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत्। अत्र दिङ्नियमः कौर्मे। प्राङ्मुखोऽन्नानि भुञ्जीत सूर्याभिमुख एव वा। इति मनुः। आयुष्मान्प्राङ्मुखो भुङ्क्ते यशस्वी दक्षिणामुखः। धनवान्पश्चिमायां तु धर्मवानुत्तरामुखः। इति। तथा। प्राङ्मुखोदङ्मुखो वापि भुञ्ज्याद्वै ब्राह्मणांस्तथा। प्राच्यादिदिङ्मुखो भुञ्ज्यान्न कदाचिदुदङ्मुखः। इति स्मृत्यर्थसारादयः। यत्तु न कदाचिदुदङ्मुख इत्यत्रिवचनं तत्पुत्रवतामेव। उक्तं च स्मृतिसंग्रहे। पुत्रवान्स्वगृहे नित्यं नाश्नीयादुत्तरामुखः। सोमवारे तथाभ्यङ्गं वर्जयेत्तु सदा बुधः। इति। तथा दक्षिणामुखो न भुञ्ज्यात्। उक्तं च तत्रैव। शिरो वेष्ट्य च यद्भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः। सोपानत्कोपि यद्भुङ्क्ते तद्वै रक्षांसि गच्छति। इति संग्रहात्। अत्र दक्षिणामुखनिषेधो जीवन्मातृपितृविषयः। उक्तं च प्रयोगपारिजाते स्मृतिमञ्जर्याम्। पितरौ जीवमानौ चेन्नाश्नीयाद्दक्षिणामुखः। तयोस्तु जीवमानैकस्तथैव नियमः स्मृतः। इति। तथा। अनिशं मातृहीनानां यशस्यं दक्षिणामुखम्। इति विज्ञानेश्वराच्च। स्मृत्यर्थसारे। शुचिः श्रीपर्ण्यादिश्लक्ष्णचतुष्पात्पीठे भूमिष्ठपादो दक्षिणे वोपविष्टः सति विभवे रत्नहिरण्यपाणिर्गन्धाक्षतमाल्यवान्कृतचतुरस्रगोमयमण्डले पालिकायन्त्रं न्यस्य तस्मिन्सौवर्णरौप्यकांस्यादिमयानि पात्राणि तत्र कांस्यं द्विपञ्चाशत्पलं द्वात्रिंशत्पलमितं वा महापात्रं लघुपात्राणि च यथासंख्याकानि प्रक्षाल्य निधायाभिघार्य कृतपञ्च-

यज्ञावशिष्टं पूर्वसंस्कृतं हितं मितं मातृभार्यादिदत्तं अतिथ्य-भ्यागतभृत्यपुत्रपौत्रबान्धवांश्च स्वदक्षिणत उपवेश्य परिवेषणं कारयेत् । न यन्त्रिकादौ यतिर्ब्रह्मचारी विधवा च भुञ्जीतेति स्मृत्यर्थसारः । परिवेषणे तु भक्ष्यं दक्षिणभागे पेयं लेह्यं च वामभागे परिवेषयेत् । शाकादीन्पुरतः स्थाप्य भक्ष्यं भोज्यं च वामतः । अन्नं मध्ये प्रतिष्ठाप्य दक्षिणे घृतपायसौ । ओ-दने परमान्ने च आज्यपात्रं स्थितं यदि । तदाज्यं च भवेद्रक्तं तदन्नं मांसमुच्यते । इति स्मृत्यन्तरात् । शातातपः । लवणं व्यञ्जनं चैव घृतं तैलं तथैव च । लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेत् । इति दर्व्यैव सर्वं देयं । प्रत्यक्षलवणं चान्य-द्रव्येण संमिश्र्य परिवेषयेदिति शिष्टाः । विवाहं वर्जयित्वा न भार्यया शिशुभिश्च सह भुञ्जीतेति स्मृत्यर्थसारः । विवाहेऽध्वनि च भार्यया शिशुभिः सह भुञ्जीतेति विज्ञानेश्वरमाधवौ । भोजनगृहे नाचामेत् । न प्रह्वो भुञ्जीत । ततः परिविष्टपात्रान्न-मकुत्सयन्ब्रह्मग्रन्थिरहितपवित्रपाणिरादावन्नमभ्युक्ष्योंभूरि त्यादिदशप्रणवेनाभिमन्त्र्य सत्यं त्वर्तेन परिषिञ्चामीति दिवा । रात्रौ तु ऋतं त्वा सत्येन परिषिञ्चामीति प्रदक्षिणं परिविष्ट-पात्रं परिषिच्य पात्राद्दक्षिणभागे भूमावुदकधारां कृत्वा तत्र परिशिष्टमताद्भूपतये नमः । पुनरादाय भुवनपतये नमः । पुनरादाय भूतानां पतये नमः । इति त्रीन्बलीनार्द्रामलकमि-तान्घृतप्लुतान्नेन प्राक्संस्थामुदक्संस्थां प्रत्यक्संस्थां वा पंक्तिं कृत्वा तदुपर्युदकधारां दत्वा बलीनुद्धरेत् । भोजनादौ बले-रन्नं यावद्भूमौ च तिष्ठति । अभोज्यं तद्भवेदन्नं तत्स्थानात्सं-त्यजेद्बुधः । इति शातातपोक्तनिषेधात् । तथा । भोजनादौ बलिर्मुक्तः स उद्धृत्य हि भोजनम् । अनुद्धृत्य तु यो भुङ्क्ते प्राणा-यामाष्टकं चरेत् । इति रामार्चनचन्द्रिकायां प्रायश्चित्तोक्तेश्च ।

ततो हस्तं प्रक्षाल्य भुञ्जीतेति मनुः। स्मृत्यर्थसारे। तत आपोशनार्थं जलमादाय वामपाणिमध्यमानामिकाङ्गुष्ठैर्भोजनपात्रं धृत्वाऽमृतोपस्तरणमसीति मन्त्रेणापोशनं निःशब्दं तज्जलं पीत्वा परिशिष्टात्सर्वाङ्गुलिभिः सर्वान्ग्रासान्ग्रसेत्। ॐप्राणाय स्वाहा। प्राणायेदं नमम। ॐअपानाय स्वाहा। अपानायेदं०। ॐव्यानाय स्वाहा। व्यानायेदं०। ॐउदानाय स्वाहा। उदानायेदं०। ॐसमानाय स्वाहा। समानायेदं० इत्यापस्तम्बात्पञ्चाहुतीर्बदरीफलमिताः सघृताः सक्षीरा वा मुखे हुत्वा ब्रह्मणि मात्मानममृतत्वायेत्युच्चार्य वाक्पाणिपादचापल्यं वर्जयेत्। अत्र प्रणवोद्देशस्त्यागश्च प्राणाग्निहोत्रादवगन्तव्यः। तथा अत्र वामेन पात्रान्वारम्भो मौनं च पालिकायन्त्रे न्यस्तपात्रविषयमेव। पालिकायन्त्रे न्यस्तपात्राभावे त्वाप्राणाहुतिपर्यन्तं पात्रान्वारम्भो मौनं च नियमेन कुर्यादेवेति भट्टोजीये। ततः सव्यं पाणिं प्रक्षालयेत्। स्वदक्षिणतो जलपात्रं संस्थाप्य दक्षिणेनैव भुञ्जान उदकं पिबेत्। इत्याश्वलायनः। स्मृत्यर्थसारे। ततः कृत्स्नं ग्रासं साङ्गुष्ठं निःशब्दं ग्रसन्नाहारशक्तेर्भागद्वयं भुञ्ज्यात्। तत्रादावोदनः पश्चाद्भक्ष्यादीनीति धर्मशास्त्रार्थः। वैद्यके त्वादौ भक्ष्यं पश्चात्पायसादि अन्ते ओदन इति यथाप्रियं भुक्त्वान्ते स्वल्पं वारि पिबेत्। ततो भुक्तशेषात्सर्वस्मादन्नात्किंचित्किंचिदाग्राय सोदकमुच्छिष्टभागधेयेभ्यस्त्यक्त्वोत्तरापोशनार्थमप्रक्षालितपाणावुदकं गृहीत्वा अमृतापिधानमसीति मन्त्रेणार्धगंडूषं पीत्वार्धं। रौरवे पूयनिलये पद्मार्बुदनिवासिनाम्। अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु। इति मन्त्रेण तद्यथाधिकारं पितृतीर्थेन भूमौ निनीय तत्रैवोपविष्टः पात्रान्तरे शुद्धभूमौ बहिरागत्य वा पवित्रं पाणिस्थं संत्यज्य सम्यङ्मुखकरस्थमुच्छिष्टं प्रक्षाल्य पाणी पादौ च

सकृत्प्रक्षाल्य षोडशगण्डूषान्कृत्वा द्विराचम्य पुनरुदकमादाय हस्तौ विमृज्य परिस्राव्याङ्गुष्ठाग्रैश्चक्षुषोर्निषिच्याक्षिणी स्पृशन्पठेत् । शर्यातिं च सुकन्यां च च्यवनं शुक्रमश्विनौ । भोजनान्ते स्मरन्नक्ष्णोरङ्गुष्ठाम्बु क्षिपाम्यहम् । इति मन्त्रेणाक्षिणी संमृज्याग्निमुपस्पृश्य पाणिनोदकमालभन्पठेत् । ऋग्विधाने । अग्निरस्मीति मन्त्रस्य गाथिनो विश्वामित्रो मरुतस्त्रिष्टुप् । भुक्तान्नपाचनार्थं जपे विनियोगः । (३।१।२७)ॐअ॒ग्निर॑स्मि॒ जन्म॑ना जा॒तवे॑दा घृ॒तं मे॒ चक्षु॑र॒मृतं॑ म आ॒सन् । अ॒र्कस्त्रि॒धातू॒ रज॑सो वि॒मानोऽज॑स्रो घ॒र्मो ह॒विर॑स्मि॒ नाम॑

---

(अग्निरस्मि ३।१।२७) साक्षात्कृतपरतत्त्वस्वरूपोऽग्निः स्वात्मनः सर्वात्मकत्वानुभवमाविष्करोति । हे कुशिकाः, भोक्तृभोग्यभावेन द्विविधं हीदं सर्वं जगदेतावद्वा इदमन्नं चैवान्नादश्च । 'सोम एवान्नमग्निरन्नाद' इति श्रुतेः । तत्र सकलभोक्तृवर्गरूपेणान्नादोऽग्निः स चाग्निवाय्वादित्यभेदेन त्रिधा भूत्वा पृथिव्यन्तरिक्षद्युलोकानधितिष्ठति । तदुक्तं वाजसनेयके । स त्रेधात्मानं व्यभजत् आदित्यं तृतीयं वायुं तृतीयमिति । तत्र सोऽग्निरहं जन्मनैव जातवेदा अस्मि श्रवणमननादिसाधननिरपेक्षेण स्वभावत एव साक्षात्कृतपरतत्त्वस्वरूपोऽस्मि । घृतं मे चक्षुः यदेतद्विश्वस्य विभासकं मम स्वभावभूतप्रकाशात्मकं चक्षुस्तद्धृतं इदानीमत्यन्तं दीप्तं यदेतदमृतं कर्मफलं दिव्यादिव्यविविधविषयोपभोगात्मकं तन्मे मम आसन्नास्ये वर्तते । सकलभोक्तृवर्गात्मना स्वयमेवावस्थानात् । एवं स्वात्मनः पृथिव्यधिष्ठातृरूपतामभिधाय वाय्वात्मनान्तरिक्षाधिष्ठातृतामाह । अर्को जगत्स्रष्टा प्राणः सोऽर्चन्नतरत् तस्यार्चत आपो जायन्त अर्चतेवैमेक(?)मभूदिति तदेवार्कस्यार्कत्वमिति श्रुतेः । सप्रमाणोऽहं त्रिधातुः त्रेधात्मानं विभज्य तत्र वाय्वात्मना रजसोऽन्तरिक्षस्य विमानः विमाताधिष्ठातास्मि । तथा आदित्यरूपेण द्युलोकाधिष्ठातृतामाह । अजस्रो घर्म इति । अजस्रः अनुपक्षीणो घर्मः प्रकाशात्मा द्युलोकाधिष्ठाता आदित्योऽप्यहमस्मि । एवं भोक्तृरूपमात्मनोऽनुसंधाय भोग्यतामप्यनुसंधत्ते । यद्धविर्भोग्यं प्रसिद्धमस्ति तदप्यहमेवास्मि । यद्वा अहमग्निरस्मि देवानां हविःप्रापणादङ्गनादिगुणयुक्तोऽस्मि । किंच जन्मनोत्पत्त्या जातवेदाः जातज्ञानोऽस्मि उत्पत्तिलक्षण एव सर्वज्ञोऽहमस्मि । अथवा जातं सर्वं स्वात्मरूपतया वेत्तीति जातवेदाः । सर्वात्मक इत्यर्थः । तत्कथमित्युच्यते । घृतं मे चक्षुः यदेतद्धृतं प्रसिद्धमस्ति तन्मे चक्षुःस्थानीयं तथा लोके चक्षुर्भासकं एवं घृतं मयि प्रक्षिप्तं ज्वालामुत्पादयत् मम भासकं अमृतं प्रभारूपं यदमृतविनाशि ज्योतिः मे मम आसन् आस्ये वर्तते त्रिधातुः प्राणापानव्यानात्मना त्रिधा वर्तमानः अर्कोऽर्चनीयो

॥ १ ॥ आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥ २ ॥ ( १।६।२२। ) सं ते पयांसि समु यन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व॥३॥( २।४।२२ ) अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः । उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥ १ ॥ इति श्रौतातिदेशात्पठेत् । ऋष्यादिस्मरणमपि श्रौतातिदेशादेव लुप्तम् । तथा पुराणान्तरे । अगस्त्यं कुम्भकर्णं च शनिं च वडवानलम् । आहारपरिपाकार्थं स्मरामि च वृकोदरम् । तथा । अगस्तिरग्निर्वडवानलश्च भुक्तं मयान्नं जरयन्त्वशेषम् ।

---

यः प्राणोऽस्ति सोऽप्यहमस्मि । तथा रजसोऽन्तरिक्षस्य विमानो विशेषेण माता परिच्छेत्ता वायुश्चाहमस्मि । किंच अजस्रो घर्मः नैरन्तर्येण संतापकारी सूर्यश्चाहमस्मि । किंबहुना आद्यं पुरोडाशादिरूपं यदेतद्धविरस्ति तदुपलक्षितं सर्वमप्यहमस्मि । 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः । नामशब्दः प्रसिद्धौ । तदनेयाग्नेः सर्वात्मकत्वप्रतिपादनेन परब्रह्मत्वमुक्तं भवति ॥ १ ॥

( सं ते पयांसि १।६।२२ ) हे सोम, अभिमातिषाहः अभिमातीनां शत्रूणां हन्तुस्ते तव एवंभूतं त्वां पयांसि श्रपणार्थानि क्षीराणि संयन्तु संगच्छन्ताम् । तथा वाजाः हविर्लक्षणान्यन्नानि च त्वां संगच्छन्ताम् । वृष्ण्यानि वीर्याणि च संगच्छन्ताम् । हे सोम, त्वं अमृतायास्माकममृतत्वायामरणत्वाय आप्यायमान आसमन्ताद्वर्धमानः सन् दिवि नभसि स्वर्गे उत्तमान्युद्गततमान्युत्कृष्टानि श्रवांस्यन्नानि अस्माभिर्भोक्तव्यानि हविर्लक्षणानि वा धिष्व धारय । ते 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । अभिमातिषाहः 'षह अभिभवे'–'छन्दसि सहः' इति ण्विप्रत्ययः । सुषामादित्वात्षत्वम् । अमृताय 'नञो-जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । उत्तमानि । उच्छब्दात्ससाधनक्रियावचनादातिशायनिकस्तमप् 'उत्तमशश्वत्तमौ सर्वत्र' इत्युञ्छादिषु पाठादन्तोदात्तत्वम् । धिष्व 'सुधितवसुधितनेमधितधिष्वधिषीय च' इति धिभावो निपात्यते ॥ ३ ॥

( अगस्त्यः २।४।२२ ) अयमगस्त्यो मद्गुरुः खनित्रैः फलस्योत्पादनसाधनैः यज्ञस्तोत्रादिभिः खनमानः फलमभिमतमुत्पादयन् प्रजां प्रकर्षेण पुनः पुनर्जायमानमपत्यं कुलस्यापतनसाधनं पुत्रादिकं बलं चेच्छमानः सन् । यद्वा प्रजां भृत्यादिरूपां चेच्छन् ऋषिः अतीन्द्रियद्रष्टा महानुभावः उग्र उद्गूर्णः संसारे संचरन्नप्यपापः सन्नुभौ वर्णावर्णौ वर्णनीयाकारौ कामं च तपश्च पुपोष । सत्या आशिषो देवेषु देवेभ्यो जगाम प्राप्तवान् । यतोऽयं महानुभावस्तस्मात्पातीत्यर्थः ॥ १ ॥

---

आप्यायस्वेत्यस्य भाष्यं पूर्वं ( ६५ ) पृष्ठे गतं तत्तत्रालोचनीयम् ॥

सुखं ममैतत्परिणामसंभवं यच्छन्त्वरोगो मम चास्तु देहः । इति मन्त्राभ्यां चोदरं परिमृज्येष्टदेवतां स्मरन् स्वासने उपविश्य ताम्बूलचर्वणं कृत्वेतिहासपुराणश्रवणादिभिर्दिनशेषं समापयेत् । इति भोजनविधिः ॥

## अथ प्रादुष्करणम् ।

उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वाल्येत्याश्वलायनश्रौतसूत्रातिदेशात्तस्मिन्काले प्रादुष्कृत्य । कालान्तरमाह यमः । सूर्येऽस्तशैलमप्राप्ते षट्त्रिंशद्भिर्तयाङ्गुलैः । प्रादुष्करणमग्नीनां प्रातर्भासामदर्शने । इति कालं ज्ञात्वा शुचिराचान्तोऽग्निं प्रज्वाल्य जलाशये गत्वा गृहे देवद्विजगोष्ठादिशुचिस्थले वा सायंसंध्यां कुर्यात् । इति प्रादुष्करणम् ॥

## अथ सायंसंध्या ।

तत्र हस्तौ पादौ प्रक्षाल्य द्विराचम्य प्राणानायम्य । ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायंसंध्यामुपासिष्य इति संकल्प्य पूर्ववत्प्रथममार्जनं कृत्वा अग्निश्चेत्यस्यानुवाकस्य याज्ञवल्क्य उपनिषद ऋषिः । अग्निमन्युमन्युपत्यहानि देवताः । प्रकृतिश्छन्दः । मन्त्राचमने विनियोगः । ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्तां । यदह्ना पापमकार्षं । मनसा वाचा हस्ताभ्यां । पद्भ्यामुदरेण शिश्ना । अहस्तदवलुम्पतु । यत्किंच दुरितं मयि । इदमहं माममृतयोनौ । सत्ये ज्योतिषि जुहोमि स्वाहा । इति मन्त्राचमनं कृत्वा । द्विराचम्य द्वितीयतृतीयचतुर्थमार्जनाद्यघमर्षणान्तं कृत्वाञ्जल्यामप आदाय दक्षिणावृद्वायव्यपश्चिमसंध्यभिमुखस्तिष्ठन्नेव महीतले पूर्ववत्त्रिरर्घ्यं दत्वा सवित्रे इदमर्घ्यं समर्पयामीति । यत्तु सायं तूपविशेद्भुवीति वचनमाह्निककारैः प्रतिपादितं तच्छाखान्तरविषयमेव । तदाह बृहन्मनुः ।

कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रयेत् । आदित्याभिमुखस्तिष्ठंस्त्रिरूर्ध्वं संध्ययोः क्षिपेत् । इति । तथाच शौनकः । अञ्जल्यामप आदाय गायत्र्या वाभिमन्त्रयेत् । रवेरभिमुखस्तिष्ठंस्त्रिरूर्ध्वं संध्ययोः क्षिपेत् । इति । तथा । जलमञ्जलिनादाय गायत्र्या चाभिमन्त्रयेत् । दद्यादर्घ्यत्रयं तिष्ठंस्त्रिषु कालेषु बह्वृचः । इत्याश्वलायनस्मृतावुक्तेश्च । वाजपेययाजिनोप्येवं । पूर्ववत्रिरर्घ्यं दद्यादित्यलं । अन्यत्समानं । जपदिङ्नियमस्तु वृत्तौ कारिकायां च । अर्धास्तमित आदित्ये पश्चिमस्य य उत्तरः । भागस्तन्मुख आसीनः सावित्रीं वाग्यतो जपेत् । इति । तथा । प्रतीच्यां दिशि य उत्तरोभागोऽष्टमदेशो वायव्यपश्चिमसंधिस्तदभिमुख उपविश्य नासाग्रे धृतदक्षिणवामपाणिरर्धास्तमिते मण्डले आनक्षत्रदर्शनात् पूर्ववदर्थानुसंधानेनैव सावित्रीं जप्त्वोत्तरन्यासान्ते उपस्थानं कुर्यात् । आश्वलायनस्मृतौ ॥ इमं मे वरुण तत्त्वायामीत्यृचोराजीगर्तिः शुनःशेपो वरुणो गायत्री । द्वितीया त्रिष्टुप् । संध्योपस्थाने विनियोगः । इत्युच्चार्य जपदिङ्मुख एव तिष्ठन्कृताञ्जलिः । (१।२।१९) ॐइमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युराचके । ( १।२।१५ ) ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।

---

( इमं मे वरुण १।२।१९ ) हे वरुण, मदीयमिदं हवमाह्वानं श्रुधि श्रुणु । किंच अद्यास्मिन्दिने मृळयास्मान्सुखय । अवस्यू रक्षणेच्छुरहं त्वां वरुणमाभिमुख्येन चके शब्दयामि । स्तौमीत्यर्थः । श्रुधि 'श्रु श्रवणे' लोटो हिः 'श्रुश्रृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः 'बहुलं छन्दसि' इति विकरणस्य लुक् 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः । अवस्युः अवसूशब्दात् 'सुप आत्मनः क्यच्, 'क्याच्छन्दसि' इत्युप्रत्ययः । आचके 'कै गै शब्दे' अस्माल्लिटि 'आदेच'इत्यात्वं द्विर्भावचुत्वे 'आतो लोप इटि च' इत्याकारलोपः 'तिङ्ङतिङः' इति निघातः ॥ ३ ॥

( तत्त्वा यामि १।२।१५ ) हे वरुण, मुमूर्षुरहं त्वा त्वां प्रति तदायुः यामि

अहेळमानो वरुणेह बोध्युरुशंसमा न आयुः प्रमोषीः ॥ १ ॥ जातवेदसे इत्यादिपूर्वोक्तमन्त्रैरुपस्थाय भूरित्यादिचतसृभिश्च प्रदक्षिणाचतुष्टयं कृत्वा प्रतीच्यै दिशे इत्यादिदिगुपस्थाननमस्काराभिवादनद्विराचमनान्तं कुर्यात् । इति सायंसंध्या ॥

## अथ सायमौपासनम् ।

आचमनादिप्रातरौपासनवत्कृत्वा श्रीपरमेश्वरप्रीत्यर्थं सायमौपासनमहं करिष्य इति संकल्प्यान्यत्पूर्ववत्कृत्वा ॥ अग्नये स्वाहेति प्रथमं प्राग्वत् । अन्यत्समानं । प्राजापत्या प्राग्वत् । तन्तुं तन्वन्वामदेवोऽग्निर्जगती । अग्न्युपस्थाने विनियोगः । (८।१।१४) ॐ तन्तु तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् । अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् । हिरण्यगर्भ इत्यनेन पूर्ववदुपतिष्ठेत् । अग्न आयूंषीति तिसृणां शतं वैखानसाः पवमानोऽग्निर्गायत्री

---

याचे । कीदृशः । ब्रह्मणा प्रौढेन स्तोत्रेण वन्दमानः स्तुवन् सर्वत्र यजमानोऽपि हविर्भिस्तदायुराशास्ते प्रार्थयते । त्वं चेह कर्मणि अहेळमानोऽनादरमकुर्वन् बोधि अस्मदपेक्षितं बुध्यस्व । हे उरुशंस बहुभिः स्तुत्य, नोऽस्मदीयमायुः मा प्रमोषीः प्रमुषितं मा कुरु । सप्तदशसंख्याकेषु याज्याकर्मस्वीमहे यामीति पठितम् । चाशब्दलोपश्छन्दसः।अहेळमानः हेडृ अनादरे अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपश्च पित्वादनुदात्तत्वे सति धातुस्वरः शिष्यते ततो नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । बोधि बुध अवगमने लोटः सेर्हिः 'बहुलं छन्दसि' इति विकरणस्य लुक् 'वा छन्दसि' इत्यपित्वाभावेन ङित्वाभावाल्लघूपधगुणः 'हुझल्भ्यो हेर्धिः' इति हेर्धिरादेशः धातोरन्त्यलोपश्छान्दसः । मोषीः मुष स्तेये लोडर्थे छांदसो लुङ् 'वदव्रज–' इति प्राप्ताया वृद्धेः 'नेटि' इति प्रतिषेधे सति लघूपधगुणः 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः ॥ १ ॥

( तन्तुं तन्वन् ८।१।१४) हे अग्ने, तन्तुं यज्ञं तन्वन्विस्तारयन् रजसो रञ्जनात्मकस्य लोकस्य भानुं भासकमादित्यं अन्विहि अनुगच्छ । रश्मिद्वारा सूर्यमण्डलं प्रविशेत्यर्थः । किंच ज्योतिष्मतः प्रकाशवतो यज्ञस्य पथो गमनमार्गान् धिया कर्मणा कृतान्संपादितान् । किंच सोऽग्निः जोगुवां स्तोतृणां अपः । कर्म नामैतत् क्रियया व्याप्यं कर्म अनुल्बणमनतिरिक्तं वयत करोतु । देवयज्ञ उल्बणं क्रियते तस्यैवैषा शान्तिरिति हि ब्राह्मणम् । स त्वं मनुर्भव मन्तव्यो भव । स्तुत्यो भवेत्यर्थः । किंच दैव्यं जनं दैवसंघं जनयोत्पादय । यज्ञाभिगमनवन्तं कुर्वित्यर्थः।२।

अग्न्युपस्थाने विनियोगः । ( ७।२।१० ) ॐ अग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥१॥ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥२॥ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ॥३॥ अग्ने त्वं न इति चतसृणां गौपायनालौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्चाग्निर्द्विपदा विराट् । अग्न्युपस्थाने० (४।-१।१६) ॐ अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः । वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ॥१॥२॥ स नो बोधि श्रुधी हवमुरुष्याणो अघायतः समस्मात् । तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ ३ ॥ ४ ॥

---

( अग्न आयूंषि ७।२।१० ) हे अग्ने पवमानरूप, त्वमस्माकं आयूंषि जीवनानि पवसे रक्षसि । नोऽस्माकमूर्जमन्नरसं इषमन्नं वा सुव आभिमुख्येन प्रेरय । किंच दुच्छुनां रक्षोनामैतत् । रक्षांसि आरे अस्मत्तो दूरे एव बाधस्व संपीडय ॥ १ ॥ —पाञ्चजन्यः निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । यद्वा गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येते पञ्चजनाः । अथवा देवमनुष्यगन्धर्वाप्सरसः सर्पाः पितर इति ब्राह्मणेऽभिहिताः पञ्चजनाः । 'गभीराञ्ञ्यः ' इत्यत्र 'बहिर्देवपञ्चजनेभ्य इति वक्तव्य'मिति वचनाद्भवार्थे ञ्यप्रत्ययः । तेषां तत्तदभीष्टदानेन स्वभूत ऋषिः सर्वद्रष्टा पवमानस्तद्रूपोऽग्निः पुरोहितः कर्मार्थमृत्विग्भिः पुरो निहितः तं पूर्वोक्तलक्षणं महागयं महद्भिर्देवादिभिरपि गीर्भिर्गातव्यं महान्ति प्रभूतानि यज्ञगृहाणि वा यस्य स तथोक्तः तं पवमानगुणविशिष्टमग्निमीमहे धनादीनि याचामहे ॥ २ ॥—हे अग्ने, स्वपाः । 'सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वम् । शोभनकर्मा त्वं अस्मेऽस्मासु सुवीर्यं शोभनवीर्योपेतं वर्चः वर्च दीप्तौ तेजः पवस्व आगमय । तथा भवान् रयिं धनं पुत्रं वा पोषं । भावे कर्मणि वा घञ् । गवां पुष्टिं यद्वा गवादिकं मयि भवान् दधत् दधातु । करोत्वित्यर्थः । दधातेर्लेटि अडागमे 'घोर्लोपो लेटि वा' इत्याकारलोपः ॥ ३ ॥

(अग्ने त्वं नो ४।१।१६) हे अग्ने, वरूथ्यः वरणीयः संभजनीयः । यद्वा वरूथैः परिधिभिर्वृतस्त्वं नोऽस्माकं अन्तिमोऽन्तिकतमो भव । उतापि च त्राता रक्षकः शिवः सुखकरश्च भव । वसुर्वासकोऽग्निः सर्वेषामग्रणीः वसुश्रवाः व्याप्तान्तस्त्वं अच्छ आभिमुख्येन नक्षि अस्मान्व्याप्नुहि । द्युमत्तममतिशयेन दीप्तिमत् रयिं पश्वादिलक्षणं धनं दाः अस्मभ्यं देहि ॥ १ ॥ २ ॥ हे अग्ने, स त्वं नोऽस्मान् बोधि बुध्यस्व । हवमस्मदीयमाह्वानं श्रुधि शृणु । अघायतः अघमिच्छतः समस्मात्सर्वस्माज्जनात् नोऽस्मान् उरुष्य रक्ष । हे शोचिष्ठ अतिशयेन शोचिष्मन्,

होमकालस्त्वस्तोत्तरं त्रिमुहूर्त उदयोत्तरं च त्रिमुहूर्तः । क्रमेण सायंप्रातश्च होमं कुर्यादिति प्रयोगपारिजाते। सायमस्तमिते होमकालस्तु नवनाडिकाः। इति स्मृत्यर्थसारः। प्रातर्दशनाडिका इति नारायणवृत्तिः। इति सायमौपासनहोमः ॥

॥ अथ सायंवैश्वदेवः ।

सायंवैश्वदेवेन यक्ष्य इति संकल्प्यान्यत्पूर्ववत् ॥ सूर्यपदस्थाने अग्नये स्वाहेति विशेषः । तथा भूतयज्ञेऽपि सर्वेभ्यो भूतेभ्यो नक्तंचारिभ्यःस्वाहेति विशेषः। अन्यत्समानम्। सायंवैश्वदेवेन यक्ष्य एतावानेव विशेषः । इति सायंवैश्वदेवः ॥

अथ ब्रह्मचारिणामग्निकार्यम् ।

ब्रह्मचारी तु सायंप्रातःसंध्योपासनानन्तरमित्थं समिदाधानं कुर्यात् । आचम्य प्राणानायम्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायंसमिदाधानं करिष्ये । प्रातस्तु प्रातःसमिदाधानं करिष्य इति संकल्प्य परिसमूहनपर्युक्षणे कृत्वा । विश्वानिन इति तिसृभिः पूर्ववदग्निमलंकृत्य प्रादेशमात्रं समित्खण्डमादाय । ॐअग्नये समिधमाहार्षं बृहते जातवेदसे । तया त्वमग्ने वर्धस्व समिधा ब्रह्मणा वयं स्वाहा । इति मन्त्रेण समिधमग्नावाधायाग्नय इदं नमम । तत आर्द्रपाणितलमग्नौ प्रताप्य ॐतेजसा मा समनज्मि इति मन्त्रेण संवृतोष्ठद्वयमुखमवाङ्गिमृज्य पाणिं प्रक्षाल्य पुनरेवं द्विःकृत्वोत्थायोपतिष्ठेत्। ॐमयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु । मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु । मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु । यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् । यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् ।

---

दीदिवः स्वतेजोभिर्दीप्ताग्ने, तं त्वा त्वां सुम्नाय सुखाय । सुम्नमिति सुखनाम । तदर्थं सखिभ्यः समानख्यातिभ्यः पुत्रेभ्यः तदर्थं च नूनं ईमहे याचामहे॥३॥४॥

यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासम् । इत्युपस्थायोपविश्य परिसमूहनपर्युक्षणे कृत्वा पूर्ववद्भस्म विधृत्याभिवाद्याग्निप्रार्थनादि कृत्वा कर्मेश्वरार्पणं कृत्वा द्विराचामेत् । इति ब्रह्मचारिणां समिदाधानम् ॥ अथ द्वितीयभोजनम् । तत्र भानुवारसंक्रान्तिपर्वद्वयव्यतीपातवैधृतिद्वादशीश्राद्धदिनतत्पूर्वदिनातिरिक्तदिनेषु रात्रौ पूर्वोक्तविधिना भोजनपात्राधो मण्डलं कुर्वन् लघु भुक्त्वार्धयाममात्रं वेदाद्यधीत्य स्वपेत् । इति द्वितीयभोजनम् ।

## अथ नित्यप्रायश्चित्तानि ।

अथावश्यकविशेषो नित्यप्रायश्चित्तानि च वक्ष्यन्ते । तत्रादौ शौचमाह मनुः । शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः । शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः । इति । तदेतद्द्विविधम् । स्मृत्यर्थसारः । शौचं च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् । इति वचनादन्तःशुद्धिं च कुर्यादिति याज्ञवल्क्यः । प्रातःस्नानं तु स्मृत्यर्थसारे । स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदिता नृणाम् । अस्नातश्च पुमान्नार्हो जपहोमादिकर्मसु । इति । प्रातःस्नानाकरणे प्रत्यवायः स एवाह । प्रत्यहं प्रातरस्नायी द्विजः शूद्रत्वमाप्नुयात् । अत एव सदा स्नायादशक्तस्तु रवेर्दिने । इति । तन्मुख्यं नद्यादाविति विज्ञानेश्वरः । अशक्तादीनां तु स एवाह । वाप्यां कूपे तडागे वा पारक्ये वोष्णवारिणा । प्रातःस्नानं सदा कुर्यादुष्णेनैव सदातुरः । इति । तथा । नित्यमुष्णोदके स्नायात्काम्यनैमित्तिकादृते । इति संग्रहवचनमप्यशक्तपरम् । एतदशक्तौ मन्त्रस्नानादि वा कुर्यादित्याचारदीपे भट्टकमलाकरः । गौणस्नानकृज्जपाद्यर्हो नतु देवार्चनादिषु । तदाहाचार्यः । प्रातःस्नातुमशक्तस्तु

रोगाद्यैर्वा भयाच्च वा। पूर्ववस्त्रं परित्यज्य गौणस्नानेन शुध्यति ॥ स च कर्मस्वनर्हः स्याच्छ्राद्धे देवार्चनादिषु ॥ जपे संध्यां तथा वेदान्सोऽधीयीत यथाविधि । इति। तथा ब्रह्मयज्ञेप्यधिकारोऽस्त्येव । स्नानं वारुणिकं चैव क्वचित्कर्तुं न शक्यते । तत्रादौ ब्रह्मयज्ञार्थं मन्त्रस्नानं विधीयते ॥ इत्याश्वलायनस्मृतावुक्तेः। प्रातःस्नानं संक्षेपेण कर्तव्यं साग्निकैः सदा। अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्मणः । प्रातः संक्षेपतः स्नानं होमाद्यर्थं तदिष्यते । इति कात्यायनोक्तेः । सौभाग्यवतीभिरशिरस्कं स्नानं काम्यनैमित्तिकं विना कर्तव्यमिति स्मृत्यर्थसारः ॥

## अथ संध्याकालनिर्णयः ।

आश्वलायनगृह्ये । अर्धास्तमिते मण्डल आनक्षत्रदर्शनादेवं प्रातः प्राङ्मुखस्तिष्ठन्नामण्डलदर्शनादिति । तत्रापि त्रिविधत्वमुक्तं धर्मसारसुधानिधौ । उत्तमा सूर्यसहिता मध्यमा लुप्तभास्करा । कनिष्ठा तारकोपेता सायंसंध्या त्रिधा मता॥ तथा। उत्तमा तु सनक्षत्रा मध्यमा लुप्ततारका । कनिष्ठा सूर्यसहिता प्रातःसंध्या त्रिधा मता । इति । मुख्य एवायं कालः। गौणकालस्त्वस्तोत्तरं च त्रिदण्डात्मकः। सायंसंध्या त्रिघटिका अस्तादुपरि भास्वतः ॥ इति निर्णयसिन्धौ स्कन्दोक्तेः। एतत्कालातिक्रमे प्रायश्चित्तपूर्वकं संध्यां कुर्यात् । तथाच स्मृत्यर्थसारे । उदयाद्धटिकास्तिस्रः प्रातःसंध्यामुपासितुं । सायमस्तमयादूर्ध्वं मध्याह्ने द्वादशोर्ध्वषट् । संध्याकालस्त्वयं प्रोक्तो निष्कृतिस्तदतिक्रमे॥ विधेया विधिमार्गेण ततः फलवती क्रिया। तामेवाह यमः ॥ संध्याकाले त्वतिक्रान्ते स्नात्वाचम्य यथाविधि। जपेदष्टशतं देवीं ततः संध्यां समाचरेत्। इति। तथाच स्मृत्यर्थसारे भारद्वाजः । प्राणायामत्रयं प्रातर्द्विगुणं संगवे

स्मृतम्। मध्याह्ने त्रिगुणं प्रोक्तमपराह्ने तु षड्गुणम्॥सायाह्ने द्वादशगुणं सूर्यहत्या ततो व्रजेत् । तथाच गौतमस्मृतौ ॥ कालातिक्रमणे चैव त्रिसंध्यास्वपि सर्वदा । चतुर्थार्घ्यं प्रकुर्वीत शिरोव्याहृतिसंपुटम् । यद्वा ॥ चतुर्थार्घ्यं तु सावित्र्या दद्याद्व्याहृतिसंपुटम्।कालातीतविशुद्ध्यर्थं त्रिसंध्यास्वपि नित्यशः।इति। एकाहाद्यतिक्रमे तु पारिजाते जमदग्निः ।एकाहं समतिक्रम्य प्रमादादकृतं यदि । अहोरात्रोषितो भूत्वा गायत्र्याश्चायुतं जपेत् । द्विरात्रे द्विगुणं प्रोक्तं त्रिरात्रे त्रिगुणं स्मृतम् । त्रिरात्रात्परतश्चैव शूद्र एव न संशयः । इति । आलस्यादिना काललोपे तु स एवाह । यः संध्यां कालतः प्राप्तामालस्यादतिवर्तते । सूर्यहत्यामवाप्नोति उलूकत्वमवाप्नुयात् । तथा रोगार्तादौ तु न दोषः । राष्ट्रक्षोभे नृपक्षोभे रोगार्तौ क्षयसूतके । संध्यावन्दनविच्छित्तिर्न दोषाय कथंचन । इति स्मृतेः । तथा । सूतके मृतके चैव संध्याकर्म न संत्यजेत् । मनसोच्चारयेन्मन्त्रान्प्राणायामं विवर्जयेत् । कालातिक्रमणेऽपि दोषाभावनिमित्तानि स एवाह । देवाग्निद्विजवेदाना कार्ये महति संस्थिते । संध्याहीने न दोषोऽस्ति येन तत्पुण्यसाधनम् । इति । स्मृत्यर्थसारे तु संध्यात्रयलोपे त्वष्टसहस्रमितां सावित्रीं जपेदित्युक्तम् । अशक्तौ तु स्मृत्यन्तरे प्रतिसंध्यालोपे गायत्रीत्रिशतं शतं वा जपेदित्युक्तमस्तीत्यलम् ॥ संध्योत्तरं ब्रह्मचारी अग्निकार्यं कुर्यात् । अग्निकार्यं विना भोजने प्रायश्चित्तं ऋग्विधाने। मानस्तोके जपेन्मन्त्रं शतवारं शिवालये । अग्निकार्यं विना भुक्ते न पापं ब्रह्मचारिण इति । स्मृत्यर्थसारे तु । संध्याग्निकार्यलोपे स्नात्वाष्टसहस्रं गायत्रीजपः कर्तव्यः । भिक्षालोपेऽष्टशतमिति । अमत्या परित्यागे तु याज्ञवल्क्यः। भैक्ष्याग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः ।

कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम् । उपस्थानं ततः कुर्यात्संमासिंचन्त्वनेन तु । इति । मन्त्रौ तु मिताक्षरायामुक्तौ । ॐकामावकीर्णोऽस्मिन्कामाय स्वाहा । ॐकाम एव नोस्मि कामकामाय स्वाहा । एताभ्यामाज्याहुतिं हुत्वोपतिष्ठेदनेन । ॐसं मा सिंचन्तु मरुतः समिन्द्रः सं बृहस्पतिः । समायमग्निः सिंचतां यशसा ब्रह्मवर्चसेन । इत्यनेनाग्निमुपतिष्ठेत् । अशक्तौ ऋग्विधाने । तं वो धिया जपेन्मन्त्रं लक्षमेकं शिवालये । ब्रह्मचारी स्वधर्मेषु न्यूनं चेत्पूर्णमेति तत् । इति ॥

## अथ प्रादुष्करणकालः ।

पुरादित्यस्यास्तमयात्पुरादित्यस्य चोदयात् । इति बौधायनोक्तत्वाद्विहरणानन्तरमुदयास्तमयौ यथा भवतस्तथा विहरेत् । तथाधिवृक्षे सूर्ये आविःसूर्ये चेत्यापस्तम्बसूत्रे चोक्तम् । उदयास्तमयात्पूर्वमुद्धरणस्य कालः । एतत्प्रादुष्करणकालातिक्रमे उक्तप्रायश्चित्ताभावात्सर्वप्रायश्चित्तमेव कार्यम् । तद्यथा । होमकाले आसूर्योदयात्पूर्वं प्रादुष्करणनिमित्तप्रायश्चित्तपूर्वकं सायं प्रातर्वा होमं करिष्ये इति संकल्प्य होमद्रव्यसंस्कारात्पूर्वं संस्कृताज्येन ॐभूर्भुवःस्वःस्वाहेति सर्वप्रायश्चित्तं स्रुवेण हुत्वा होमद्रव्यसंस्कारादिप्राप्तकालहोमं कुर्यात् । अरण्यादिसमारोपे त्वनुद्धरणप्रायश्चित्तं नास्तीत्युक्तं प्रायश्चित्तप्रदीपे ॥

## अथ होमकालः ।

दीपे । अग्निहोत्रहोमः सूर्योदयानन्तरमस्तमयानन्तरं च मुख्यः । सायं प्रदोषान्तः प्रातः संगवान्तो मुख्यः काल इति नारायणवृत्तौ च । गौणस्तु । सायंहोमस्य निशा सर्वा गौणकालः । प्रातर्होमस्य सर्वमहर्गौणकालः । प्रात-

राहुतिकालात्सायमाहुतिकालो नातीयादासायं प्रातराहुतिकाल इति बौधायनसूत्रोक्तेः। प्रदोषान्तस्तु रजन्याः सायमाद्यचतुर्थो भागः प्रदोषः । दिवसस्याद्यचतुर्थो भागः संगव इति दीपे उक्तः । आश्वलायनस्मृतौ श्रौतसूत्रे तु । प्रदोषान्तो होमकालः संगवान्तः प्रातः । अत्र प्रदोषान्तो नामाष्टौ नाडिकाः फलितोऽर्थ इति दीपे उक्तम् । तथा। सायमस्तमिते होमकालस्तु नवनाडिकाः इति स्मृत्यर्थसारोक्तेश्च । संगवान्तः प्रातरित्यत्र संगवान्तो दशनाडिका इति नारायणवृत्तिः। अस्तमिते उदिते च विहितो होम एतावति काले क्रियमाणो नातीतो भवतीति वृत्तावुक्तेः पुनः पुनः कालविधिः । तमतिनीय चतुर्गृहीतमाज्यं जुहुयादिति श्रौत्रसूत्रे । उक्तकालातिक्रमे प्रायश्चित्तपूर्वकं गौणकाले होमं कुर्यात् ॥ ॥ तत्प्रयोगश्च । उक्तहोमकालातिक्रमनिमित्तप्रायश्चित्तपूर्वकं सायमौपासनहोमं करिष्य इति संकल्प्य होमद्रव्यसंस्कारात्पूर्वमाज्यं संस्कृत्य स्रुचि चतुर्वारं गृहीत्वा । सायंदोषावस्तर्नमः स्वाहा । अग्नय इदं न मम । ततो हौम्यद्रव्यसंस्कारादिहोमं समापयेत् । एवं प्रातरपि उक्तहोमकालातिक्रमनिमित्ते प्रातरौपासनहोमः पूर्ववच्चतुर्गृहीत्वा प्रातर्दोषावस्तर्नमः स्वाहा ।अग्नय इदं नमम। उभयत्रापि सर्वप्रायश्चित्तं हुत्वा ततः पूर्ववद्धोमं कुर्यात् ॥

## अथ होमाधिकारिणः ।

स्मृत्यर्थसारे। होमे मुख्यो यजमानः पत्नी पुत्रश्च कन्यका । ऋत्विक् शिष्यो गुरुर्भ्राता भागिनेयः सुतापतिः ॥ एतैरपि हुतं यच्च तद्धुतं स्वयमेव तु । इति । तत्रापि यजमानतत्पत्न्यनुज्ञया तत्समक्ष एव ऋत्विगादीनां होमादावधिकारः । स एवाह । असमक्षे तु दंपत्योर्होतव्यं नर्त्विगा-

दिना । द्वयोरप्यसमक्षं चेद्द्रुहुतमनर्थकम् । इति । उन्मादादावनुज्ञादिनैव होमं कुर्यात् । उक्तं च स्मृत्यर्थसारे । उन्मादे प्रसवे चार्तौ कुर्वीतानुज्ञया विना । नोपवासी प्रवासे स्यात्पत्नी धारयते व्रतम् । सर्वथा यजमानो हि त्यजेत्तद्दिङ्मुखः शुचिः । इति । अत्र विधुरस्योपासनमुक्तं प्रयोगपारिजाते मैत्रायणीयश्रुतौ विष्णुस्मृतौ च । अकरणे प्रायश्चित्तमुक्तं प्रयोगपारिजाते ऋग्विधाने । महत्तत्प्रजपेत्सूक्तं पञ्चवारं दिनेदिने । औपासनं विना दोषो न स्पृशेद्विधुरं ततः । इति । अग्नेनय जपेद्वर्गं पञ्चवारं दिनेदिने । विधुरो वा साग्निकस्य यत्फलं तत्फलं लभेत् । इति प्रयोगपारिजातोक्तेश्च ॥

## दिवाकर्माणि रात्रौ ।

अथाहःकर्माण्यकृतानि चेत्तानि रात्र्याः प्रथमयामे यथाक्रमं कर्तव्यानि । दिवोदितानि कर्माणि प्रमादादकृतानि च । यामिन्याः प्रथमे यामे तानि कुर्याद्यथाक्रमम् । इति विष्णुस्मृतावुक्तेः । तथा । दिवोदितानि कर्माणि प्राप्नुवन्त्युत्तराणि च । दिवोदितानि कृत्वैव विदध्यादुत्तराणि च । इत्याचाररत्ने स्मृतावुक्तेश्च । तत्र स्नानविधिना स्नानं ब्रह्मयज्ञं च वर्जयित्वान्यानि कुर्यात् । रात्रौ प्रहरपर्यन्तं दिवाकर्माणि कारयेत् । अवगाहं च सौरं च ब्रह्मयज्ञं च वर्जयेत् । इत्यङ्गिरसोक्तेः । तथा । दिवोदिताः क्रियाः कार्या रात्रावपि यथाक्रमम् । अवगाहं विना सौरं ब्रह्मयज्ञं च तर्पणम् । इति संग्रहोक्तेश्च । अत्र रात्रावपि केचिन्नव्याः पूर्वयामे ब्रह्मयज्ञमिच्छन्ति । जयन्ताश्वलायनशौनकादयस्तूदयोत्तरमस्तमयावध्येव ब्रह्मयज्ञमिच्छन्ति । तदेव युक्तम् । नैत्यकं तर्पणं कुर्यादहन्येव तु बह्वृचः । तर्पणं च तथा सौरं नैव रात्रौ कदाचन । इत्याश्वलायनस्मृतावुक्तेः । भट्टोजीये-

ऽप्येवम्। अस्तमयोत्तरं ब्रह्मयज्ञाकरणप्रायश्चित्तमेव कुर्यात्। तदुक्तं कारिकायाम्। एतेभ्यः पञ्चयज्ञेभ्यो यद्येकोऽपि च हीयते। मनस्वत्याहुतिस्तत्र प्रायश्चित्तं विधीयते। इति। विधुरब्रह्मचार्यादीनामप्ययं प्रायश्चित्तहोमो लौकिके बोध्यः। मध्याह्नसंध्या तु रात्रावपि कर्तव्या। कुर्यादावर्तनीं संध्यां रात्रावपि न दुष्यति। दद्यादर्घ्यं तु गायत्र्या सौरमन्त्रांस्तु वर्जयेत्। इति स्मृतिरत्नावल्यामुक्तेः। एतद्गायत्र्यार्घ्यदानमाश्वलायनातिरिक्तविषयम्। आश्वलायनैस्त्वाकृष्णीययैवार्घ्यत्रयं दत्वा गायत्र्या प्रायश्चित्तार्घ्यदानं कर्तव्यम्। यदि दिवोदितानि कर्माण्यकृतानि यावत्प्रहरं यामिन्यास्तावत्क्रमेणैव सर्वाणि सौरं वर्जयित्वा कुर्यादाकृष्णीययैवार्घ्यं दद्यादिति गृह्यपरिशिष्टोक्तेः। सौर्यस्थाने तु सौर्यवैश्वानरीयकं जपेत्। मध्याह्नसंध्या रात्रौ चेत्प्रमादात्क्रियते यदि। सौरस्थाने जपेत्सूक्तं सौर्यवैश्वानरीयकम्। इति कृष्णंभट्टीये संग्रहोक्तेः। सौर्यवैश्वानरीयकं तु हविष्पान्तमजरं स्वर्विदीत्येकोनविंशदृचं बोध्यम्। रात्रावग्निं प्रज्वाल्य तु सुव्रतः स्नायादिति स्मृत्यर्थसारः। रात्रिस्नाने तु संकल्पाद्यघमर्षणमार्जनजलतर्पणगोपीचन्दनधारणं च वर्जयेदिति स्मृतिमञ्जर्याम्। इति रात्रौ पूर्वयामे दिनकर्मणां कर्तव्यतानिर्णयः॥

## अथ शयनविधिः।

हारीतः। शयनगृहं गत्वा शय्यासमीप उपविश्य जपेत्। (८।२।४) ॐ सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम्। दैवीं नावं स्वरित्रामनागसमस्रवन्तीमारुहेमा

( सुत्रामाणं ८।२।४ ) द्युलोकः नौरूपतया स्तूयते। सुत्रामाणं सुष्ठु त्रायन्तीं पृथिवीं विस्तृतां अनेहसं पापरहितां सुशर्माणं शोभनसुखयुक्तां अदितिमदीनां सुप्रणीतिं सुप्रणयनां सुष्ठुप्रणेत्रीं दैवीं देवसंबन्धिनीं स्वरित्रां शोभनारित्रां जलाहरणशीलदारुयुक्तां अनागसं पापरहितां अस्रवन्तीमगच्छन्तीमविनश्वरीं

स्वस्तये। रात्रीव्यख्यदायतीति षळर्चं सूक्तं जप्त्वा । भो सर्प भद्र भद्रं ते दूरं गच्छ महायशाः । जन्मेजयस्य यज्ञान्ते आस्तीकवचनं स्मर । आस्तीकवचनं स्मृत्वा यः सर्पो न निवर्तते । शतधा भिद्यते मूर्ध्नि शिंशवृक्षफलं यथा । यो जरत्कारुणा जातो जरत्कार्यां महायशाः । तस्य सर्पापि भद्रं ते दूरं गच्छ महायशाः । असितं चार्थसिद्धं च सुनीतिं चापि यः स्मरेत् । दिवा वा यदि वा रात्रौ नास्ति सर्पभयं क्वचित् । जरत्कारोर्जरत्कार्यां समुत्पन्नो महायशाः । आस्तीकः सत्यसंधो मां पन्नगेभ्योऽभिरक्षतु । अगस्तिर्माधवश्चैव मुचुकुन्दो महामुनिः । कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥ इति गोभिलः । आदिचोरकफलस्य ब्रह्मलब्धवरस्य च । तस्य स्मरणमात्रेण चोरा भवन्ति निष्फलाः । कफलस्य च द्वे भार्ये स्तम्भिनी मोहिनी तथा । तयोः स्मरणमात्रेण चोरा भवन्ति निष्फलाः ॥ तथा । धनुःपञ्चशतं सव्ये दक्षिणे तावतः शरान् । बिभ्रत्स कार्तवीर्योऽसौ चोरेभ्यो रक्षतादिह ॥ इति । स्मृत्यर्थसारे स्कान्दे । उपानहौ वेणुदण्डमम्बुपात्रं तथैव च । ताम्बूलादीनि सर्वाणि समीपे स्थापयेद्गृही । यानि कानि च पुष्पाणि यत्किंचिदनुलेपनम् । अलक्ष्मीपरिहारार्थं नित्यं कुर्याद्विचक्षणः । इत्यादि स्त्रिया सह भोग्यवस्तुसेव्यमानस्ताम्बूलं भक्षयित्वा भिन्नशय्यायामेकाकी प्राक्शिरा दक्षिणतःशिरा वा इष्टदेवतां नत्वा स्वपेत् । तथा विष्णुपुराणे । स्वगृहे च शिरः पूर्वे श्वाशुरे दक्षिणे तथा । प्रत्यक्शिरः प्रवासे स्याद्वने कुर्यादुदक्शिरः । इति एवं स्वपित्वा मध्यरात्रान्ते स्त्रियमुपेयात् । पत्नीमृतुमतीं स्निग्धां तृप्तां भोग-

---

नावं नावमिव स्थितां द्यां स्वस्तयेऽविनाशाय देवत्वप्राप्तये आरुहेम वयमारोहेम । रोहतेर्लिङि 'लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः ॥ १ ॥

विवर्जिताम् । उपेयान्मध्यरात्रान्ते जीर्णेऽन्ने तृप्तमानसः । इत्याश्वलायनस्मृतावुक्तेः ॥ तद्यथा । ततो मध्यरात्रान्ते स्वशय्यान्तः स्वस्त्रियं षोडशाहर्तुमध्ये च चतुर्थदिवसादूर्ध्वमेकादशत्रयोदशातिरिक्तेषु मध्ये चतुर्थीषष्ठ्येकादश्यष्टमीचतुर्दशीद्विपर्वश्राद्धाहस्तत्पूर्वव्रतोपवासादिश्राद्धनिमन्त्रणतद्भुक्तदिनशनिभौमवारभरणीकृत्तिकार्द्रामघापूर्वाफाल्गुनीविशाखाज्येष्ठामूलपूर्वाषाढापूर्वाभाद्रपदाजन्मतत्पूर्वापरर्क्षसंक्रान्तिव्यतीपातवैधृतियोगातिरिक्तदिने पुत्रार्थी युग्मदिने कन्यार्थी विषमदिने पृष्ठतः कण्ठलम्बितोपवीतो वाग्यतः सकृदुपगत्य स्त्रियमनिरीक्ष्योत्थाय मूत्रशौचात्त्रिगुणं पूर्वोक्तशौचं कृत्वा पाणिपादौ च प्रक्षाल्य द्विराचम्याग्निं प्रज्वाल्य तत्पुरतः स्नायात्॥ ऋतौ तु मैथुने स्नायाद्गर्भसंभूतिशङ्कया। अनृतौ तदभावाच्च शौचं मूत्रवदाचरेत् । इति स्मृत्यर्थसारोक्तेः । पुनस्तत्रैव । अनृतावनिषिद्धदिने पूर्ववत्कृतोपवीत उपगुप्तः स्नानवर्जं पूर्वोक्तशौचाचमनादि कुर्यात् । दिवामैथुनेऽष्टम्यां चतुर्दश्यां पर्वणि मैथुने च शौचादि विधाय सचैलं स्नात्वा स्मृत्युक्तं प्रायश्चित्तं च कुर्यात्। ततः प्रबोधकालपर्यन्तं पूर्ववच्छय्यायां यथासुखं स्वपेत् । इदं प्रभातोत्थानादिशयनान्तं कर्म प्रतिदिनं कुर्यात् । बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥ इति । नास्तिक्यादिनाऽकृते तु प्रत्यवायः स्मृत्यर्थसारे । नास्तिक्यात्कर्महानौ तु मासेन पतितः स्मृतः । द्वादशाब्दव्रतेनैव तस्य शुद्धिस्तु नान्यथा । तं निरीक्ष्यार्कमीक्षेत स्पर्शे स्नायात्सचैलकम् । तेन सहासनं हास्यं कुर्वन्नब्देन तत्समः । तदन्नभुग्वा सद्यस्तु सहशय्यासनेषु च ॥ इति ॥ तथाच स्मृतिदीपे । द्वादशाहमनग्नित्वं संध्याहीनो दिनत्रयम्।

चतुर्वेदोऽपि विप्रोसौ शूद्र एव न संशयः ॥ इति । तथाच धर्मप्रदीपे । अस्नात्वाशी मलं भुङ्क्ते अजप्त्वा पूयशोणितम् । अहुत्वाशी क्रिमीन्भुङ्क्ते अदत्वा विषमेव च । इति । नारायणवृत्तौ । निरग्निकस्य या भार्या परयोषैव जायते। जारजाः स्युः प्रजास्तस्याः स विप्रो जार उच्यते । तथा च कूर्मपुराणे। इत्येतदखिलं प्रोक्तमहन्यहनि ते मया । ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् । नास्तिक्यादथवालस्याद्ब्राह्मणो न करोति यः । स याति नरकान्घोरान्कालयोनौ प्रजायते । नान्यो विमुक्तये पन्था मुक्त्वाश्रमविधिं स्वकम् । तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥ इति । आह्निकाचरणे फलविशेषमाह गोभिलः । यो विप्रः कृतनित्यस्तु स सर्वान्कृतवान्मखान् । स स्नातः सर्वतीर्थेषु तप्तं तेनाखिलं तपः ॥ इति । तथा । उपसंहारः । अनेन विधिना विद्वान्संध्याहोमादि यश्चरेत् । स सर्वपापैः प्रमुच्येत जीवेच्च शरदां शतम् । सर्वकर्मसु योग्योऽसौ भवतीत्याह शौनकः । इत्यलमत्र ग्रन्थविस्तरभीतेः साष्टाङ्गं प्रणामपूर्वकं विज्ञापनं विज्ञाप्यं च सर्वेषामत्र । संक्षेपाह्निकमेतद्धि मूलं जिज्ञासुभिर्ध्रुवम् । नावमान्यं समूलत्वात्प्रेक्षितव्यं बहुश्रुतैः ॥ इति विज्ञप्तिः । स्मृत्यर्थसारं संवीक्ष्य शौनकं स्मृतिसंग्रहम् । परिशिष्टं पारिजातं जयन्ताद्याः स्मृतीस्तथा । आचारदीपं रत्नं च हेमाद्रिं माधवादिकान् । विचार्यावश्यकं नित्यं बह्वृचां तु मयोदितम् । कालोपनामरामेशभट्टसूनोः सुधीमतः । महादेवद्विजाग्र्यस्य सूनुना प्रभविष्णुना । दिवाकरेण रचिता संक्षेपाह्निकचन्द्रिका । गिरिजाजानितुष्ट्यर्थं मुदं वितरतात्सताम् ॥ इति कालोपनामकभट्टरामेश्वरात्मजभट्टमहादेवद्विजवर्यसूनुबालंभट्टानुजभट्टदिवाकरकृतावाह्निकम्॥

आचाररत्ने । अत्र येषां सूत्रे तर्पणमात्रमुक्तं तेषां सूत्रे

तर्पणमात्रस्योत्पन्नत्वात्तन्मात्रमन्त्राः। तत्र स्मृत्याञ्जलिविधानेऽपि न मन्त्रावृत्तिः। अञ्जल्यङ्गत्वाभावात्। येषां सूत्रे द्विस्तर्पयेदित्युक्तं तत्रोत्पत्तिवाक्यगतायाः संख्यायास्तिस्र आहुतीर्जुहोतीतिवत्कर्मभेदकत्वात्तर्पणवदेतदावृत्तौ तदङ्गमन्त्रस्याप्यावृत्तिः॥ येषां सूत्रे तु किमपि नोक्तं तेषां स्मृत्युक्तो विधिः। स्मृतौ च द्वेधा द्विस्तर्पयेदित्युक्तम्। अञ्जलिविधानमपि दृष्टं तत्रापि विकल्पः। बह्वृचां तु न मन्त्रावृत्तिः। एकमन्त्राणि कर्माणि इति नारायणवृत्तौ कपर्दिसूत्रन्यायोक्तेः। मन्त्रस्तु। अस्मत्पितरं शर्माणं गोत्रं वसुरूपं स्वधानमस्तर्पयामीत्येतावान्। संबन्धनामगोत्रेण स्वधान्तेऽपि नमोन्ततः। तर्पयामिपदेनैव तर्पयेत्पितृपूर्वकम्। इतिकरणत्वनिर्देशात्। अत्र केचिदूहप्रवरनामधेयेष्वमन्त्रत्वमिति नाम्नां मन्त्रत्वाभाव इत्याहुः। तन्न। अनाम्नातेष्वमन्त्रत्वमाम्नातेषु विभागः स्यादित्यधिकरणे हीदं प्रतिपादितम्। तत्र च वैदिकमन्त्रान्तःपातिनामेषाममन्त्रत्वम्। अतएव तत्र प्रसिक्तहेतुता नोक्ता। मन्त्रानध्यापयामासेत्यादिसूत्रोक्तहेतुत्वसंभवात्। वैदिकप्रसिद्धसंभवाच्च। तत्र तेषां तृतीयादिनिर्देशाभावान्निर्दिष्टं अन्तःपातिनाममन्त्रत्वमुक्तम्॥ इह तृतीयानिर्देशान्मन्त्रत्वे को विरोधः। किंच। केवलस्य स्वधानम इत्येतस्य स्वाहाकारस्थानित्वेन देवतासमर्पकत्वाभावान्न केवलेन तर्पणम्। नच संबन्धमनुकीर्त्यैवेत्यादिवसिष्ठस्मृतौ नामकीर्तनमात्राम्नानान्न तत्सहितस्य मन्त्रत्वं। तत्र कीर्तनक्रमोक्तेः। अत एव यमेन संबन्धनामगोत्रेणेति तृतीयाश्रुतिनिर्देशः कृतः। आश्वलायनाचार्यैस्तु पिण्डदानादौ नाम्नः स्पष्टमेव मन्त्रत्वमुक्तम्। तथा। पित्रादिभ्यश्च एतत्ते विष्णो येचेहेति मन्त्र इति कारिकोक्तेश्च। तस्मादस्मदित्यादितर्पयामीत्येतावानेव मन्त्रो युक्त इत्यलम्॥

## [1]अथ रुद्राध्यायः ।

हरिः ॐ ॥ इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शꣳसिषद्विश्वेदेवाः सूक्तवाचः पृथिवि मातर्मा मा हिꣳसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥ नमो रुद्रेभ्यः । ॐशान्तिः शान्तिःशान्तिः ॥ ॐ नमोभगवते रुद्राय ।

**ॐ नमस्ते रुद्र मन्यव उतो त इषवे नमः । नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः ॥ १ ॥ या त इषुः शिवतमा शिवं बभूव ते धनुः । शिवा शरव्या या तव तया नो रुद्र**

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥ इष्टकाचितयः सर्वाश्चतुर्थे हि समापिताः । रुद्राध्याये पञ्चमे तु चित्याग्नौ होम उच्यते॥२॥ कर्मप्रकरणे पाठात्कार्माङ्गत्वमपीष्यते । ज्ञानहेतुत्वमप्यस्य तथोपनिषदीरितम् ॥ ३ ॥ किं जपेनामृतत्वं नो ब्रूहीत्युक्तो मुनिर्जगौ । शतरुद्रीयकेणेति जाबाला आमनन्ति तत् ॥४॥ स्मृत्यागमपुराणेषु रुद्राध्यायप्रशंसनम् । बह्वस्ति तद्विस्तरेण रुद्रकल्पेऽभिधास्यते ॥ ५ ॥ इह कर्माङ्गता याद्दग्वर्णिता ब्राह्मणेन ताम् । बोद्धुं शब्दार्थमात्रस्य विवृत्तिः क्रियते स्फुटा ॥६॥ कल्पः । शतरुद्रीयं जुहोति जर्तिलयवाग्वा वा गवीधुकयवाग्वा वा जर्तिलैर्गवीधुकसक्तुभिर्वा कुशायवसर्पिषाजाक्षीरेण मृगीक्षीरेण वार्कपर्णेनोदङ् तिष्ठन्नुत्तरस्य पक्षस उत्तरापरस्यां स्रक्त्यां विकर्ण्यां स्वयमातृण्णायामनुपरिचारं वा । नमस्ते रुद्र मन्यव इत्येताननुवाकांस्त्रेधं विभज्यापि वा प्रथमादुपक्रम्य नमस्तक्षभ्य इति जानुदघ्ने धारयमाणो रथकारेभ्यश्च व इत्युपक्रम्य नमः स्वायुधाय चेति नाभिदघ्ने शेषेण प्रागवतानेभ्य आस्यदघ्ने हुत्वा सहस्राणि सहस्रश इति दशावतानान्हुत्वान्वारोहाञ्जुहोति नमो रुद्रेभ्यो ये पृथिव्यामिति जानुदघ्ने धारयमाणो नमो रुद्रेभ्यो येऽन्तरिक्ष इति नाभिदघ्ने नमो रुद्रेभ्यो ये दिवीत्यास्यदघ्ने हुत्वैनानेव यजमानं वाचयित्वा एतानेव विपरीतान्प्रत्यवरोहान्हुत्वा संचरे पशूनामर्कपर्णमुदस्यति यं द्विष्यात्तस्य संचरे इति ( नमस्ते ) हे रुद्र, ते त्वदीयो यो मन्युः कोपस्तस्मै नमोऽस्तु । स मन्युरस्मद्वैरिष्वेव प्रसरतु न त्वस्मासु । उतो अपि च ते तव इषवे नमः त्वदीयाय बाणाय नमोऽस्तु । तथा ते धन्वने त्वदीयाय धनुषे नमोऽस्तु । उत अपि च ते बाहुभ्यां त्वदीयाभ्यां धनुर्बाणोपेताभ्यां हस्ताभ्यां नमोऽस्तु । एतत्सर्वं वैरिष्वेव प्रवर्ततां न तु मयीत्यभिप्रायः ॥१॥ हे रुद्र, ते त्वदीया येयमिषुः शिवतमा शान्ततमा बभूव । तथा ते त्वदीयं यद्धनुः शिवं शान्तं बभूव । तथा या च तव शरव्या तवेषुधिः तया

---

१ अस्यां चन्द्रिकायां तत्रतत्र नाम्नैव निर्दिष्टानां रुद्रादीनां इतआरभ्य सभाष्याणां यथावकाशं संग्रहः क्रियते ।

मृडय ॥ २ ॥ या ते रुद्र शिवा तनूरघोरा पापकाशिनी । तया नस्तनुवा शन्तमया गिरिशन्ताऽभिचाकशीहि ॥ ३ ॥ यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ ४ ॥ शिवेन वचसा त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जगदयक्ष्मंसुमना असत् ॥ ५ ॥ अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ॥ ६ ॥ असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चेमांरुद्रा अभितो दिक्षु

---

शान्तयेष्वा तेन च शान्तेन धनुषा तया च शान्तया शरव्यया नोऽस्मान्मृडय सुखय । भक्तेषु प्रवृत्त्यभावात्तेषां शान्तत्वम् ॥२॥ द्वे हि रुद्रस्य तनू । तथा चोपरिष्टादाम्नायते–'रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या' इति । हिंसिका घोरा । अनुग्राहिका शिवा । हे रुद्र, ते तव या तनूः शिवा अस्मास्वनुग्रहकारिणी अतएव अघोरा हिंसिका न भवति । अघोरत्वमेव स्पष्टीक्रियते । अपापकाशिनी पापं हिंसारूपमनिष्टं प्रकाशयतीति पापकाशिनी तादृशी न भवतीत्यपापकाशिनी । गिरौ कैलासे स्थित्वा नित्यं प्राणिभ्यो यः शं सुखं तनोति स गिरिशन्तः तस्य संबोधनं हे गिरिशन्त, शन्तमयातिशयेन सुखकारिण्या तया तनुवा अभिचाकशीहि मामभिलक्ष्य प्रकाशं कुरु । तादृशीं त्वदीयां तनुं प्रकाश्य मां सुखिनं कुर्वित्यर्थः ॥ ३ ॥ हे गिरिशन्त, यामिषुं बाणं अस्तवे वैरिषु प्रक्षेप्तुं हस्ते बिभर्षि । गिरिं कैलासाख्यं त्रायते पालयतीति गिरित्रः तत्संबोधनं हे गिरित्र, तथाविध हे रुद्र, तां हस्ते धृतां इषुं शिवां अस्मासु शान्तां कुरु । पुरुषं अस्मदीयं मनुष्यम् जगत् मनुष्यव्यतिरिक्तमपि जङ्गमं गवादिकं मा हिंसीः ॥४॥ गिरौ कैलासे शेते तिष्ठतीति गिरिशः हे गिरिश, त्वामच्छा प्राप्तुं शिवेन मङ्गलेन स्तुतिरूपेण वचसा वदामसि वयं प्रार्थयामहे । यथा येन प्रकारेण नोऽस्मदीयं सर्वमिज्जगत् । इच्छब्दोऽवधारणे । यथा सर्वमपि मनुष्यपश्वादिकं जङ्गमजातं अयक्ष्मं रोगरहितं सुमना असत् सौमनस्योपेतं भवति तथा कुरु ॥ ५ ॥ यो रुद्रोऽधिवक्ता अधिकोऽयमित्येवं सर्वेषामग्रे मां प्रतिवक्तुं क्षमः तेनोक्ते सति मम सर्वाधिक्यं तदानीमेवास्तीति । अतस्तादृशो रुद्रोऽध्यवोचत् मां सर्वाधिकं वदतु । कीदृशोऽधिवक्ता । प्रथमः देवानां मध्ये मुख्यः । दैव्यः सर्वान्देवानर्हति । स्वयं देवान्पालयितुं क्षम इत्यर्थः । भिषक् एतस्य ध्यानमात्रेण सर्वरोगोपशमनादयं चिकित्सकः । किं कुर्वन् । अहींश्च सर्वान् सर्पव्याघ्रादीन्सर्वानपि । सर्वाश्च यातुधान्यः सर्वा अपि राक्षसजातीः जम्भयन्विनाशयन् ॥ ६ ॥ यो रुद्रः असौ मण्डलस्थादित्यरूपः सच ताम्रः उदयकालेऽत्यन्तं रक्तः । अरुणः उदयादूर्ध्वमीषद्रक्तः । उत अपि च बभ्रुः ततोऽप्यूर्ध्वं पिङ्गलः । एवमन्येऽपि वर्णास्तत्तत्कालगता उन्नेयाः । सुमङ्गलः नानावर्णः सन् तदा तदान्धकारादिनिवर्तकत्वादत्य-

श्रिताः सहस्रशोवैषाᳪ हेडं ईमहे ॥ ७ ॥ असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृशन्नदृशन्नुदहार्यः । उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः ॥ ८ ॥ नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः ॥ ९ ॥ प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् । याश्च ते हस्त इषवः परा ता भगवो वप ॥ १० ॥ अवतत्य धनुस्त्वᳪ सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नः सुमना भव ॥ ११ ॥ विज्यं धनुः कपर्दिनो

---

न्तमङ्गलः । ये चान्ये रश्मिरूपा रुद्राः इमामभितोऽस्या भूमेः परितः दिक्षु श्रिताः प्राच्यादिदिक्ष्ववस्थिताः । ते च सहस्रशः अनेकसहस्रसंख्याकाः एषामादित्यतद्रश्मिरूपाणां सर्वेषां रुद्राणां हेडः क्रोधसदृशं तीक्ष्णत्वं अवेमहे भक्तिनमस्कारादिना निवारयामः ॥ ७ ॥ यो रुद्रो नीलग्रीवः कालकूटधारणेन नीलवर्णा ग्रीवा यस्यासौ नीलग्रीवः । स एव विलोहितः विशेषेण लोहितवर्णः सन् असौ मण्डलवर्ती भूत्वा अवसर्पति उदयास्तमयौ संपादयितुं प्रवर्तते तस्य च रुद्रस्य मण्डलवर्तिस्वरूपधारणे प्रयोजनमुच्यते । उत अपि च गोपाः वेदशास्त्रसंस्काररहिताः गोपाला अप्येनं मण्डलवर्तिनमादित्यरूपिणं रुद्रं अदृशन् पश्यन्ति । उदहार्यः उदकानां हारिण्यो योषितोऽपि एनं अदृशन् पश्यन्ति । उत अपि चैनं मण्डलवर्तिनमादित्यरूपिणं रुद्रं विश्वाभूतानि गोमहिष्यादयः सर्वेऽपि प्राणिनः पश्यन्ति । सर्वेषां दर्शनार्थमेव हि रुद्रस्यादित्यमूर्तिधारणम् । कैलासादिवर्ति रुद्रस्य रूपं तु वेदशास्त्राभिज्ञैरेव दृश्यते नान्यैः । तादृशो रुद्रो दृष्टः सन् नोऽस्मान् मृडयाति । सुखिनः करोत्वित्यर्थः ॥ ८ ॥ यः पूर्वोक्तरीत्या नीलग्रीवः स एव इन्द्रमूर्तिधारणेन सहस्राक्षः, स पुनः पर्जन्यमूर्तिधारणेन मीढ्वान् सेचकः । वृष्टिकर्तेत्यर्थः । यादृशाय रुद्राय नमोऽस्तु । अथो अपि च ये केचिदस्य रुद्रस्य सत्वानो भृत्यरूपाः प्राणिनः तेभ्यः सर्वेभ्योऽहं नमोऽकरं नमस्करोमि ॥ ९ ॥ हे भगवः भगवन् पूजावन् महदैश्वर्यसंपन्न रुद्र, त्वं धन्वनः त्वदीयस्य धनुषः उभयोरार्त्नियोः कोट्योरवस्थितां ज्यां मौर्वीं प्रमुञ्च अवरोपय । याश्च ते हस्ते इषवो वर्तन्ते ता अपि परावप परित्यज ॥ १० ॥ इन्द्ररूपेण सहस्रसंख्याकान्यक्षीणि यस्यासौ स तथा । शतसंख्याका इषुधयो बाणस्थापनकोशा यस्यासौ शतेषुधिः तादृश हे रुद्र, धनुरवतत्य अवरोपितज्याकं कृत्वा शल्यानां बाणानां मुखा मुखानि इषुगतलोहानामग्राणि निशीर्य इषुधिषु न्यग्भावेन शीर्णानि कृत्वा नोऽस्मान्प्रति सुमना अनुग्रहयुक्तः सन् शिवः शान्तो भव ॥११॥ कपर्दो जटाजूटः सोऽस्यास्तीति कपर्दी रुद्रस्तस्य धनुर्विज्यं विगतज्याकमस्तु । उत अपि च बाणा अस्मिंस्तिष्ठन्तीति बाणवानिषुधिः स च विशल्योऽस्तु । इषुगतानां शल्यानां तदुदरे गोपितत्वेन बहिराविर्भूतशल्यरहितोऽस्तु । अस्य

विशल्यो बाणवाँ२उत । अनेशन्नस्येषव आभुरस्य निषङ्गथिः ॥ १२ ॥ या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयास्मान्विश्वतस्त्वमयक्ष्मया परिब्भुज ॥ १३ ॥ नमस्ते अस्त्वायुधायानातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥ १४ ॥ परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्निधेहि तम् ॥ १५ ॥ १ ॥ नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमः सस्पिञ्जराय त्विषीमते

---

रुद्रस्य इषवो बाणा इषुधौ प्रक्षिप्ताः अनेशन् वेद्धुमसमर्था भवन्तु । अस्य रुद्रस्य निषङ्गथिः बाणाधारः आभुरस्तु ईषत्प्रभुरस्तु । कुड्यनिखातशङ्कावासंजितत्वेन बाणान्धारयितुमेव प्रभवतु न तु बाणाकर्षणयोग्य इत्यर्थः । अथवा निषङ्गथिः खड्गकोशः सोऽपि पूर्ववत्कचिदारोपितत्वेन खड्गं धारयितुमेव प्रभवतु नतु खड्गाकर्षणसमर्थः ॥ १२ ॥ हे मीढुष्टम अतिशयेन कामाभिवर्षक, या ते हेतिः तव संबन्धि खड्गादिरूपं यदायुधं, यदपि ते तव हस्ते धनुर्बभूव । अयक्ष्मया अनुपद्रवकारिण्या तया हेत्या तथाविधेन धनुषा च त्वमस्मान् विश्वतः परिब्भुज सर्वतः परिपालय ॥ १३ ॥ हे रुद्र, ते त्वदीयायायुधाय बाणरूपाय नमोऽस्तु । कीदृशायायुधाय । अनातताय धनुषि संधानाभावादप्रसारिताय । धृष्णवे स्वरूपेण प्रहर्तुं प्रगल्भाय । किंच ते त्वदीयाभ्यां उभाभ्यां बाहुभ्यां नमोऽस्तु । तथा तव त्वदीयाय धन्वने नमोऽस्तु ॥ १४ ॥ हे रुद्र, ते त्वदीयस्य धन्वनः हेतिर्बाणशल्यरूपा अस्मान् विश्वतः सर्वतः परिवृणक्तु वर्जितान्करोतु । अस्मान्मा बाधतामित्यर्थः । अथो अपि च यस्तवेषुधिः तमस्मदारेऽस्मत्तो दूरे निधेहि स्थापय ॥ १५ ॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके श्रीरुद्रभाष्ये प्रथमोऽनुवाकः ॥ १ ॥

प्रथमानुवाके भगवतो रुद्रस्य या प्रधानभूता तनुः इषुधनुर्हस्ता तां बहुधा प्रसाद्य तस्य ये लीलाविग्रहा जगन्निर्वाहहेतवस्तेऽष्टभिरनुवाकैः प्रसाद्यन्ते । तेष्वनुवाकेषु सर्वाण्यपि यजूंषि । तान्यपि द्विविधानि । उभयतोनमस्काराणि अन्यतरतोनमस्काराणि च । तत्र त्रिष्वनुवाकेषु नमस्कारादिकं नमस्कारान्तं एकैकं यजुः । इतरेषु पञ्चस्वनुवाकेषु नमस्कारादिकमेवैकैकं यजुः । तत्र द्वितीयेऽनुवाके त्रयोदश यजूंषि ॥

हिरण्यनिर्मितान्याभरणानि बाह्वोर्यस्यासौ हिरण्यबाहुः स च संग्रामेषु सेनां नयतीति सेनानीस्तादृशमूर्तिधरो यो रुद्रस्तस्मै नमोऽस्तु । यश्च दिशां पालको रुद्रस्तस्मै नमोऽस्तु १ हरितवर्णाः केशाः पर्णरूपा येषां वृक्षाणां ते हरिकेशाः तादृशेभ्यो वृक्षेभ्यः वृक्षाकाररुद्रमूर्तिभ्यो नमोऽस्तु । यो रुद्रः पशूनां पालकः

पथीनां पतये नमो नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाततविने क्षेत्राणां पतये नमो नमः सूतायाहन्त्याय वनानां पतये नमो नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमो नमः कृत्स्नवीताय धावते सत्वनां पतये नमः ॥ २ ॥

नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो

---

तस्मै नमोऽस्तु २ सस्पशब्दो बालतृणवाची । पिञ्जरशब्दः पीतरक्तसंकीर्णवर्णवाची । बालतृणवत्पिञ्जरः सस्पिञ्जरः । पृषोदरादित्वात्साधुः । स च त्विषीमान्दीप्तिमान् तथाविधरुद्रमूर्तये नमोऽस्तु । पथीनां शास्त्रोक्तदक्षिणोत्तरतृतीयमार्गाणां पतिः पालको यो रुद्रः तस्मै रुद्राय नमोऽस्तु ३ बिभर्ति रुद्रमिति बभ्रुर्वृषभः स एव बभ्लुः रलयोर्भेदाभावः तस्मिन् शेते तिष्ठतीति बभ्लुशः स च विद्वेषिणां विशेषेण विध्यतीति विव्याधी तथाविधाय विव्याधिने नमोऽस्तु । यश्चान्नानां पालको रुद्रस्तस्मै नमोऽस्तु ४ हरिकेशाय नीलमूर्धजाय पलितरहिताय । उपवीतिने मङ्गलार्थं यज्ञोपवीतधारिणे रुद्राय नमोऽस्तु । पुष्टानां परिपूर्णगुणानां पुरुषाणां पतये स्वामिने नमोऽस्तु ५ भवः संसारस्तस्य हेतिरायुधं । संसारच्छेत्त्रे रुद्राय नमोऽस्तु । जगतां पालको यो रुद्रस्तस्मै नमोऽस्तु ६ आततं तेन विस्तारितेन धनुषाऽवति रक्षतीत्याततावी तस्मै रुद्राय नमोऽस्तु । क्षेत्राणां पालको यो रुद्रस्तस्मै नमोऽस्तु ७ सूतः सारथिस्तस्मै । अहन्त्यः वैरिभिर्हन्तुमशक्यस्तादृशाय रुद्राय नमोऽस्तु । यो वनानां पालकस्तस्मै रुद्राय नमोऽस्तु ८ रोहितो लोहितवर्णः स्थपतिः प्रभुस्तस्मै रुद्राय नमोऽस्तु । वृक्षाणां पालकः तस्मै रुद्राय नमोऽस्तु ९ राजसभायां मन्त्रालोचनकुशलो मन्त्री स च वणिजां स्वामित्वेन वाणिजः तस्मै रुद्राय नमोऽस्तु । वनगता गुल्मादयः कक्षाः तेषां पालकाय १० भुवं तनोतीति भुवन्तिस्तस्मै रुद्राय नमोऽस्तु । वरिवो धनं तस्य कर्ता वरिवस्कृत् स एव वारिवस्कृतस्तस्मै रुद्राय नमोऽस्तु । ओषधीनां ग्राम्यारण्यानां पालकाय तस्मै रुद्राय नमोऽस्तु ११ युद्धकाले उच्छ्रितो घोषो ध्वनिर्यस्यासावुच्चैर्घोषस्तस्मै । आक्रन्दयन् वैरिणां रोदयिता तस्मै रुद्राय नमोऽस्तु । पत्तीनां पादचारिणो योधाः पत्तिशब्दवाच्यास्तेषां पालकाय नमोऽस्तु १२ कृत्स्नं सैन्यं वीतं वेष्टितं येनासौ कृत्स्नवीतस्तस्मै रुद्राय नमोऽस्तु । धावते पलायमानानां परकीयसैन्यानां पृष्ठतो गच्छन्धावन् तस्मै रुद्राय नमोऽस्तु । सत्वानः सात्विकाः शरणागतास्तेषां पालकाय नमोऽस्तु ॥ १३ ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥

द्वितीयानुवाके उभयतोनमस्काराणि कानिचिद्यजूंष्युक्तानि । अथापराणि तथा-

नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो नमो निषङ्गिण ऽइषुधिमते तस्कराणां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निचेरवे परिचरायारण्यानां पतये नमो नमः सृकाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तंचरद्भ्यः प्रकृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नम इषुमद्भ्यो धन्वा-

---

विधान्येव तृतीये द्वादश यजूंष्युच्यन्ते ॥ सहमानो विरोधिनोऽभिभवन् तस्मै । नितरां विरोधिनो विध्यतीति निव्याधी तादृशाय । आसमन्ताद्विध्यन्तीत्याव्याधिन्यः शूरसेनास्तासां पालकाय नमः १ ककुभाय ककुभसदृशाय । प्रधानभूतायेत्यर्थः । निषङ्गी खड्गहस्तस्तस्मै नमः । स्तेना गुप्तचोरास्तेषां पालकाय नमः । रुद्रो हि लीलया नट इव तत्तद्वेषं धत्ते । यद्वा । तस्य सर्वजगदात्मकत्वाद्ये यत्र यथा वर्तन्ते तत्र तथारूपेण रुद्रो वर्तत इति रुद्रस्य सार्वात्म्यमनुसंधातुं मन्त्रैरेवमुच्यते। स्तेनादिशरीरेषु रुद्रो द्वेधा वर्तते जीवरूपेणेश्वररूपेण च । तत्र च यज्जीवरूपं तत् स्तेनादिशब्दानां वाच्योऽर्थः । स एव शास्त्रेषु निन्द्यः । यत्तु ईश्वररूपं तत्स्तेनादिशब्दैरुपलक्ष्यते । तदनुसंधानं तु पापक्षयहेतुत्वेन परमपुरुषार्थ इति लक्ष्यार्थविवक्षया मन्त्रेषु लौकिकाः शब्दाः प्रयुज्यन्त इति द्रष्टव्यम् । उपलक्षकवाच्यार्थद्वारेण लक्ष्योऽर्थो मुग्धैरपि सहसा सम्यग्बोद्धुं शक्यते । यथा शाखाग्रे चन्द्र इत्यत्र तस्माल्लक्ष्यार्थस्यैव विवक्षायामपि सुखावबोधद्वारत्वेन मुख्यार्थवाचकाः शब्दाः प्रयोक्तव्याः२ धनुषि संधातुं हस्ते धृतो बाणो निषङ्गः, पृष्ठे बद्धो बाणाधार इषुधिः, तदुभययुक्ताय नमः । तस्कराः प्रकटचोरास्तेषां पालकाय नमः ३ स्वामिनः आप्तो भूत्वा तदीयक्रयविक्रयादिव्यवहारेषु यत्र क्वापि यत्किंचित्द्रव्यापहारो वञ्चनं, सर्वेष्वपि व्यवहारेषु अपह्नवः परिवञ्चनं तदुभयरूपाय नमः । गुप्तचोरा द्विविधाः । दूरादागत्य रात्रावज्ञाताः सन्तः कपाटाद्युद्घाटनेन ये द्रव्यापहर्तारस्ते स्तेनाः, स्वकीया एव भूत्वा रात्रावह्नि वा अन्यैरज्ञाताः सन्तोऽपहर्तारो ये ते स्तायवः, तेषां स्तायूनां पालकाय नमः ४ स्वामिगृह एव कदापहरिष्यामीत्यनया बुद्ध्या सावधानो निरन्तरं चरणशीलो निचेरुः । परित आपणवीथिप्रवाटिकादावपहारबुद्ध्या चरणशीलः परिचरः । तदुभयरूपाय नमः । मार्गे गन्तॄन्द्रव्यापहारेण बाधितुं निरन्तरमरण्ये वर्तमानाश्चोरा आरण्यास्तेषां पालकाय नमोऽस्तु ५ सृकशब्दो वज्रवाची तेन स्वशरीरमवन्ति रक्षन्तीति सृकाविनः प्राणिनो हन्तुमिच्छन्तश्चोरा जिघांसन्तस्तदुभयरूपाय नमः । कृषिकाः सन्तः स्वामिधान्यानामपहर्तारो मुष्णन्तस्तेषां पालकाय नमः ६ असिमन्तः खड्गधारिणश्चोराः । ये रात्रौ चरन्तो वीथ्यां निर्गतान्प्राणिनो बाधमानाश्चोराः नक्तं चरन्तस्तदुभयरूपाय नमः । हत्वैवापहरन्तः प्रकृन्तास्तेषां पालकाय नमः ७ शिरोवेष्टनवानुष्णीषी यो ग्रामजनवदुष्णीषेण शिरो वेष्टयित्वा तन्मध्ये प्रविश्य वर्तमानश्चोर उष्णीषी गिरौ काष्ठादिसंपादकानां वस्त्रादिकमपहर्तुं

विभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमो नम आसीनेभ्यः शयानेभ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः ॥ ३ ॥ नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृंहतीभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमो नमो रथिभ्योऽरथेभ्यश्च वो नमो नमो रथेभ्यो रथपतिभ्यश्च वो नमो नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो

---

चरतीति गिरिचरस्तदुभयरूपाय नमः । कुं भूमिं गृहक्षेत्रादिकं लुञ्चन्त्यपहरन्तीति कुलुञ्चास्तेषां पालकाय नमः ८ भीषयितुं हस्ते बाणधारिण इषुमन्तः, तथा भीषयितुं हस्ते धनुर्धारिणो धन्वाविनस्तदुभयरूपाः हे रुद्राः; वो युष्मभ्यं नम इति । विशेषणद्वयेन मन्त्रवाक्यं भेत्तुं द्विर्नमस्कारः ९ धनुषि ज्यामारोपयन्तः आतन्वानास्तद्रूपेभ्यो वो युष्मभ्यं नमः । धनुषि बाणं संदधानाः प्रतिदधानास्तद्रूपेभ्यो वो युष्मभ्यं नमः १० ज्याविकर्षणं कुर्वन्तः आयच्छन्तः । बाणं मुञ्चन्तो विसृजन्तः । शेषं सर्वत्र पूर्ववद्व्याख्येयम् ११ मुक्तस्य बाणस्य लक्ष्यपर्यन्तं गमनमसनं तस्य कर्तारोऽस्यन्तः । लक्ष्यसमीपगतस्य बाणस्य लक्ष्ये प्रवेशो वेधस्तस्य कर्तारो विध्यन्तः १२ इति तृतीयोऽनुवाकः ॥ ३ ॥

तृतीयानुवाके यान्युभयतोनमस्काराणि यजूंष्युक्तानि तेभ्योऽन्यानि कानिचिदुभयतोनमस्काराणि यजूंषि चतुर्थेऽभिधीयन्ते । तत्र आसमन्तात् वेद्धुं शक्ताः स्त्रीमूर्तय आव्याधिन्यः १ विशेषेण वेद्धुं शक्ताः विविध्यन्त्यस्ताभ्यो नमः । उत्कृष्टगणरूपाः सप्तमातृकाद्याः स्त्रिय उगणाः । हिंसितुं समर्था दुर्गाद्या उग्रदेवतास्तृंहत्यस्ताभ्यो नमः २ गर्धनशीला गृत्साः विषयलम्पटा इत्यर्थः । तेषां पालका गृत्सपतयस्तेभ्यो नमः ३ नानाजातीनां संघा व्रातास्तेषां पालका व्रातपतयस्तेभ्यो नमः ४ देवस्यानुचरा भूतविशेषा गणास्तेषां पालका गणपतयस्तेभ्यो नमः ५ विरूपा विकृतरूपा नग्नमुण्डादयः । विश्वरूपाः तुरङ्गगजवक्त्रादिनानाविधरूप-

नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नमो मृगयुभ्यः श्वनिभ्यश्च वो नमो नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ॥ ४ ॥ नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च संवृध्वने च नमो अग्रियाय च प्रथमाय च नम आशवे चाजिराय च नमः शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नमः स्रोतस्याय च द्वीप्याय च ॥ ५ ॥ नमो ज्येष्ठाय च

---

धारिणो भृत्यास्तेभ्यो नमः ६ अणिमाद्यैश्वर्योपेता महान्तः। तद्रहिताः क्षुल्लकाः ७ रथमारूढा रथिनस्तद्रहिता अरथास्तेभ्यो नमः ८ पक्षिपुञ्जानां घातकाः पुञ्जिष्टाः। मत्स्यघातिनो निषादास्तेभ्यो नमः १४ शुनां गलेषु बद्धानां पाशानां धारकाः श्वनयः १६ इति चतुर्थोऽनुवाकः ॥ ४ ॥

चतुर्थेऽनुवाके उभयतोनमस्काराणि यजूंषि समापितानि। अथ पञ्चममारभ्य नवमान्तेष्वनुवाकेषु नमस्कारोपक्रमाण्येव यजूंष्याम्नायन्ते। भवन्ति प्राणिनोऽस्मादिति भवः। रुत् रोदनहेतुभूतं दुःखं द्रावयतीति रुद्रः १ शृणाति हिनस्ति पापमिति शर्वः। पशुसमानानज्ञानिनः पुरुषान्पालयतीति पशुपतिः २ कालकूटधारणेन नीलवर्णो ग्रीवैकदेशो यस्यासौ नीलग्रीवः, शितिः श्वेतवर्णोऽवशिष्टः कण्ठप्रदेशो यस्यासौ शितिकण्ठः ३ कपर्दो जटाजूटोऽस्यास्तीति कपर्दी। मुण्डितकेशो व्युप्तकेशः। पाशुपतादिवेषेण कपर्दित्वम्। यत्यादिवेषेण मुण्डितकेशत्वम् ४ इन्द्रवेषेण सहस्राक्षत्वम्। सहस्रभुजावतारित्वेन शतसंख्याकैर्धनुर्भिरुपेतत्वम् ५ गिरौ कैलासे शेते तिष्ठतीति गिरिशः। विष्णुमूर्तिधारी शिपिविष्टः। 'विष्णुः शिपिविष्टः' इति श्रुतेः ६ मेघरूपेणात्यन्तं वर्षयिता मीढुष्टमः। बाणधारक इषुमान् ७ शरीरे अल्पप्रमाणत्वं ह्रस्वत्वं अङ्गुल्याद्यवयवसंकोचाद्वामनत्वम् ८ आकारेण प्रौढो बृहन्। गुणैः समृद्धो वर्षीयान् ९ वयसाधिको वृद्धः। सम्यक् श्रुतिभिर्वर्धितः संवृध्वा १० जगदुत्पत्तेः पूर्वमवस्थितोऽग्रियः। सभायां मुख्यः प्रथमः ११ आशुर्व्यापी। अजिरो गमनकुशलः १२ शीघ्रियः शीघ्रगामी । शीभशब्द उदकप्रवाहवाची तत्रावस्थितः शीभ्यः १३ ऊर्मैस्तरङ्गैरन्वित ऊर्म्यः । अवस्वने ध्वनिते स्थिरजलेऽवस्थितोऽवस्वन्यः १४ स्रोतसि प्रवाहे स्थितः स्रोतस्यः ।

कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमः श्लोक्याय चावसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाशुरथाय च नमः शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ॥ ६ ॥ नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च

---

द्वीपे जलमध्यवर्तिभूमौ स्थितो द्वीप्यः १५ इति पञ्चमोऽनुवाकः ॥ ५ ॥

पञ्चमेऽनुवाके कानिचिदन्यतरतोनमस्काराणि यजूंष्युक्तानि । अथ षष्ठे तथाविधान्येवान्यानि कानिचिद्यजूंष्युच्यन्ते ॥ विद्यैश्वर्यादिभिरधिको ज्येष्ठः । तद्रहितोऽल्पः कनिष्ठः १ पूर्वं जगदादौ हिरण्यगर्भरूपेणोत्पन्नः पूर्वजः । अपरस्मिन् जगदवसानकाले कालाग्न्यादिरूपेणोत्पन्नोऽपरजः २ मध्यकाले देवतिर्यगादिरूपेणोत्पन्नो मध्यमः । अप्रगल्भोऽप्ररूढेन्द्रियो बालः ३ जघने गवादीनां पश्चाद्भागे वत्सादिरूपेण भवो जघन्यः । बुध्ने वृक्षादीनां मूले शाखादिरूपेणोत्पन्नो बुध्नियः ४ उभाभ्यां पुण्यपापाभ्यां सह वर्तत इति सोभ्यो मनुष्यलोकः । अत एवाथर्वणिका आमनन्ति—'पुण्येन पुण्यलोकं जयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्' इति । तत्र भवः सोभ्यः । प्रतिसरो विवाहादौ हस्ते धार्यमाणो रक्षाबन्धः तमर्हतीति प्रतिसर्यः ५ यमलोके पापिशिक्षकरूपेणोत्पन्नो याम्यः । क्षेमो मोक्षस्तमर्हतीति क्षेम्यः ६ उर्वरा सर्वसस्याढ्या भूमिस्तामर्हति धान्यविशेषरूपेणेत्युर्वर्यः । खलो धान्यविवेचनदेशस्तमर्हति मेढ्यादिरूपेणेति खल्यः ७ श्लोका वैदिकमन्त्रास्तत्प्रतिपाद्यत्वेन तत्र भवः श्लोक्यः । अवसानं वेदान्तस्तत्प्रतिपाद्यत्वेन तत्र भवोऽवसान्यः ८ वने वृक्षादिरूपेण भवो वन्यः । कक्षे लतादिरूपेण भवः कक्ष्यः ९ श्रूयत इति श्रवः शब्दः । प्रतिश्रवः प्रतिध्वनिः १० आशुः शीघ्रगामिनी सेना यस्यासावाशुषेणः । आशुः शीघ्रगामी रथो यस्यासावाशुरथः ११ शूरो युद्धे धैर्यवान् । अवभिन्दन्वैरिणां प्रहर्ता १२ वर्मी कञ्चुकोपेतः । वरूथी गृहोपेतः १३ बिल्वं बिलोपेतं युद्धे शिरोरक्षकं तदस्यास्तीति बिल्मी । कवचः शरीररक्षकः सोऽस्यास्तीति कवची १४ श्रुतो वेदेषु प्रसिद्धः । श्रुता बन्दिषु प्रसिद्धा सेना यस्यासौ श्रुतसेनः १५ इति षष्ठोऽनुवाकः ॥ ६ ॥

षष्ठेऽनुवाके यान्यन्यतरतो नमस्काराणि यजूंष्युक्तानि तेभ्योऽन्यानि कानिचिद्या

नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय चातप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥ ७ ॥ नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय च दूरे-

---

जूंषि सप्तमेऽभिधीयन्ते। दुन्दुभ्यां भेर्यां भवः शब्दो दुन्दुभ्यः। आहन्यते ताड्यतेऽनेनेत्याहननो दुन्दुभ्याघातार्थो दण्डस्तत्र ताडनरूपेणोत्पन्न आहनन्यः १ धृष्णुर्युद्धे पलायनरहितः। प्रमृशः परसैन्यवृत्तान्तपरामर्शकः २ दूतस्तु वृत्तान्तज्ञापनकुशलः। प्रहितः स्वामिना प्रेषितः पुरुषः ३ निषङ्गी खड्गयुक्तः। इषुधिमान्बाणाधारयुक्तः ४ तीक्ष्णा इषवो यस्यासौ तीक्ष्णेषुः। बहून्यायुधान्यस्य सन्तीत्यायुधी ५ शोभनमायुधं त्रिशूलरूपं यस्यासौ स्वायुधः। शोभनं धनुः पिनाकरूपं यस्यासौ सुधन्वा ६ स्रुतिः पादसंचारमात्रयोग्यः क्षुद्रमार्गस्तमर्हतीति स्रुत्यः। पन्थाः रथाश्वादिसंचारक्षमः प्रौढो मार्गस्तमर्हतीति पथ्यः ७ कुत्सितमटति जलमत्रेति काटोऽल्पप्रवाहयोग्यः कुल्याप्रदेशस्तत्र जनरूपेण भवः काट्यः। यस्मिन्प्रदेशे पर्वताग्राज्जलं न्यग्भावेन पतति स प्रदेशो नीपस्तमर्हतीति तत्र जलरूपेणावस्थितो नीप्यः ८ सूदः कर्दमप्रदेशस्तत्रत्यजलरूपः सूद्यः। सरः प्रसिद्धं तत्रत्यजलरूपः सरस्यः ९ नदीगतजलरूपो नाद्यः। अल्पसरो वेशन्तस्तत्रत्यजलरूपो वैशन्तः १० कूपस्थजलरूपः कूप्यः। अवटस्थजलरूपोऽवट्यः ११ वर्षजलरूपो वर्ष्यः। वर्षनिरपेक्षः समुद्रादिजलरूपोऽवर्ष्यः १२ मेघेषु स्थितो मेघ्यः। विद्युता सह चरतीति विद्युत्यः १३ ईध्रं निर्मलत्वेन दीप्यमानं शरदभ्रं तत्र भव ईध्रियः। आतपेन सह वृष्ट आतप्यः १४ वातेन सह वृष्टो वात्यः। रिष्यन्ति विनश्यन्ति भूतान्यत्रेति रेष्मः प्रलयकालस्तत्र भवः शर्करापाषाणादिसहितो वृष्टिजलविशेषो रेष्मियः १५ वस्तु धनं गवाश्वादिपदार्थरूपं तत्र तत्तत्कार्यरूपेणावस्थितो वास्तव्यः। गृहनिर्माणार्था भूमिर्वास्तु तत्पालको वास्तुपः १६ इति सप्तमोऽनुवाकः ॥ ७ ॥

सप्तमेऽनुवाके यान्यन्यतरतोनमस्काराणि यजूंष्युक्तानि तेभ्योऽन्यानि कानिचिदन्यतरतोनमस्काराण्यष्टमेऽनुवाके कथ्यन्ते ॥ उमया सह वर्तत इति सोमः। रुत् रोदनहेतुर्दुःखं तद्द्रावयति विनाशयतीति रुद्रः १ आदित्यरूपेणोदयकालेऽत्यन्तरक्तस्ताम्रः। उदयादूर्ध्वमीषद्रक्तोऽरुणः २ शं सुखं गमयति प्रापयतीति शङ्गः। पशूनां पालयिता पशुपतिः ३ विरोधिनो नाशयितुं क्रोधयुक्त उग्रः। दर्शनमात्रेण विरोधिनो भयहेतुर्भीमः ४ अग्रे पुरतो वधोऽस्येत्यग्रेवधः। एवं दूरेवधः ५ पुरतो

वधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमः शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चालाद्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च प्रवाह्याय च ॥ ८ ॥ नम इरिण्याय च प्रपथ्याय च नमः किंशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च

---

दूरे वा वर्तमानं विरोधिनमनायासेनैव हन्तीत्यर्थः । लोकेऽपि यो यत्र विरोधिनं हन्ति तत्र तद्रूपेणायमेव हन्ता । अत एवेश्वरेणार्जुनं प्रत्युक्तम् । 'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्' इति । संहारकालेऽतिशयेन सर्वेषां हन्ता हनीयात् ६ हरितवर्णानि केशसदृशानि पर्णानि येषां ते हरिकेशास्तथाविधा ये वृक्षाः कल्पतरुप्रभृतयस्तद्रूपोऽयं रुद्र इत्यर्थः ७ तारः प्रणवप्रतिपाद्यः ८ शं सुखं भावयत्युत्पादयतीति वा शम्भुः । मयः सुखं भावयतीति मयोभूः ९ एकं विषयसुखमपरं मोक्षसुखमिति तयोर्विवेकः । पित्रादिरूपेण शं लौकिकसुखं करोतीति शंकरः । आचार्यशास्त्रादिरूपेण मोक्षसुखं करोतीति मयस्करः । साक्षात्सुखकारित्वमेताभ्यां पदाभ्यामुक्तं एतन्सुखेन कारयितृत्वं पूर्वाभ्यां पदाभ्यामिति विवेकः १० शिवः कल्याणरूपः । स्वयं निष्कल्मष इत्यर्थः । अतिशयेन शिवः शिवतरः ११ स्वभक्तानपि निष्कल्मषान्करोतीत्यर्थः । तीर्थे प्रयागादौ सन्निहितस्तीर्थ्यः । कूले नदीतीरे प्रतिष्ठापितलिङ्गरूपेणावतिष्ठत इति कूल्यः १२ पारे संसारसमुद्रस्य परतीरे मुमुक्षुभिर्ध्येयत्वेनावतिष्ठत इति पार्यः । अवारेऽर्वाक्तीरे संसारमध्ये काम्यफलप्रदत्वेनावतिष्ठत इत्यवार्यः १३ प्रकृष्टेन मन्त्रजपादिरूपेण पापतरणहेतुः प्रतरणः । तत्त्वज्ञानरूपेण कृत्स्नसंसारोत्तरणहेतुरुत्तरणः १४ संभवत्यपि संसारोत्तरणहेतौ तत्त्वज्ञाने तदुपेक्ष्य काम्यकर्मानुष्ठाने संसारे पुनरागमनमातारस्तमर्हतीत्यातार्यः । अलं संपूर्णं यथा भवति तथा कर्मफलमत्तीत्यलादो जीवः । 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति श्रुतेः । तस्य प्रेरकत्वेन तत्संबन्धित्वादालाद्यः १५ शष्पं बालतृणं गङ्गातीरादावुत्पन्नं कुशाङ्कुरादि तदर्हतीति शष्प्यः । नदीमध्यगतं फेनमर्हतीति फेन्यः १६ सिकतामर्हतीति सिकत्यः । प्रवाहमर्हतीति प्रवाह्यः १७ इति अष्टमोऽनुवाकः ॥ ८ ॥

अष्टमेऽनुवाके यान्यन्यतरतोनमस्काराणि यजूंष्युक्तानि तेभ्योऽप्यन्यानि कानिचिन्नवमेऽनुवाके उच्यन्ते ॥ इरिणमूखरं तत्र भव इरिण्यः । प्रपथो बहुभिः सेवितो

गह्वरेष्ठाय च नमो ह्रदय्याय च निवेष्प्याय च नमः पांसव्याय च रजस्याय च नमः शुष्क्याय च हरित्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोऽपगुरमाणाय चाभिघ्नते च नम आक्खिदते च प्रक्खिदते च नमो वः किरिकेभ्यो देवानांहृदयेभ्यो नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नम आनिर्हतेभ्यो नम आमीवत्केभ्यः ॥ ९ ॥ द्रापे अन्ध-

---

मार्गेस्तत्र भवः प्रपथ्यः १ कुत्सिताः क्षुद्राः शिला यत्र प्रदेशे तादृशः शार्करिलः प्रदेशः किंशिलः । क्षयणो निवासयोग्यो देशः २ कपर्दी जटाबन्धवान् । भक्तानां पुरतस्तिष्ठतीति पुलस्तिः ३ गवां स्थानं गोष्ठं तत्र भवो गोष्ठ्यः । गृहे भवो गृह्यः ४ तल्पे खट्वायां शयानस्तल्प्यः । गेहे प्रासादे भवो गेह्यः ५ कुत्सितमटतीति कटं कण्टकितलतादि तत्पूर्णतया दुःप्रवेशत्वं प्राप्नोतीति वा दुर्गमरण्यविशेषः काटस्तत्र भवः काट्यः । गह्वरे विषमे गिरिगुहादौ तिष्ठतीति गह्वरेष्ठः ६ ह्रदेष्वगाधजलेषु भवो ह्रदय्यः । निवेष्पं नीहारजलं तत्र भवो निवेष्प्यः ७ पांसुषु परमाणुष्ववस्थितः पांसव्यः । रजसि विस्पष्टायां धूल्यामवस्थितो रजस्यः ८ शुष्केषु काष्ठेषु भवः शुष्क्यः । हरितमार्द्रं तत्र भवो हरित्यः ९ लुप्यते तृणादिकं यस्मिन्निति लोपः कठिनप्रदेशस्तत्र भवो लोप्यः । उलपा बल्वजाः तृणादयस्तत्र भव उलप्यः १० उर्व्यां पृथिव्यां भव ऊर्व्यः । शोभना ऊर्मयो यस्यां नद्यां सेयं सूर्मिस्तत्र भवः सूर्म्यः ११ पर्णेषु पत्रेषु भवः पर्ण्यः । शुष्काणां पर्णानां संघातः पर्णशदस्तत्र भवः पर्णशद्यः १२ अपगुरमाण उद्यतायुधः । अभिघ्नन्प्रहरन् १३ आक्खिदन्नीषत्खेदयन् । प्रक्खिदन्नत्यन्तं खेदयन् १४ किरन्ति भक्तेभ्यो धनानीति किरिका उदाराः रुद्रावताराः । तेच देवानां हृदयभूताः । सर्वदेवप्रियत्वात् । तादृशेभ्यो वो युष्मभ्यं नमः १५ क्षीणेभ्यो विपरीता विक्षीणकाः । कदाचिदपि क्षयरहिता इत्यर्थः १६ विचिन्वन्ति अपेक्षितमर्थं संपादयन्तीति विचिन्वत्काः १७ आसमन्तान्निःशेषेण हतं पापं यैस्ते आनिर्हताः १८ आसमन्तान्मीवन्ति स्थूलीभावं प्राप्नुवन्तीत्यामीवत्काः । अत्र विक्षीणकविचिन्वत्कानिर्हतामीवत्केषु देवानांहृदयेभ्य इत्यनुषज्यते १९ पञ्चमानुवाकमारभ्य नवमान्तेष्वनुवाकेष्वन्यतरतोनमस्काराणि बहूनि यजूंष्यभिहितानि तैः सर्वैः परमेश्वरस्य सार्वात्म्यं प्रतिपादयितुमेकैकेन यजुषा स्थावरं जंगमं चेकैकं रूपमभिहितं । अनुवाकभेदस्तु क्रतोर्बहिःप्रयोगे मन्त्रभेदाभिप्रायो द्रष्टव्यः । एकैकोऽनुवाक एकैको मन्त्रः । तस्य तत्र पुरश्चरणादिप्रकारस्तु रुद्रकल्पेऽभिधास्यते । इति नवमोऽनुवाकः ॥ ९ ॥

द्वितीयमारभ्य नवमान्तेष्वनुवाकेषु विविधानि यजूंष्युभयतोनमस्काराणि

सस्पते दरिद्रन्नीललोहित । एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो एषां किंचनाममत् ॥ १ ॥ या ते रुद्र शिवा तनूः शिवा विश्वाह भेषजी । शिवा रुद्रस्य भेषजी तया नो मृड जीवसे ॥ २ ॥ इमाꣳ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिं । यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरं ॥ ३ ॥ मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ ॥ ४ ॥ मा नो महान्तमुत

---

अन्यतरतोनमस्काराणि चोक्तानि । अथ दशमेऽनुवाके ऋग्रूपा मन्त्रा उच्यन्ते । तत्र प्रथमामृचमाह—द्रापे इति । द्रापयति कुत्सितां गतिं प्रापयतीति द्रापिः । पापिनो नरकप्रदानेन क्लेशयतीत्यर्थः । अन्धोऽन्नं तस्य पतिः पालकः । भक्तानां अन्नं पालयतीत्यर्थः । दरिद्रत् अकिंचनः । स्वयं विरक्तः । केवल इत्यर्थः । 'एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन' इति श्रुतेः । कण्ठे नीलः अन्यत्र लोहित इति नीललोहितः । एतैः शब्दैः संबोध्यमान हे रुद्र, एषां अस्मदीयानां पुरुषाणां पुत्रपौत्रादीनां एषां अस्मदीयानां पशूनां गोमहिष्यादीनां च समूहं मा भेः मा भीषय । एषामुक्तानां सर्वेषां मध्ये किंचन एकमपि वस्तु माऽरः मा गच्छतु । मा विनश्यत्वित्यर्थः । भो आममत् मैव रुग्णं भूत् १ हे रुद्र, ते त्वदीया शिवा शान्ता तनूर्या विद्यते तया तन्वा नोऽस्मान् जीवसे जीवयितुं मृड सुखय । कथं तन्वाः शिवत्वं तदुच्यते । यस्मादेवं विश्वाहभेषजी सर्वेष्वहःसु रोगदारिद्र्यादेरौषधवद्विनाशहेतुस्तस्माच्छिवा । किंच यस्माद्रुद्रस्य तादात्म्यप्राप्तये भेषजी औषधरूपा ज्ञानप्रदानेन जन्ममरणादिदुःखं निवारयति तस्मादप्येषा शिवा २ यथा येन प्रकारेण नोऽस्मदीयाय द्विपदे पुत्रपौत्रादिरूपाय मनुष्याय । चतुष्पदे गोमहिष्यादिरूपाय पशवे च शं असत् सुखं स्यात् । किंचास्मिन्ग्रामे विश्वं सर्वं प्राणिजातं पुष्टं सुखपूर्णमनातुरं उपद्रवरहितं च यथा भवति तथा वयं रुद्राय रुद्रार्थं इमां मतिं पूजाध्यानादिविषयां बुद्धिं प्रभरामहे प्रकर्षेण पोषयामः । कीदृशाय रुद्राय । तवसे बलयुक्ताय । अस्मदपेक्षितं कर्तुं समर्थायेत्यर्थः । कपर्दिने जटाबन्धयुक्ताय । तापसवेषायेत्यर्थः । क्षयद्वीराय क्षीयमाणप्रतिपक्षपुरुषाय । अन्यथाभानरूपपापविनाशहेतव इत्यर्थः ३ हे रुद्र, नोऽस्मान् मृड इहलोके सुखय । उत अपिच नोऽस्माकं परलोकेऽपि मयः सुखं कृधि कुरु । क्षयद्वीराय क्षपितास्मदीयपापाय ते तुभ्यं नमसा नमस्कारेण विधेम परिचरेम । पिता पालको मनुः प्रजापतिः शं च सुखं च योश्च दुःखपृथग्भावं च यदायजे यत्किंचित्संपादितवान् तत्सर्वं वयं हे रुद्र, तव प्रणीतौ प्रणये स्नेहातिशये सति अश्याम प्राप्नुयाम ४ हे रुद्र, नोऽस्मदीयं महान्तं पुरुषं स्थविरं

मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नो
वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः
॥ ५ ॥ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा
नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हवि-
ष्मन्तो नमसा विधेम ते ॥ ६ ॥ आरात्ते गोघ्न उत पूरुषघ्ने
क्षयद्वीराय सुम्नमस्मे ते अस्तु । रक्षा च नो अधि च देव
ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः ॥ ७ ॥ स्तुहि श्रुतं गर्तसदं
युवानं मृगं न भीममुपहत्नुमुग्रम् । मृडा जरित्रे रुद्र स्तवानो
अन्यं ते अस्मन्निवपन्तु सेनाः ॥ ८ ॥ परि णो रुद्रस्य हेति-
र्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः । अव स्थिरा मघवद्भ्यस्त-

---

मा रीरिषो मा हिंसीः । उत अपिच नोऽस्मदीयमर्भकं बालं मा रीरिषः । किंच नोऽस्मदीयं उक्षन्तं सेचनसमर्थं पुरुषं मा रीरिषः । उत अपिच नोऽस्मदीयमुक्षितं गर्भस्थं पुरुषं मा रीरिषः । नोऽस्मदीयं पितरं मा वधीः । उत अपि च मातरं मा वधीः । नोऽस्मदीयाः प्रियाश्च तनुवः शरीराणि मा रीरिषः ५ हे रुद्र, नोऽस्मदीये तोकेऽपत्यमात्रे तनये विशेषतः पुत्रे मा रीरिषः हिंसां मा कुरु । नोऽस्मदीये आयुषि मा रीरिषः । नोऽस्मदीयेषु गोषु मा रीरिषः । नोऽस्मदीयेष्वश्वेषु मा रीरिषः । भामितः क्रुद्धः सन् नोऽस्मदीयान्वीरान्भृत्यान्मा वधीः । वयं हविष्मन्तो हविर्युक्तास्ते तुभ्यं नमसा नमस्कारेण विधेम परिचरेम ६ गोघ्ने गोघ्नस्य पुरुषघ्ने पुत्रपौत्रादिपुरुषघ्नस्य क्षयद्वीराय क्षपितभृत्यस्य ते तव उग्रं रूपं आरादस्तु दूरे तिष्ठतु । यत्तु सुम्नं त्वदीयं सुखकरं रूपं तदस्मे अस्मास्वस्तु । 'घोरान्या शिवान्या' इति यच्छरीरद्वयमुक्तं तयोर्द्वयोर्मध्ये यद्घोरं शरीरं तद्दूरे गच्छतु, शिवं शरीरमत्रागच्छत्वित्यर्थः । किंच नोऽस्मान् रक्ष सर्वतः पालय । किंच हे देव, अधिब्रूहि अस्मानितरेभ्यो यजमानेभ्योऽधिकान् देवेषु ब्रूहि । अधा च अपिच द्विबर्हाः द्वयोर्लोकयोर्वर्धयिता त्वं शर्म यच्छ सुखं देहि ७ हे मदीयवचः, श्रुतं प्रसिद्धं रुद्रं स्तुहि । कीदृशम् । गर्तसदं गर्तसदृशे हृदयपुण्डरीके सर्वदा तिष्ठन्तम् । 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति स्मृतेः । युवानं नित्यतरुणम् । उपहत्नुमुग्रं प्रलयकाले सर्वं जगत्संहर्तुमुग्ररूपिणम् । तत्र दृष्टान्तः । भीमं मृगं न भयंकरं सिंहमिव । यथा गजविदारणायोग्रः सिंहो भवति तद्वत् । हे रुद्र, स्तवानोऽस्मद्वचसा स्तूयमानो जरित्रे जरणशीले दिने दिने क्षीयमाणेऽस्मच्छरीरे मृड सुखं कुरु । ते त्वदीयाः सेनाः अस्मादन्यं वैरिणं निवपन्तु विनाशयन्तु ८ हन्यतेऽनयेति हेतिरायुधं रुद्रस्य हेतिः नोऽस्मान् परिवृणक्तु परितो वर्जितान्करोतु । कदाचिदपि मा विध्यत्वित्यर्थः । त्वेषस्य

नुष्व मीढ्वस्तोकाय तनयाय मृडय ॥ ९ ॥ मीढुष्टम शिवतम शिवो नः सुमना भव। परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ॥ १० ॥ विकिरिद विलोहित नमस्ते अस्तु भगवः। यास्ते सहस्रꣳहेतयोन्यमस्मन्निवपन्तु ताः ॥ ११ ॥ सहस्राणि सहस्रधा बाहुवोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखा कृधि ॥ १२ ॥ १० ॥

---

क्रोधोज्ज्वलितस्य अघायोः अघं पापं प्रहाररूपमिच्छतो रुद्रस्य या दुर्मतिरुग्रबुद्धिः साप्यस्मान्परिवृणक्तु। स्थिरा विरोधिनाशनाय यादृग्दुर्मतिरस्ति तां मघवद्भ्यो हविर्लक्षणान्नयुक्तेभ्यो यजमानेभ्यः सकाशादवतनुष्व अवततामपनीतां कुरु। हे मीढ्वः कामाभिवर्षक, तोकायास्मत्पुत्राय तनयाय तदीयपुत्राय च मृडय सुखं देहि ९ हे मीढुष्टम अतिशयेन सेचक कामाभिवर्षक, हे शिवतम अतिशयेन शान्तस्वरूप, नोऽस्मान्प्रति शिवः शान्तः सुमनाः सौमनस्येन स्नेहेन युक्तश्च भव आयुधं त्रिशूलादिकं परमेऽत्युन्नते वृक्षे वटाश्वत्थादिरूपे निधाय यथास्माभिर्न दृश्यते तथावस्थाप्य कृत्तिं वसानः व्याघ्रचर्ममात्रं परिदधानः आचरास्मदाभिमुख्येनागच्छ। आगच्छन्नपि पिनाकं बिभ्रत् भूषणार्थं धनुर्मात्रं हस्ते धारयन्बाणादिकं परित्यज्यागह्यागच्छ १० कीर्यन्ते भक्तानां संनिधौ बहुधा प्रक्षिप्यन्त इति किरयो धनानि तानि ददातीति किरिदः विशेषेण किरिदो विकिरिदः। विलोहितः लौहित्यरहितः। श्वेत इत्यर्थः। अतएव मान्त्रिकाः पञ्चाक्षरध्याने स्मरन्ति—'ध्येयो मुक्तापरागामृतरसकलिताऽद्रिप्रभः' इति। यद्वा विशेषेण लोहितो विलोहितः। अत एवाष्टाक्षरध्याने स्मरन्ति—'काञ्चनाभो ध्येयः पद्मासनस्थः' इति। भगवः भगवन् षड्गुणसंपन्न। भगशब्दस्य षड्गुणवाचित्वं स्मर्यते—'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इति। प्रकारान्तरेण भगवच्छब्दनिर्वचनं च—'उत्पत्तिं च विनाशं च भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति'। यथोक्तविशेषणत्रयविशिष्ट हे रुद्र, ते तुभ्यं नमोऽस्तु। ते तव सहस्रं सहस्रसंख्याका या हेतयो यान्यायुधानि सन्ति ताः सर्वाः अस्मदन्यं विरोधिनं निवपन्तु विनाशयन्तु ॥ ११ ॥ हे रुद्र, तव बाहुवोर्हस्तयोर्हेतयः सहस्रप्रकाराः सहस्राणि सहस्रसंख्याका विद्यन्ते। धनुः खड्गस्त्रिशूलमित्येवं जातिभेदेन सहस्रप्रकारत्वम्। एकैकस्यां जातौ बहवः सहस्रसंख्याकाः। हे भगवः षड्गुणोपेत, त्वं ईशानः समर्थः सन् तासां हेतीनां मुखा मुखानि शल्यानि पराचीना कृधि अस्मत्तः पराङ्मुखानि कुरु ॥ १२ ॥ इति दशमोऽनुवाकः ॥ १० ॥

सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् । तेषाꣳसहस्र-योजनेव धन्वानि तन्मसि ॥ १ ॥ अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । नीलग्रीवाः शितिकण्ठाः शर्वा अधःक्षमाचराः । नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उप श्रिताः । ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः । ये भूतानामधिपतयो विशिखासः कपर्दिनः । ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । ये पथां पथिरक्षय ऐलबृदा यव्युधः । ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः । य एतावन्तश्च

---

दशमेऽनुवाके ऋग्रूपाः केचिन्मन्त्रा उक्ताः । अथैकादशे शिष्टा ऋचः शिष्टानि यजूंषि चोच्यन्ते । तत्रादौ दशसंख्याका ऋचः । भूम्यामधि भूमेरुपरि ये रुद्राः सहस्रशः सहस्रप्रकाराः सहस्राणि सहस्रसंख्याकाः सन्ति । सहस्रश इति जात्युक्तिः । विनायकप्रमथशैलादादयो जातिभेदास्ते सर्वेऽपि रुद्रविशेषाः । तत्राप्येकस्यां जातौ बहुभिः सहस्रैः संख्याता मूर्तिविशेषास्तेषां सर्वेषां धन्वानि धनूंषि सहस्रयोजने अस्मत्तः सहस्रयोजनव्यवहितदेशे अवतन्मसि अवततज्याकानि स्थापयामः १ अस्मिन्दृश्यमाने महत्यर्णवे महासमुद्रसदृशे प्रौढेऽन्तरिक्षेऽधिश्रित्य वर्तमाना भवाः रुद्रमूर्तिविशेषा ये सन्ति तेषां सहस्रयोजन इत्याद्युक्तार्थमुत्तरार्धं द्वितीयादिषु नवमान्तास्वृक्ष्वनुषज्यते । तदनुषङ्गद्योतनायैव दशम्यामृचि पुनः पठितम् २ ग्रीवायामेकस्मिन्प्रदेशे नीलवर्णाः नीलग्रीवाः प्रदेशान्तरे श्वेतवर्णाः । शितिकण्ठास्तादृशाः शर्वाः रुद्रमूर्तिविशेषाः । कीदृशाः । अधःक्षमाचराः भूमेरधस्तात्पातालेषु संचरन्ति तेषामित्यादि पूर्ववत् ३ दिवमुपश्रिताः स्वर्गे वर्तमानाः ४ यथा लोकेष्ववस्थिता रुद्रास्तथा वृक्षेष्वपि स्थिताः । तेषु केचित् सस्पिञ्जराः शष्पवद्बालतृणवत्पिञ्जरवर्णाः नीलवर्णग्रीवाः नीलग्रीवाः । केचित् ग्रीवादेशे नीलवर्णोपेताः । अपरे पुनर्विलोहिता विशेषेण रक्तवर्णाः । ईदृशा ये सन्ति तेषामित्यादि ५ भूतशब्देनान्तर्हितशरीराः सन्तो मनुष्योपद्रवकारिणो गणविशेषा उच्यन्ते । तेषामधिपतयो ये रुद्रास्तेषु केचिद्विशिखासो मुण्डितमूर्धानः । अपरे कपर्दिनो जटाबन्धोपेतास्तेषामित्यादि ६ ये रुद्रा अन्नेषु भुज्यमानेषु गूढत्वेनावस्थिताः सन्तो जनान्विविध्यन्ति विशेषेण धातुवैषम्यादिना बाधन्ते । तथा पात्रेषु पातव्येषु क्षीरोदकादिषु गूढत्वेनावस्थिताः सन्तः पिबतो जनान्विविध्यन्ति तेषामित्यादि ७ ये रुद्राः पथिरक्षयो लौकिकवैदिकमार्गाणां रक्षकाः । नात्र केषांचिदेव मार्गाणां किंतु सर्वेषां पथां ते च रक्षकाः । ऐलबृदाः इरा अन्नं तस्य समूह ऐरं ऐरमेव ऐलं तद्बिभ्रतीत्यैलभृतः ऐलभृत एव ऐलबृदाः । अन्नप्रदानेन पोषका इत्यर्थः । तेच यव्युधः यौति मिश्रीभवति विरोधं करोतीति युः शत्रुः । युभिः

भूयाꣳसश्च दिशो रुद्रा वितस्थिरे । तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि । नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ ११ ॥

रुद्रो वा एष यदग्निः स एतर्हि जातो यर्हि सर्वश्चितः स यथा वत्सो जातः स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति

---

शत्रुभिः सह युध्यन्तीति यव्युधः । अस्मदनिष्टनिवारका इत्यर्थः । तेषामित्यादि ८ ये रुद्राः तीर्थानि काशीप्रयागादीनि रक्षितुं प्रचरन्ति । कीदृशा रुद्राः । सृकावन्तः सृकाः क्षुरिका हस्ते धार्यमाणास्तीक्ष्णाग्रा आयुधविशेषास्तद्युक्ताः केचित् । अपरे निषङ्गिणः खड्गयुक्तास्तेषामित्यादि ९ ये रुद्रा एतावन्तश्च सहस्राणि सहस्रश इत्यादृग्भिर्यावन्त उक्तास्तावन्तोऽपि । भूयांसश्च इतोऽप्यधिका अन्ये बहवोऽपि दिशः वितस्थिरे सर्वा दिशः प्रविश्य स्थिताः तेषामित्यादि । इत्थं दशसंख्याका ऋच उक्ताः १० अत्र पृथिव्यादिलोकभेदादिषु भेदाच्च यजुस्त्रयं द्रष्टव्यम् । तदा एवं पाठः संपद्यते । नमो रुद्रेभ्य इत्युपक्रम्य ये पृथिव्यां येषामन्नमिषव इत्याद्यो मन्त्रः । येऽन्तरिक्षे येषां वात इषव इति द्वितीयो मन्त्रः । ये दिवि येषां वर्षमिषव इति तृतीयो मन्त्रः । तेभ्यो दश प्राचीरित्यादि सर्वत्र समानम् ॥ ये रुद्राः पृथिव्यां वर्तन्ते तेष्वपि रुद्रेषु येषां रुद्रविशेषाणां अन्नमेव इषवो बाणाः अपथ्यान्नभक्षणे प्रवर्त्य वा, अन्नार्थं चौर्यं कारयित्वा वा यान्हिंसन्ति तान्प्रति हिंसकानां रुद्राणामन्नमेवेषवः तेभ्यः पृथिव्यां स्थितेभ्योऽन्नबाणकेभ्यश्च रुद्रेभ्यो नमोऽस्तु । तथा ये रुद्रा अन्तरिक्षे वर्तन्ते तेषामपि मध्ये येषां वात इषवस्तीव्रेण वायुना रोगानुत्पाद्य हिंसन्ति तेभ्योऽन्तरिक्षवर्तिभ्यो वातेषुभ्यश्च रुद्रेभ्यो नमोऽस्तु । तथा ये दिवि वर्तन्ते तेष्वपि येषां रुद्रविशेषाणां वर्षमेवेषवः अतिवृष्ट्यनावृष्टिभ्यां प्राणिनो हिंसन्ति तेभ्यो दिवि स्थितेभ्यो वर्षेषुभ्यो रुद्रेभ्यो नमोऽस्तु । कीदृशो नमस्कार इति स एव विशिष्यते । दश प्राचीः प्राङ्मुखत्वेनाञ्जलिकरणे दशाङ्गुलयः प्रागग्रा भवन्ति । एवं दक्षिणादिषूर्ध्वान्तेषु योज्यम् । ईदृशैरञ्जलिविशेषैस्तेभ्यो रुद्रेभ्यो नमोऽस्तु । ते च रुद्रा नोऽस्मान् मृडयन्तु सुखयन्तु । ते वयं नमस्कृतरुद्राः सन्तो यं वैरिणं तूष्णीमवस्थितमपि द्विष्मः यश्च वैरी नोऽस्मांस्तूष्णीमवस्थितानपि द्वेष्टि तमुभयविधं वैरिणं हे रुद्राः, वो युष्माकं जम्भे विदारितास्ये दधामि स्थापयामि ॥ ११ ॥ इत्येकादशोऽनुवाकः ॥

तमिममेकादशानुवाकात्मकं रुद्राध्यायं विनियुङ्क्ते—यस्मिन् काले चीयमानोऽग्निः अशेषचितिनिष्पादनेन सर्वश्चितो भवति एतस्मिन्काले अयमग्निरुत्पन्नो भव-

---

१ रुद्रपाठबहिर्गतोऽप्ययमनुवाको भाष्यानुरोधान्मध्ये संगृहीतः ।

तस्मै यदाहुतिं न जुहुयादध्वर्युं च यजमानं च ध्यायेच्छतरुद्री-
यं जुहोति भागधेयेनैवैनꣴशमयति नार्तिमार्च्छेत्यध्वर्युर्न यज-
मानः ॥ १ ॥ यद्ग्राम्याणां पशूनां पयसा जुहुयाद्ग्राम्यान्प-
शूञ्छुचार्पयेद्यदारण्यानामारण्यान्जर्तिलयवाग्वा वा जुहुया-
द्गवीधुकयवाग्वा वा न ग्राम्यान्पशून्हिनस्ति नारण्यान् ॥ २ ॥
अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण
जुहोत्याग्नेयी वा एषा यदजाहुत्यैव जुहोति न ग्राम्यान् पशू-
न्हिनस्ति नारण्यान् ॥ ३ ॥ अङ्गिरसः सुवर्गं लोकं यन्तो-
ऽजायां घर्मं प्रासिञ्चन् सा शोचन्ती पर्णं परांजिहीत सो३
र्कोऽभवत्तदर्कस्यार्कत्वमर्कपर्णेन जुहोति स योनित्वाय ॥ ४ ॥
उदङ् तिष्ठञ्जुहोत्येषा वै रुद्रस्य दिक् स्वायामेव दिशि रुद्रं

---

ति । सोयमुत्पन्नोग्निरेव रुद्र इत्युच्यते । देवैः स्वकीयवामवस्वदाने सति रोदनाद्वा प्राणिनां रोदनहेतुदुःखस्य द्रावणाद्वा अग्निरेव रुद्रः । यथा लोके जातो वत्सस्तदानीमेव स्तनं प्राप्तुमिच्छति एवमेवैष एतस्मिंश्चितिसंपूर्तिकाले समुत्पन्नो रुद्रनामकोऽग्निः स्वकीयं भागमिच्छति । तस्मा अग्नये कस्याश्चिदाहुतेरहोमेऽध्वर्युं यजमानं च भक्षयितुं ध्यायेदग्निः । अतस्तत्परिहाराय शतरुद्रीयं जुहुयात् । शतमित्यपरिमितत्वं लक्ष्यते । अपरिमिता रुद्रा यस्मिन्नध्याये प्रतिपाद्यन्ते सोऽध्यायः शतरुद्रीयः तेन होमे सति स्वकीयभागेन रुद्रस्य तुष्टत्वादध्वर्युर्यजमानो न म्रियते १ अथ होमद्रव्यं विधत्ते—शुचार्पयेत् संपातनरोगेण योजयेत् । जर्तिलः आरण्यतिलाः । गवीधुकः आरण्यगोधूमाः २ पक्षान्तरं विधत्ते—अदनीयं यद्द्रव्यं तदेवाहुतियोग्यम् । 'यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः' इति न्यायात् । जर्तिला गवीधुकाश्च मनुष्यैर्नाद्यन्ते तस्मादाहुतियोग्या न भवन्तीत्याहुः पूर्वपक्षोपन्यासादूर्ध्वमाहुः । तस्मादुभयं परित्यज्याजाक्षीरेण जुहुयात् । अजाग्न्योरुभयोः प्रजापतिमुखजन्यत्वेन साजात्यादियमजाग्नेयी अत आहुतियोग्यैव । अतस्तत्क्षीरद्रव्येण जुहोति ग्राम्यारण्यपयसोरस्वीकारात्तेऽपि पशवो न हिंस्यन्ते ३ होमसाधनभूतां जुहूमपवदितुं साधनान्तरं विधत्ते—प्रवर्ग्यकाले महावीरे संतप्तं घृतं क्षीरसहितं घर्मः । तं घर्मं प्रयाणव्यग्रा अङ्गिरसः प्रमादादजायां प्रकर्षेणासिंचन् । सा शोचन्ती साप्यजा तेनोष्णघृतेन तप्यमाना पर्णसदृशं स्वकीयं रोमसंघं भूमावपातयत् । स च रोमसंघातोऽर्कः प्रसिद्धार्करूपेण प्ररूढः । अर्चनीयेन पूज्येन प्रवर्ग्यघृतेन तथाविधेनाजारोमसंघातेन चोत्पन्नत्वादस्य स्थावरस्यार्कनाम संपन्नम् । तेनार्कपर्णेन होमे सति पर्णक्षीरयोरुभयोरप्यनन्यकार्यत्वात्समानयोनित्वं संपद्यते ४ होमकाले किंचिद्विशेषं

निरवदयते चरमायामिष्टकायां जुहोत्यन्तत एव रुद्रं निरवद-
यते ॥ ५ ॥ त्रेधाविभक्तं जुहोति त्रय इमे लोका इमा-
नेव लोकान् समावद्वीर्यान्करोति ॥ ६ ॥ इयत्यग्रे जुहो-
त्यथेयत्यथेयति त्रय इमे लोका एभ्य एवैनं लोकेभ्यः शमय-
ति ॥ ७ ॥ तिस्र उत्तरा आहुतीर्जुहोति षट् संपद्यन्ते
षड्वा ऋतव ऋतुभिरेवैनꣳ शमयति ॥ ८ ॥ यदनुपरिक्रामं
जुहुयादन्तरवचारिणꣳ रुद्रं कुर्यादथो खल्वाहुः कस्यां वा
ह दिशि रुद्रः कस्यां वेत्यनुपरिक्राममेव होतव्यमपरिवर्ग-
मेवैनꣳ शमयति ॥ ९ ॥ एता वै देवताः सुवर्ग्या या
उत्तमास्ता यजमानं वाचयति ताभिरेवैनꣳसुवर्गं लोकं गम-
यति ॥ १० ॥ यं द्विष्यात्तस्य संचरे पशूनां न्यस्येद्यः प्रथमः

---

विधत्ते अन्त्यप्रदेशवर्तिनी चरमेष्टका सा च सूत्रकारेण दर्शिता । 'उत्तरस्य पक्षस्य उत्तरापरस्याꣳस्रक्त्यां विकर्ण्याꣳ स्वयमातृण्णायाम्' इति । अन्त्यदेशगतेन होमेन क्रूरमिमं रुद्रमन्तत एव निःसारयति ॥ ५ ॥ रुद्राध्याये होमसाधनमन्त्रविभागं विधत्ते—तत्र त्रेधा विभाग एवं करणीयः । नमस्ते रुद्रेत्यारभ्य सभापतिभ्यश्च वो नम इत्यन्तः प्रथमो भागः । नमो अश्वेभ्य इत्यारभ्य अवार्याय चेत्यन्तो द्वितीयो भागः । नमः प्रतरणाय चेत्यारभ्य य एतावन्तश्चेत्यृचा सहितस्तृतीयो भागः॥६॥ तिसृष्वप्याहुतिषु क्रमेण जानुदघ्नादिदेशेषु स्रग्धारणं हस्ताभिनयेन विधत्ते ॥ ७ ॥ नमो रुद्रेभ्यो ये पृथिव्यामित्यादियजुस्त्रयसाध्यं होमं विधत्ते ॥ ८ ॥ पूर्वोत्तरपक्षभङ्ग्या अनुपरिक्रम्य होमं विधत्ते अनुपरिक्रामं अनुक्रमेण परितो भ्रमणं कृत्वा यदि जुहुयात्तदानीं तं रुद्रमन्तरवचारिणमग्निक्षेत्रस्य मध्ये प्रविश्य चरन्तं कुर्यात् । सच प्रविष्टः क्रूरत्वादुपद्रवं करोत्येव तस्मात्परिभ्रमणं न कर्तव्यमिति पूर्वः पक्षः । अथो-शब्दः सिद्धान्तोपक्रमार्थः । अभिज्ञास्त्वेवमाहुः । खलु आहुः शब्द उपन्यस्तपक्ष-निराकरणद्योतनार्थः। यदुक्तं पूर्वपक्षिणा तन्न भवतीत्यर्थः। अयं रुद्रः सर्वत्र संचरन् कदा कस्यां दिशि वर्तते कस्यां वा न वर्तत इति को ज्ञातुं समर्थः। अतो रुद्रमन्वेष्टु-मनुक्रमेण परिभ्रमणं कृत्वैव होतव्यम् । तथा सति परितो यत्र क्वापि स्थितं रुद्र-मवर्जयित्वैव शान्तं करोति । शान्तत्वादेवान्तः प्रविश्यायं रुद्रः सन्नन्तः संचरन्नो-पद्रवं करोतीत्यर्थः ॥ ९ ॥ नमोरुद्रेभ्य इत्यादिमन्त्राणां यजमानवाचनं विधत्ते—एतैर्यजुर्भिः प्रतिपाद्या या देवताः सन्ति ताः स्वर्गहेतवः । अतएवोत्तमा उत्कृष्टाः चरममन्त्रप्रतिपाद्यत्वाद्वोत्तमत्वम् । ता अध्वर्युर्यजमानं वाचयेत् । तत्प्रतिपादकानि यजूंषि पाठयेदित्यर्थः । तथा सति ताभिरेव देवताभिरेवं यजमानं स्वर्गं प्रापयति ॥१०॥ अर्कपर्णस्य परित्यागे देशं विधत्ते—यं पुरुषं यजमानो द्विष्यात्तस्य पशूनां

पशुरभितिष्ठति स आर्तिमार्च्छति ॥ ११ ॥ जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान्पशून्हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजाहुत्यैव जुहोति ॥ १२ ॥ १२ ॥

अथ चमकानुवाकाः ।

ॐअग्नाविष्णू सजोषसे मा वर्धन्तु वां गिरः। द्युम्नैर्वाजेभिरागतं ॥ वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च

---

संचरप्रदेशे तदर्कपर्णं परित्यजेत् । तत्यक्तपर्णं यः पशुः प्रथम इतरेभ्यः पशुभ्यः पूर्वः सन्नभिक्रम्य तिष्ठति स म्रियेत ॥११॥ अत्र विनियोगसंग्रहः—'प्रश्ने तु पञ्चमे प्रोक्तः शतरुद्रीयहोमकः ॥ सभापतिभ्य इत्यन्त एको मन्त्रः प्रकीर्तितः ॥ अवार्यायेत्यन्त एकस्तन्मसीत्यन्त उत्तरः ॥ नमो रुद्रेभ्य इत्येषु पृथिव्यादिविभेदतः ॥ त्रेधा भिन्नत्वतो होमे षण्मन्त्रा इह कीर्तिताः' । अथ मीमांसा ॥ दशमाध्यायस्याष्टमपादे चिन्तितम्—'जर्तिलोक्तेश्चतुर्धा किं विकल्पोऽथ पयःश्रुतिः ॥ विकल्पः पूर्ववन्मैवं वाक्यैक्यात्पयसा सह' । जर्तिला आरण्यतिलाः । गवीधुका आरण्यगोधूमाः तयोरुभयोर्विकल्पः श्रौत एव । अनाहुतिरिति पूर्वयोः पक्षयोर्दूषितत्वात् होमाभावस्तृतीयः पक्षः । न चात्र जर्तिलगवीधुकयोरेवाहुतित्ववचनेन पर्युदासः संभवति आहुतिपदान्वितस्य नञ्पदस्य जर्तिलगवीधुकपदान्वयायोगात् । पयोविधिश्चतुर्थः पक्षः । एतेषां परस्परविरुद्धानां चतुर्णां गत्यन्तराभावेन षोडशिग्रहणाग्रहणवद्विकल्पे प्राप्ते ब्रूमः । पयोविधिना सह जर्तिलादेरेकवाक्यत्वेनार्थवादत्वं युक्तम् । ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्तयोरपि जर्तिलगवीधुकयोरग्निहोमे प्रत्याहुतित्वं नास्ति । पयसस्तु तदस्ति । इत्थं महाभागं पय इति । तस्मादर्थवादः ॥ वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके श्रीरुद्रभाष्ये एकादशोऽनुवाकः समाप्तः ॥

इति श्रीरुद्राध्यायनमकभाष्यं संपूर्णम् ॥

अथ चमकभाष्यम् ॥

श्रीः ॥ यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥ निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ परिषेचनमुख्यास्तु संस्काराः षष्ठ ईरिताः । वसोर्धारादयः शिष्टाः प्रोच्यन्तेऽस्मिंस्तु सप्तके ॥ कल्पः—'अग्नाविष्णू सजोषसे' इति चतुर्गृहीतं हुत्वौदुम्बरीं स्रुचं व्यायाममात्रीं मृदा प्रदिग्धां पश्चादासेचनवतीं घृतस्य पूरयित्वा 'वाजश्च मे प्रसवश्च मे' इति संततां वसोर्धारां जुहोत्यामन्त्रसमापनादिति । अत्र ह्येकादशभिरनुवाकैर्मन्त्रः समाप्यते—चतुर्गृहीतहोममन्त्रस्तु हे अग्ना-

मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूंषि च मे शरीराणि च मे ॥ १ ॥ ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे वृद्धिश्च मे सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातं च मे

---

विष्णू, युवां सजोषसा समानप्रीती भवतम् । वां युवयोरिमा गिरः स्तुतिरूपा वाचः वर्धन्तु वृद्धिं प्राप्नुवन्तु । युवामपि द्युम्नैर्धनैः वाजेभिरन्नैश्च युक्तौ आगतमिहागच्छतम् ॥

अथैकादशानुवाकात्मको मन्त्र उच्यते । अनुवाकभेदस्त्वयज्ञसंयुक्ते कर्मणि पृथङ्मन्त्रानुष्ठेयत्वादुपपद्यत इति ॥ तत्र प्रथमानुवाकपाठस्तु—

वाजोऽन्नं । चशब्दो वक्ष्यमाणद्रव्यापेक्षया समुच्चयार्थः । मे मम । कल्पतामिति पदं दशमानुवाके वक्ष्यमाणं सर्वत्रानुषज्यते । संपद्यतामित्यर्थः । प्रसवोऽन्नस्याभ्यनुज्ञानं दीयतां भुज्यतामित्येवंरूपम् । प्रयतिः शुद्धिः । प्रसितिः बन्धनमन्नविषयकमौत्सुक्यम् । धीतिरन्नधारणम् । क्रतुरन्नहेतुर्यज्ञः । स्वरो मन्त्रगत उदात्तादिः । श्लोकः स्तुतिः । श्रावः श्रावयितृत्वसामर्थ्यम् । श्रुतिः श्रवणसामर्थ्यम् । ज्योतिः प्रकाशः । सुवः स्वर्गः । प्राणापानव्यानाः वायुवृत्तिविशेषाः । असुस्तद्वृत्तिमान्वायुः । चित्तं मनोजन्यं ज्ञानम् । आधीतं तेन ज्ञानेन सर्वदा विषयीकृतं द्रव्यम् । वागादयश्चत्वारः प्रसिद्धाः । दक्षो ज्ञानेन्द्रियगतं कौशलम् । बलं कर्मेन्द्रियगतं सामर्थ्यम् । ओजो बलहेतुरष्टमो धातुः । सहो वैरिविषयमभिभवितृत्वम् । आयुः प्रसिद्धम् । जरा आयुषो वलीपलितादिपर्यन्तत्वम् । आत्मा शास्त्रप्रसिद्धः परमात्मा । तनूः शोभनसन्निवेशं वपुः । शर्म सुखम् । वर्म शरीररक्षकं कवचादि । अङ्गानि संपूर्णावयवाः । अस्थानि यथास्थानं स्थितान्यस्थीनि । परूंषि अङ्गुल्यादिपर्वाणि । शरीराणि पूर्वमनुक्ताः शरीरावयवाः ॥ १ ॥ इति प्रथमोऽनुवाकः ॥

ज्यैष्ठ्यं प्रशस्ततमत्वम् । आधिपत्यं स्वामित्वम् । मन्युभामशब्दा क्रोधावान्तरविशेषवाचिनौ । एको मानसः । अपरोऽक्षमादिलिङ्गजन्यो बाह्यः । अमोऽप्रमेयत्वं विरोधिभिरियत्तया परिच्छेत्तुमशक्यत्वम् । अम्भः शैत्यमाधुर्योपेतमुदकम् । जेमा जयसामर्थ्यम् । महिमा महत्त्वं जयसंपादितधनादिसंपत्तिः । वरिमा वरणीयत्वं पूज्यत्वम् । प्रथिमा गृहक्षेत्रादिविस्तारः । वर्ष्मा पुत्रपौत्रादिशरीराणि । द्राघुया पुत्रपौत्रादिविषयं दीर्घत्वम् । अविच्छिन्ना सन्ततिरित्यर्थः । वृद्धं प्रभूतमन्नं धनं च वृद्धिर्विद्यादिगुणैरुत्कर्षः । सत्यं यथार्थभाषणम् । श्रद्धा

जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे ॥ २ ॥ शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मे यक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे

परलोकोऽस्तीति बुद्धिः । जगत् जङ्गमाजङ्गमात्मकं गवादि । धनं सुवर्णादि । वशः सर्वस्वाधीनत्वम् । त्विषिः शरीरकान्तिः । क्रीडा अक्षद्यूतादिः । मोदः तज्जन्यो हर्षः । जातं पूर्वसिद्धापत्यम् । जनिष्यमाणं भविष्यदपत्यम् । सूक्तं ऋक्समूहः । सुकृतं तज्जन्यमपूर्वम् । वित्तं पूर्वलब्धम् । वेद्यं इतः परं लब्धव्यं द्रव्यजातम् । भूतं पूर्वसिद्धं क्षेत्रादि । भविष्यत् संपत्स्यमानम् । सुगं सुष्ठु गन्तव्यं बन्धुजनयुक्तग्रामान्तरादि । सुपथं चोरादिरहितो मार्गः । ऋद्धं वर्धितं धनादिकं, अनुष्ठितकर्मफलं वा । ऋद्धिः अनुष्ठास्यमानसत्रफलम् । क्लृप्तं समर्थं स्वकार्यक्षमद्रव्यम् । क्लृप्तिः स्वकीयसामर्थ्यम् । मतिः पदार्थमात्रनिश्चयः । सुमतिः दुर्घटराजकार्यादिनिश्चयः ॥ २ ॥ इति द्वितीयोऽनुवाकः ॥

शंशब्द ऐहिकसुखवाची । मयःशब्द आमुष्मिकसुखवाची । प्रियं प्रीतिकारणं वस्तु । अनुकामः अनुकूलत्वनिमित्तेन काम्यमानः पदार्थः । एतदुभयं ऐहिकमेव तारतम्योपेतम् । काम आमुष्मिकः स्वर्गादिकः । सौमनसः मनःस्वास्थ्यकरो बन्धुवर्गः । भद्रं कल्याणमिहलोके रमणीयम् । श्रेयः परलोकहितम् । वस्यः निवासहेतुर्गृहादिः । यशः कीर्तिः । भगः सौभाग्यम् । द्रविणं धनम् । यन्ता नियामक आचार्यादिः । धर्ता पोषकः पित्रादिः । क्षेमो विद्यमानधनस्य रक्षणशक्तिः । धृतिर्धैर्यमापद्यपि निश्चलत्वम् । विश्वं सर्वजनानुकूल्यम् । महः पूजा । संवित् वेदशास्त्रादिविज्ञानम् । ज्ञात्रं ज्ञापयितृत्वसामर्थ्यम् । सूः पुत्रादिप्रेरणसामर्थ्यम् । प्रसूः भृत्यादिप्रेरणसामर्थ्यम् । सीरं गोलाङ्गलादिकृषिसाधनसंपत्तिः । लयः तत्प्रतिबन्धनिवृत्तिः । ऋतं यज्ञादिकर्म । अमृतं तत्फलम् । अयक्ष्मं राजयक्ष्मादिप्रबलव्याधिराहित्यम् । अनामयत् ज्वराद्यल्पव्याधिराहित्यम् । जीवातुः जीवनकारणं व्याधिपरिहारार्थमौषधम् । दीर्घायुत्वं अपमृत्युराहित्यम् । अनमित्रं वैरिराहित्यम् । अभयं भयराहित्यम् । सुगं शोभनगमनम् । सर्वैरङ्गीकृताचरणमित्यर्थः । शयनं शय्योपधानादिसंपत्तिः । सूषा स्नान-

सुदिनं च मे ॥ ३ ॥ ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे बहु च मे भूयश्च मे पूर्णं च मे पूर्णतरं च मेऽक्षितिश्च मे कूयवाश्च मेऽन्नं च मे क्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे मसुराश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे ॥ ४ ॥ अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपुश्च मे श्यामं च मे लोहं च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यं च मेऽकृष्टपच्यं च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्तां वित्तं च मे वित्तिश्च मे

---

सन्ध्यावन्दनादियुक्तः शोभनः प्रातःकालः । सुदिनं यज्ञदानाध्ययनादियुक्तं कृत्स्नं दिनम् ॥ ३ ॥ इति तृतीयोऽनुवाकः ॥

ऊर्क् अन्नसामान्यम् । सूनृता प्रियोक्तिः । पयःप्रभृतयोऽन्नविशेषाः । पयः क्षीरम् । रसः तत्रत्यं सारम् । घृतमधुनी प्रसिद्धे । सग्धिः बन्धुभिः सह भोजनमित्यर्थः । तथा सपीतिः सहपानम् । कृषिवृष्टी अन्नस्य हेतुत्वेन प्रसिद्धे । जैत्रं जयशीलं सुक्षेत्रमित्यर्थः । औद्भिद्यं उद्भिदां तरुगुल्मादीनामुत्पत्तिः । रयिः सुवर्णम् । रायो मणिमुक्तादिः । पुष्टं पूर्वोक्तमेव सुवर्णमतिसमृद्धम् । पुष्टिः शरीरपोषः । विभ्वादयोऽक्षित्यन्ता धान्यविषया उत्तरोत्तराभिवृद्धयः सत्यापि तारतम्येन द्रष्टव्याः । न केवलं प्रवृद्धान्येव धान्यानि किंत्वल्पान्यपीत्युच्यन्ते । कूयवाः कुत्सितयवाः । अन्नं प्रसिद्धम् । अक्षुत् अन्नसाध्यः क्षुत्परिहारः । व्रीहियवमाषतिलमुद्गाः प्रसिद्धाः । खल्वाः मुद्गेभ्योऽपि स्थूलबीजाः । अथर्ववेदभाष्ये तु 'खल्वाश्चणकाः' इति व्याख्यातम् । गोधूमाः प्रसिद्धाः । मसुराः मुद्गवत्सूपहेतवः । प्रियङ्गवः प्रसिद्धाः । अणवः सूक्ष्मशालयः । श्यामाकाः ग्राम्या धान्यविशेषाः । नीवारा आरण्याः ॥ ४ ॥ इति चतुर्थोऽनुवाकः ॥

अश्मादयः प्रसिद्धाः । श्यामं कृष्णायसम् । लोहं कांस्यताम्रादि । अग्न्यादयः प्रसिद्धाः । ग्राम्यारण्यपशवो यज्ञेन निमित्तीभूतेन कल्पन्तां समर्था भवन्तु । वित्तं पूर्वलब्धम् । वित्तिर्भाविलाभः । भूतं ऐश्वर्योपेतं पुत्रादिकम् । भूतिः स्वकीयमैश्वर्यादिकम् । वसु निवाससाधनं गवादिकम् । वसतिर्निवासाधारो गृहादिः । कर्म

भूतं च मे भूतिश्च मे वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे ॥ ५ ॥ अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे ॥ ६ ॥ अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऋतुग्रहाश्च मेऽतिग्राह्याश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयाश्च मे माहेन्द्रश्च म आदित्यश्च मे सावित्रश्च मे सारस्वतश्च

---

अग्निहोत्रादिकम् । शक्तिः तदनुष्ठानसामर्थ्यम् । अर्थः प्रयोजनविशेषः । एमः एतव्यं प्राप्तव्यं सुखम् । इतिः अयनं इष्टप्राप्त्युपायः । गतिः इष्टप्राप्तिः ॥ ५ ॥ इति पञ्चमोनुवाकः ॥

अग्न्यादयः प्रसिद्धा देवतास्तैः सर्वैः सह समानभागोपेतत्वादिन्द्र एकैकया देवतया सह पठ्यते । दिक्शब्देन प्राच्यादिचतस्र उच्यन्ते । मूर्धशब्देन चोर्ध्वा दिक् । सा च मुख्यत्वाभिप्रायेण पृथङ्निर्दिष्टा ॥ ६ ॥ इति षष्ठोऽनुवाकः ॥

अंश्वादयः सोमग्रहविशेषाः सोमप्रकरणे प्रसिद्धाः । तत्र रश्मिग्रहादर्शनाददाभ्यस्यैव ग्रहस्य गृह्यमाणत्वादंशं पृथक्कृत्य रश्मिशब्देन निर्दिश्यते । रश्मीनां तु तद्ग्रहणसाधनत्वात् । तथा च तद्ग्रहणमन्त्रः पठ्यते–'शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः' इति । अधिपतिशब्देन दधिग्रहो विवक्षितः । तस्य च श्रेष्ठत्वादाधिपत्यम् । अतएव श्रूयते–'ज्येष्ठो वा एष ग्रहाणां' इति । प्रतिप्रस्थानशब्देन द्विदेवत्यग्रहसहभावोऽप्रतिनिर्ग्राह्यो विवक्षितः । ध्रुवाख्यस्यैव ग्रहस्यावनयनदशायां वैश्वानरसूक्तपाठात्तदवस्थापन्नो वैश्वानरशब्देनोच्यते । आद्यो वैश्वदेवः प्रातःसवनगतः । उत्तरस्तृतीयसवनगतः । सारस्वतग्रहोऽभिषेचनीया-

मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे ॥ ७ ॥ इध्मश्च म बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म उपरवाश्च मेऽधिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृच्च म आधवनीयश्च म आग्नीध्रं च मे हविर्धानं च मे गृहाश्च मे सदश्च मे पुरोडाशाश्च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे ॥ ८ ॥ अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मे शक्वरीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृक्च मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा च मे तपश्च म ऋतुश्च मे व्रतं च मेऽहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे च मे यज्ञेन कल्पेतां ॥ ९ ॥ गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे

---

त्यविकृतौ द्रष्टव्यः । 'सारस्वतं ग्रहं गृह्णाति' इति तत्राम्नानात् । एवं पौष्णोऽपि विकृतिगामी द्रष्टव्यः ॥ ७ ॥ इति सप्तमोऽनुवाकः ॥

इध्मादीनि यज्ञाङ्गद्रव्याणि यज्ञप्रकरणे प्रसिद्धानि । गृहाः पत्नीशालादयः । पचताः शामित्रादयः । स्वगाकारः शंयुवाकः । तेन हि यथास्वं देवतानां हविर्गमनं क्रियते ॥ ८ ॥ इत्यष्टमोऽनुवाकः ॥

अग्निश्चीयमानो वह्निः । घर्मः प्रवर्ग्यः । 'इन्द्रायार्कवते पुरोडाशं' इति विहितो यागोऽर्कः । 'सौर्यं चरुं' इति विहितो यागः सूर्यः । 'प्राणाय स्वाहा' इति विहितो होमः प्राणः । अश्वमेधः प्रसिद्धः । पृथिव्यादयो देवताविशेषाः । शक्वरस्यायं शक्वर्यः । अङ्गुलयोऽङ्गुलिवद्विराट् पुरुषस्यावयवविशेषाः । दिशः प्राच्याद्याः । चशब्दाद्विदिशोऽपि । ताः सर्वाः मे मदीयेन यज्ञेन कल्पन्तां स्वस्वव्यापारसमर्था भवन्तु । ऋगादयो मन्त्रविशेषाः । स्तोमः सामावृत्तिरूपं स्तोत्रम् । दीक्षा यजमानसंस्कारः । तपः पापक्षयार्थमनशनादि । ऋतुः यज्ञाङ्गभूतः कालः । व्रतमेकाशनादि । अहोरात्रयोः संबन्धिनी या वृष्टिस्तया मदीयं सस्यं कल्पतामिति शेषः । बृहद्रथन्तरे सामनी । ते च मदीयेन यज्ञेन कल्पेतां स्वस्वव्यवहारसमर्थे भवेताम् ॥ ९ ॥ इति नवमोऽनुवाकः ॥

गर्भाः वत्साश्च प्रसिद्धाः । सार्धसंवत्सरो वत्सरूपः । पुङ्गवस्त्र्यविः । तथाविधा गौस्त्र्यवी । द्विसंवत्सर ऋषभो दित्यवाट् । तथाविधा गौर्दित्यौही । सार्धद्विसंवत्सर ऋषभः पञ्चाविः । तथाविधा गौः पञ्चावी । संवत्सरत्रयोपेत ऋषभस्त्रिवत्सः । तथाविधा गौस्त्रिवत्सा । सार्धत्रिवत्स ऋषभस्तुर्यवाट् । तथाविधा

त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे पष्ठवाच्च मे पष्ठौही च म उक्षा च मे वशा च म ऋषभश्च मे वेहच्च मेऽनड्वाश्च मे धेनुश्च म आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् ॥ १० ॥ एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चान्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ॥११॥ इडा देवहूर्मनु० ॥ इति रुद्राध्यायः ॥

---

गौस्तुर्यौही । चतुःसंवत्सर ऋषभः पष्ठवाट् । तथाविधा गौः पष्ठौही । सेचनसमर्थ ऋषभ उक्षा । वन्ध्या गौर्वशा । उक्षणोऽप्यधिकवयस्क ऋषभः । गर्भघातिनी गौर्वेहत् । शकटस्य वाहकोऽनड्वान् । नवप्रसूता गौर्धेनुः । आयुरादयः प्रसिद्धाः । आत्मा शरीरम् । उक्ता आयुरादयो मदीयेन यज्ञेन कार्यक्षमा भवन्तु । यज्ञः करिष्यमाणोऽश्वमेधादिः सोऽप्यनेनानुष्ठीयमानेन यज्ञेन स्वकार्यक्षमो भवतु ॥ १० ॥ इति दशमोऽनुवाकः ॥

एकादिशब्दाः संख्यापराः । वाजादयः सर्वे मम संत्विति शेषः । वाजोऽन्नम् । प्रसवस्तस्योत्पत्तिः । अपिजस्तस्यैव पुनःपुनरुत्पत्तिः । क्रतुः संकल्पो भोगादिविषयो यागो वा । सुवस्तस्योत्पत्तौ हेतुरादित्यः । मूर्धा द्यौः । व्यश्नियः विशेषेणाश्नुते व्याप्नोतीति व्यश्न आकाशादिस्तत्र भवो व्यश्नियः । आन्त्यायनः अन्ते जातः अन्त्यः अन्ते भवः स्थितः । भुवने भवः भौवनः । भुवनः जगदात्मकः । अधिपतिः अधिष्ठाय पालयिता । राजा इति अहोबलभाष्ये । अथवा वाजादयश्चैत्रादिमासानां नामविशेषाः । तदानीं ते सर्वे प्रीणन्त्विति वाक्यशेषः । चकाराः परस्परसमुच्चयार्थाः । अनुक्तकालादिदेवतासमुच्चयार्था वा ॥ ११ ॥ इत्येकादशोऽनुवाकः ॥

## वसोर्धारानुवाकः ।

वसोर्धारां जुहोति वसोर्मे धाराऽसदिति वा एषा हूयते घृतस्य वा एनमेषा धाराऽमुष्मिँल्लोके पिन्वमानोपतिष्ठत ॥ १ ॥ आज्येन जुहोति तेजो वा आज्यं तेजो वसोर्धारा तेजसैवाऽस्मै तेजोऽवरुन्धे ॥ २ ॥ अथो कामा वै वसोर्धारा कामानेवाऽवरुन्धे ॥ ३ ॥ यं कामयेत प्राणानस्याऽन्नाद्यं विच्छिन्द्यामिति विग्राहं तस्य जुहुयात्प्राणानेवाऽस्याऽन्नाद्यं विच्छिनत्ति ॥ ४ ॥ यं कामयेत प्राणानस्याऽन्नाद्यँ संतनुयामिति सन्ततां तस्य जुहुयात्प्राणानेवाऽस्याऽन्नाद्यँ संतनोति ॥ ५ ॥ द्वादश द्वादशानि जुहोति द्वादश मासाः संवत्सरः संवत्सरेणैवाऽस्मा अन्नमवरुन्धे ॥ ६ ॥ अन्नं च मे क्षुच्च म इत्याहैतद्वा अन्नस्य रूपँ रूपेणैवाऽन्नमवरुन्धे ॥ ७ ॥ अग्निश्च म आपश्च म इत्याहैषा वा अन्नस्य

---

यथोक्तैकादशानुवाकरूपमन्त्रसाध्यं होमं विधत्ते—वसोर्धनस्य धारा सान्तत्यं ययाहुत्या लभ्यते सेयमाहुतिर्वसोर्धारा तां जुहुयात् । तदेतदुक्तनिर्वचनं सूच्यते । यो यजमानो जुहोति स प्रथमं मम धननैरन्तर्यं भूयादित्येवं कामयते । ततस्तेनेयमाहुतिर्हूयते तेन होमेनैनं यजमानं स्वर्गे लोके घृतस्य धारा पिन्वमाना प्रीणयति सेवते १ तत्र द्रव्यं विधत्ते—सुवर्णादिधनसमृद्धेरपि ध्रुवं तेजोरूपत्वं प्रसिद्धम् २ कामप्राप्तिहेतुत्वेनापि तामाहुतिं प्रशंसति—३ अन्वयव्यतिरेकाभ्यां सांतत्यं विधत्ते—४ यस्य यजमानस्य प्राणानन्नं च विच्छिन्द्यामित्येवं द्विषन्नध्वर्युरेतं मन्त्रं मध्ये विगृह्य जुहुयात् । यस्तु प्राणानामन्नस्य सान्तत्यं कामयते सोऽयं सन्ततामाहुतिं जुहुयात् ५ अथ वाजश्च म इत्यादीन्यन्नं च मे क्षुच्च म इत्यतः प्राक्तनानि चतुश्चत्वारिंशदधिकशतसंख्याकानि वाक्यानि तानि द्वादश संघरूपेण विभज्य प्रशंसति । द्वादशानां वाक्यानां समूहो द्वादशम् । तानि च द्वादशानि पुनर्द्वादशसंख्याकानि । तथा सति चतुश्चत्वारिंशदधिकशतसंख्या संपद्यते । तदन्तर्गतद्वादशसंख्यायाः मासद्वारा संवत्सररूपत्वात् संवत्सरसाध्यमन्नं प्राप्नोति ६ अथ चतुर्थानुवाकगतानि वाक्यानि प्रशंसति—अन्नमित्यादिभिर्वाक्यैर्यत्प्रतिपाद्यं तत्सर्वमन्नस्य रूपम् । क्षुदभावस्यान्नसाध्यत्वादुपरितनानां च व्रीह्यादीनामन्नसाधनत्वात् ७ अथ पञ्चमानुवाकगतवाक्यानि प्रशंसति—अग्नेः पाकहेतुत्वादन्नयोनित्वम् । अपां चौषधिजनकत्वादन्नयोनित्वम् । एतन्मन्त्रपाठेनानेकप्रकारकारणसहितमन्नं प्राप्नोति ८ अथ षष्ठानुवाकगतानि वाक्यानि प्रशंसति—येषां वाक्या-

योनिः सयोन्येवाऽन्नमवरुन्धे ॥ ८ ॥ अर्धेन्द्राणि जुहोति देवता एवाऽवरुन्धे यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तम इन्द्रमुत्तरमाहेन्द्रियमेवाऽस्मिन्नुपरिष्टाद्दधाति ॥ ९ ॥ यज्ञायुधानि जुहोति यज्ञो वै यज्ञायुधानि यज्ञमेवाऽवरुन्धेऽथो एतद्वै यज्ञस्य रूपꣳरूपेणैव यज्ञमवरुन्धे ॥ १० ॥ अवभृथश्च मे स्वगाकारश्च म इत्याह स्वगाकृत्या ॥ ११ ॥ अग्निश्च मे घर्मश्च म इत्याहैतद्वै ब्रह्मवर्चसस्य रूपꣳ रूपेणैव ब्रह्मवर्चसमवरुन्धे ॥ १२ ॥ ऋक्च मे साम च म इत्याहैतद्वै छन्दसाꣳ रूपꣳ रूपेणैव छन्दाꣳस्यवरुन्धे ॥ १३ ॥ गर्भाश्च मे वत्साश्च म इत्याहैतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनवरुन्धे ॥ १४ ॥ कल्पाञ्जुहोत्यक्लृप्तस्य क्लृप्त्यै ॥ १५ ॥ युग्मदयुजे जुहोति

---

नामधेयेष्विन्द्रः पठ्यते तान्यर्धेन्द्राणि । तेषु वाक्येष्वग्नीषोमादीनां देवतानां पूर्वार्धेष्वाम्नातत्वाद्देवताः प्राप्नोति । यद्यस्मात्कारणात् । सर्वेषां वाक्यानां प्रत्यर्धमिन्द्रः पठ्यते तस्मात्कारणादयमिन्द्रो भूयिष्ठभाक्तमः । भूयिष्ठं प्रभूतं हविर्भजतीति भूयिष्ठभाक् अतिशयेन तादृशः । यस्माद्वेद इन्द्रमन्त्रोत्तरार्धगतं प्राह । तस्मादस्मिन्यजमानेऽप्युपरिष्टाच्छिरोभागे चक्षुरादीन्द्रियं स्थापयति ९ सप्तमाष्टमयोरनुवाकयोरवस्थितानि वाक्यानि प्रशंसति अंशुदाभ्यादिग्रहरूपाणि यज्ञसाधनानि साक्षाद्यज्ञनिष्पादकत्वाद्यज्ञस्वरूपाणि । इध्माबर्हिरादिभिर्यज्ञः परम्परया निरूप्यते । न तु ग्रहैरिव साक्षान्निष्पाद्यते । तस्मात्तानि यज्ञस्य रूपमेतैरन्तरङ्गैर्बहिरङ्गैश्च यज्ञायुधैर्यज्ञं प्राप्नोति १० अन्तिमस्य स्वगाकारवाच्यस्य तात्पर्यं दर्शयति स्वाधीनत्वकरणायेत्यर्थः ११ नवमानुवाके पूर्वार्धगतानि वाक्यानि प्रशंसति—अग्न्यादिभिर्ब्राह्मणकर्मनिष्पत्तेरेतेषां ब्रह्मवर्चसरूपत्वम् १२ एतस्मिन्नेवानुवाके उत्तरार्धगतानि वाक्यानि प्रशंसति—ऋगादिकं छन्दसां वेदानां स्वरूपमिति प्रसिद्धम् १३ दशमानुवाके पूर्वार्धगतवाक्यानि प्रशंसति—गर्भवत्सादीनां पशुरूपत्वं प्रसिद्धम् १४ अस्मिन्ननुवाके उत्तरार्धगतानि वाक्यानि प्रशंसति—'आयुर्यज्ञेन कल्पतां' इत्यादयो मन्त्राः कल्पाः । पूर्वं यद्यद्वस्त्वक्लृप्तं स्वस्वकार्यसमर्थं न भवति तस्य तस्य सामर्थ्यायायं होमः १५ एकादशानुवाके पूर्वभागगतानि वाक्यानि प्रशंसति—'चतस्रश्च मेऽष्टौ च मे' इत्यादिकं समसंख्यारूपं युग्मम् । 'एका च मे तिस्रश्च मे' इत्यादिविषमसंख्यारूपमयुग्मं राशिद्वयम् । स्त्रीपुरुषवत्परस्परविलक्षणत्वात् मिथुनत्वाय संपद्यते १६ राशि-

मिथुनत्वाय ॥ १६ ॥ उत्तरावती भवतोऽभिक्रान्त्या
॥ १७ ॥ एका च मे तिस्रश्च म इत्याह देवच्छन्दसं वा
एका च तिस्रश्च मनुष्यछन्दसं चतस्रश्चाऽष्टौ च देवच्छन्दसं
चैव मनुष्यच्छन्दसं चाऽवरुन्ध ॥ १८ ॥ आत्रयस्त्रिंश-
शतो जुहोति त्रयस्त्रिंशद्वै देवता देवता एवाऽवरुन्ध आ-
ष्टाचत्वारिंशतो जुहोत्यष्टाचत्वारिंशदक्षरा जगती जा-
गताः पशवो जगत्यै वाऽस्मै पशूनवरुन्धे इति ॥ १९ ॥
वाजश्च प्रसवश्चेति द्वादशं जुहोति द्वादशमासाः संवत्सरः
संवत्सर एव प्रतितिष्ठति ॥ २० ॥ वाजश्च मे प्रसवश्च
मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लो-
कश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे ॥ २१ ॥

इति वसोर्धारानुवाकः ॥

---

द्वयेऽप्युत्तरोत्तराधिक्यं प्रशंसति—एकत्वादुत्तरं त्रित्वम् । तस्माच्चोत्तरं पञ्चत्वम् । तथा चतुर्थादुत्तरमष्टत्वम् । तस्माच्चोत्तरं द्वादशत्वम् । एवमुभयोरुत्तरावधित्वेनाभितो व्याप्तिर्भवति १७ युग्मायुग्मसंख्यावाचिशब्दानां तात्पर्यं दर्शयति—विषमसंख्यया देवानां प्रियाणि छन्दांसि निष्पाद्यन्ते । समसंख्यया तु मनुष्यप्रियाणि । अतस्तदुभयं प्राप्नोति १८ राशिद्वयेऽप्युत्तरोत्तराधिक्यं प्रशंसति १९–२० अत्रास्मिन्ननुवाके उत्तरभागगतानि वाक्यानि प्रशंसति—अत्र विनियोगसंग्रहः 'अग्नाविष्णू' 'वसोर्धारां' एकादशभिरादितोऽनुवाकैर्जुहोत्येकामाहुतिं सन्ततां घृतादिति ॥ अथ मीमांसा ॥ द्वादशाध्यायस्य तृतीयपादे चिन्तितम् । 'मन्त्रादौ किं वसोर्धारा मन्त्रान्ते वात्र सन्ततेः । आद्यो होमेषु सन्तत्या द्वादशान्तेषु तद्धुतिः' अग्नौ किंचित्कर्म विहितं सन्ततां वसोर्धारां जुहोतीति । तत्र सान्तत्यमच्छिन्नत्वम् । तच्च मन्त्रकर्मणोः सहोपक्रमे सत्युपपद्यते । तस्मान्मन्त्रादौ कर्मसन्निपात इति प्राप्ते ब्रूमः । अस्मिन् वसोर्धाराकर्मणि 'द्वादश द्वादशानि जुहोति' इति श्रुतेः द्वादशभिर्मन्त्रवाक्यैः संपाद्यमेकाहुतिस्वरूपम् । तद्यथा । इत्येतैर्द्वादशभिर्मन्त्रवाक्यैरेकाहुतिर्होतव्या । ईदृशा उत्तरा आहुतयः 'प्राणश्च मेऽपानश्च मे' इत्यादिभिर्निष्पाद्याः । ते च होमा द्वादश । तेषु मध्ये विलम्बाभावः सान्तत्यम् । नतु मन्त्रकर्मणोः सहोपक्रमः । तस्मात्पूर्वन्यायेन मन्त्रान्ते कर्मसंनिपातस्य नास्ति विघ्नः ॥ २१ ॥ इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके चमकभाष्ये एकादशोऽनुवाकश्च संपूर्णः ॥

# अथ रुद्रसूक्तानि ।

कद्रुद्रायेति नवर्चस्य घौरः कण्वो रुद्रो गायत्री ॥ ॐकद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे ॥ वोचेम शंतमं हृदे ॥ १ ॥ यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे ॥ यथा तोकाय रुद्रियं ॥ २ ॥ यथा नो मित्रो वरुणो यथा रुद्रश्चिकेतति ॥ यथा

---

( कद्रुद्राय १।३।२६ ) कत् कदा रुद्राय एतन्नामकाय देवाय शंतममतिशयेन सुखकरं स्तोत्रं वोचेम पठेम । कीदृशाय । प्रचेतसे प्रकृष्टज्ञानयुक्ताय मीढुष्टमाय सेक्तृकामाय । अभीष्टकामवर्षायेत्यर्थः । तव्यसे अतिशयेन प्रवृद्धाय । हृदेऽस्मदीयहृन्निष्ठाय । कत् कदा अन्त्यलोपश्छान्दसः । रुद्राय रोदयति सर्वमन्तकाले इति रुद्रः 'रोदेर्णिलुक्' इति रक् प्रत्ययः, प्रचेतसे 'चिती संज्ञाने' प्रकृष्टं चेततीति प्रचेताः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इत्यसुन्पूर्वपदप्रकृतिस्वरत्वं च । मीढुष्टमाय अतिशयेन मीढ्वान्मीढुष्टमः 'दाश्वान्साह्वान्मीढ्वांश्च' इति क्वसुप्रत्ययान्तो निपातितः । तमपि अयस्मयादित्वेन भत्वात् 'वसोः संप्रसारणम्' इति संप्रसारणम् 'शासिवसिघसीनां च' इति षत्वम् । तव्यसे तवतिर्वृद्ध्यर्थः सौत्रो धातुः । अतिशयेन तविता तवीयान् 'तुश्छन्दसि' इतीयसुन्प्रत्ययः । 'तुरिष्ठेमेयस्सु' इति तृलोपः । ईयसुन ईकारलोपश्छान्दसः । नित्वादाद्युदात्तत्वम् । वोचेम वच परिभाषणे 'लिङ्याशिष्यङ्' 'वच उम्' इत्युमागमः यासुटः स्वरेण एकार उदात्तः । हृदे 'पद्दन्–' इत्यादिना हृदयशब्दस्य हृदादेशः । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् ॥ १ ॥—अदितिर्भूमिर्नोऽस्माकं रुद्रियं रुद्रसंबन्धि भेषजं यथा येन प्रकारेण सिद्ध्यति तथा करत् करोतु । किंच यथा येन प्रकारेण पश्वेऽस्मदीयाश्वमहिष्यादिपशवे नृभ्योऽस्मदीयपुरुषेभ्यः विशेषेण गवे गोजातये हितं रुद्रियं सिध्यति तथा करोतु । किंच तोकायास्मदीयपुत्राय रुद्रियं यथा सिध्यति तथा करोतु । भेषजस्य रुद्रसंबन्धित्वं मन्त्रान्तरे समाम्नातम्—'या ते रुद्र शिवा तनूः शिवा विश्वाह भेषजी । शिवा रुद्रस्य भेषजी' इति । गवादिविषयभेषजं चान्यत्र स्पष्टमाम्नातम्—'भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजं सुभेषजम्' इति । करत् डुकृञ् करणे लङि व्यत्ययेन शप् । यद्वा लेट्यडागमः 'इतश्च लोपः' इतीकारलोपः । यद्वा लुङि 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङादेशः । 'ऋदृशोऽङि गुणः' इति गुणः । आद्ययोः पक्षयोः प्रत्ययस्य पित्वादनुदात्तत्वे धातुस्वरः । तृतीये तु व्यत्ययेन यद्वृत्तयोगादनिघातः । पश्वे संज्ञापूर्वकस्य विधेरनित्यत्वात् 'घेर्ङिति' इति गुणाभावः यणादेशः । नृभ्यः 'नृ चान्यतरस्याम्' इति विभक्त्युदात्तत्वाभावः । गवे 'सावेकाचः' इति प्राप्तस्य विभक्त्युदात्तस्य 'नगोश्वन्सावर्णयोः' इति प्रतिषेधः । रुद्रियं रुद्रशब्दात् 'तस्येदम्' इत्यर्थे घप्रत्ययः ॥ २ ॥ मित्रो वरुणश्च नोऽस्मान् यथा येन प्रकारेण चिकेतति सजोषसः समानप्रीतयो विश्वे सर्वे देवा यथा चिकेतन्ति तथा भवत्विति शेषः । यद्वा यथाशब्दोपेतमन्त्रद्वयस्य तथा

विश्वे॑ स॒जोष॑सः ॥ ३ ॥ गा॒थप॑तिं मे॒धप॑तिं रु॒द्रं जला॑षभेषजम् ॥ तच्छं॒योः सु॒म्नमी॑महे ॥ ४ ॥ यः शु॒क्र इ॑व॒ सूर्यो॒ हिर॑ण्यमिव॒ रोच॑ते ॥ श्रेष्ठो॑ दे॒वानां॒ वसुः॑ ॥ ५ ॥ शं नः॑ कर॒त्यर्व॑ते सु॒गं

कदा वोचमेति पूर्वत्रान्वयः । चिकेतति कित ज्ञाने लेट्यडागमः 'नाभ्यस्तस्य' इति गुणनिषेधो न भवति 'बहुलं छन्दसीति वक्तव्यम्' इति वचनात्सार्वधातुकत्वाच्च 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । सजोषः जुषी प्रीतिसेवनयोः समानं जुषन्तीति सजोषसः 'समानस्य छन्दसि' इति सभावः । असुनो नित्त्वादुत्तरपदस्याद्युदात्तत्वं तदेव कृदुत्तरप्रकृतिस्वरत्वेन शिष्यते ॥ ३ ॥ रुद्रमभिलक्ष्य वयं शंयोः बृहस्पतिपुत्रस्य संबन्धि तत्प्रसिद्धं सर्वप्रजाभ्यो हितं सुम्नं सुखमीमहे याचामहे । कीदृशं रुद्रम् । गाथपतिं स्तुतिपालकं मेधपतिं यज्ञपालकं जलाषभेषजं सुखरूपौषधोपेतं । यद्वा उदकरूपौषधोपेतम् । उदकं हि रुद्रनामाभिमन्त्रित सदौषधं भवति । गाथपतिं गाथेति वाङ्नाम 'गाथा गणः' इति तन्नामसु पठितत्वाद्वाग्रूपायाः स्तुतेः पतिर्गाथपतिः । कैगै शब्दे 'आदेच—' इत्यात्वम् । 'उषिकुषिगार्तिभ्यस्थन्' इति थन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति पूर्वपदस्य ह्रस्वत्वम् । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरे प्राप्ते 'मरुद्वृधादीनां छन्दस्युपसंख्यानम्' इति पूर्वपदान्तोदात्तत्वम् । मेधपतिं पूर्ववत् । जलाषभेषजम् जनी प्रादुर्भावे जायन्त इति जाः 'अन्येष्वपि दृश्यते' इति दृशिग्रहणात्केवलादपि डप्रत्ययः । लाषः लष कान्तौ कान्तिरभिलाषः भावे घञ् । जानां लाषो यस्मिंस्तज्जलाषं सुखं जलाषरूपं भेषजं यस्मिन्रुद्रे स जलाषभेषजः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । शंयोः 'कंशंभ्याम्' इति मत्वर्थीयो युस्प्रत्ययः । 'सिति च' इति पदसंज्ञायामनुस्वारपरसवर्णौ प्रत्ययस्वरः ॥ ४ ॥ यो रुद्रः सूर्य इव शुक्रः सूर्य इव दीप्तिमान्हिरण्यमिव रोचते । यथा सर्वेषां प्राणिनां हिरण्यं प्रीतिकरं भवति तथा रुद्रोऽपि । स च देवानां सर्वेषां मध्ये श्रेष्ठः वसुर्निवासहेतुश्च । रोचते रुच दीप्तावभिप्रीतौ च अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । श्रेष्ठः प्रशस्यतरः प्रशस्य शब्दादिष्ठनि 'प्रशस्यस्य श्रः' इति श्रादेशः । नित्त्वादाद्युदात्तत्वम् । वसुः वासयति सर्वमिति वसुः । वस निवासे अन्तर्भावितण्यर्थात् 'शृस्वृस्निहि' इत्यादिना उप्रत्ययः निदित्यनुवृत्तेराद्युदात्तत्वम् ॥ ५ ॥ नोऽस्माकं संबन्धिभ्योऽर्वदादिभ्यः सुगं सुष्ठुगम्यं शं सुखं करति देवः करोति । अर्वतेऽश्वाय अर्वन्शब्दोऽश्वनाम 'अर्वा वाजी' इति तन्नामसु पाठात् । मेषाय मेषजातिपुरुषाय मेष्ये तज्जातीयस्त्रियै नृभ्यः पुरुषेभ्यः नारिभ्यः स्त्रीभ्यः गवे गोजातये । करति डुकृञ् करणे व्यत्ययेन शप् । अर्वते अर्वति गच्छतीत्यर्वा 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप् चतुर्थ्येकवचने 'अर्वणस्त्रसावनञः' इति नकारस्य तृ आदेशः वनिप्सुपौ पित्त्वादनुदात्तौ धातुस्वरः । मेषाय मिष स्पर्धायाम् पचाद्यच् । 'देवसेनमेषादयः पचादिषु द्रष्टव्याः' इति वचनात् । मेष्ये 'जातेरस्त्रीविषयादयोपधात्' इति ङीप्,

मेषाय मेष्यै ॥ नृभ्यो नारिभ्यो गवे ॥ ६ ॥ अस्मे सोम श्रियमधि निधेहि शतस्य नृणाम् ॥ महि श्रवस्तुविनृम्णम् ॥ ७ ॥ मा नः सोम परिबाधो मारातयो जुहुरन्त ॥ आ न इन्दो वाजे भज ॥ ८ ॥ यास्ते प्रजा अमृतस्य परस्मिन्धामन्नृतस्य ॥ मूर्धा नाभा सोम वेन आभूषन्तीः सोम वेदः ॥ ९ ॥

---

प्रत्ययस्वरः । चतुर्थ्येकवचने आगमानुशासनस्यानित्यत्वादाडागमाभावः 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्ये'ति स्वरितत्वम् । 'उदात्तयणो हल्पूर्वात्' इति तु न भवति 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् । नृभ्यः 'सावेकाचः' इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'नृ चान्यतरस्याम्' इति प्रतिषेधः । नारिभ्यः 'नृनरयोर्वृद्धिश्च' इति शार्ङ्गरवादिषु पाठान्ङीन्प्रत्ययः नित्त्वादाद्युदात्तः । गवे 'न गोश्वन्साववर्ण–' इति विभक्त्युदात्तस्य प्रतिषेधः ॥ ६ ॥—हे सोम देव, नृणां पुरुषाणां शतस्य पर्याप्तां श्रियं अस्मेऽस्मासु अधिनिधेह्याधिक्येन स्थापय । तथा महि महत् तुविनृम्णं प्रभूतबलयुक्तं श्रवोऽन्नमधिनिधेहि । अस्मे 'सुपां सुलुक्' इति सप्तम्याः शे आदेशः । नृणाम् 'नृ च' इति दीर्घप्रतिषेधः । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । महीत्यादयो गताः ॥ ७ ॥—सोमपरिबाधः सोमस्य परितो बाधकाः । यागरहिताः नोऽस्मान्मा जुहुरन्त मा हिंसन्तु । तथा अरातयः शत्रवो मा जुहुरन्त । हे इन्दो सोम, वाजे बलविषयेऽन्नविषये वा नोऽस्मानाभज सर्वतः सेवस्व । सोमपरिबाधः सोमं परिबाधन्ते ये ते तादृशाः 'क्विप् च' इति क्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् । अरातयः रा दाने 'कृत्यल्युटो बहुलम्' इति बहुलवचनात्कर्तरि क्तिन् । यद्वा 'क्तिच् क्तौ च संज्ञायाम्' इति क्तिच् नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् । जुहुरन्त हृ प्रसह्यकरणे व्यत्ययेनात्मनेपदम् । लङि जुहोत्यादित्वाच्छुः । 'बहुलं छन्दसि' इति बहुलवचनादिकारस्याप्युत्वम् द्विर्भावहलादिशेषौ 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् 'अदभ्यस्तात्' इत्यदादेशाभावे सति 'झोऽन्तः' इत्यन्तादेशः 'न माङ्योगे' इत्यडभावः ॥ ८ ॥—हे सोम, ते तव संबन्धिन्यो याः प्रजाः सन्ति स्तोत्रं वा कुर्वन्ति ताः प्रजाः मूर्धा शिरःस्थानीयस्त्वं नाभा संनहनयुक्ते यज्ञगृहे वेनः कामयस्व । कीदृशस्य ते । अमृतस्य मरणरहितस्य परस्मिन्धामन्नृतस्योत्तमे स्थाने प्राप्तस्य हे सोम, आभूषन्तीः सर्वतस्त्वामलंकुर्वन्तीः प्रजाः वेद जानीहि । धामन् 'सुपां सुलुक्' इति सप्तम्या लुक् । नाभा णह बन्धने 'नहो भश्च' इति कर्मणि इञ्प्रत्ययः ञित्वादाद्युदात्तत्वम् 'सुपां सुलुक्' इति सप्तम्या डादेशः । वेनः वेनतिः कान्तिकर्मा लेटि सिप्यडागमः 'तिङ्ङतिङः' इति निघातः । आभूषन्तीः भूष अलंकारे भौवादिकः शपः पित्वादनुदात्तत्वम् । शपश्च लसर्वधातुकस्वरेणाद्युदात्तत्वम् । समासेन कृदुत्तरपदप्रकृतिस्वरत्वम् । वेदः विद ज्ञाने लेटि सिप्यडागमः ॥ ९ ॥

इमा रुद्राय तवस इत्येकादशर्चस्य सूक्तस्य कुत्सो रुद्रो जगती ॥ ( १।८।५ ) ॐ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ॥ यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरं॥ १ ॥ मृळा नो रुद्रो तनो मयस्कृधि क्षयद्वीराय नमसा विधेम ते॥ यच्छं च योश्च मनुरायेजे पिता तदश्याम तव

---

( इमारुद्रायतवसे १।८।५ ) रुद्राय रोदयति सर्वमन्तकाले इति रुद्रः । यद्वा रुत्संसाराख्यं दुःखं तत् द्रावयत्यपगमयति विनाशयतीति रुद्रः । यद्वा रुतः शब्दरूपा उपनिषदः ताभिर्द्रूयते गम्यते प्रतिपाद्यत इति रुद्रः । यद्वा रुत् शब्दात्मिका वाणी तत्प्रतिपाद्यात्मविद्या वा तामुपासकेभ्यो राति ददातीति रुद्रः । यद्वा रुणद्धि आवृणोतीति रुत् अन्धकारादि तं दृणाति विदारयतीति रुद्रः । यद्वा कदाचिद्देवासुरसंग्रामे अग्न्यात्मको रुद्रो देवैर्निक्षिप्तं धनमपहृत्य निरगात् । असुराञ्जित्वा देवा एनमन्विष्य दृष्ट्वा धनमहरन् तदानीमरुदत् तस्माद्रुद्र इत्याख्यायते । तथाच तैत्तिरीयकम्—‘सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्’ इति । तस्मै रुद्राय मतीः मननीया इमाः स्तुतीः प्रभरामहे प्रकर्षेण निष्पादयामः । कीदृशाय । तवसे प्रवृद्धाय कपर्दिने जटिलाय क्षयद्वीराय क्षयन्तो विनश्यन्तो वीरा यस्मिन् तादृशाय । यद्वा क्षयतिरैश्वर्यकर्मा । क्षयन्तः प्राप्तैश्वर्या वीरा मरुद्गणाः पुत्रा यस्य तस्मै । यथा येन प्रकारेण शं शमनीयानां रोगाणां उपशमनं द्विपदे अस्मदीयाय मनुष्याय चतुष्पदे गवाश्वप्रभृतये च असत् भवेत् तेन प्रकारेण स्तुतीः कुर्म इत्यर्थः । अतोऽस्मिन्नस्मदीये ग्रामे वर्तमानं विश्वं सर्वं प्राणिजातं अनातुरं आतुरा रुग्णास्तै रहितं सत् पुष्टं प्रवृद्धं भवतु ॥ रुद्राय ‘रोदेर्णिलुक् च’ इति लुक् । तवसे तवतिर्वृद्ध्यर्थः सौत्रो धातुः औणादिकोऽसितुप्रत्ययः । क्षयद्वीराय क्षि क्षये लटः शतृ ‘छन्दस्युभयथा’ इति शतुरार्धधातुकत्वेन अदुपदेशाल्लसार्वधातुकानुदात्तत्वात्तस्यैव स्वरः शिष्यते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । असत् अस् भुवि लेट्यडागमः ‘इतश्च लोपः’ इतीकारलोपः । द्विपदे द्वौ पादावस्य ‘संख्यासुपूर्वस्य’ इति पादशब्दस्यान्त्यलोपः समासान्तः । चतुर्थ्येकवचने भसंज्ञायां ‘पादः पत्’ इति पद्भावः । एकदेशविकृतस्यानन्यत्वात् ‘द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ’ इत्युत्तरपदाद्युदात्तत्वम् । चतुष्पदे ‘स्वरवर्जं पूर्वपदप्रकृतिस्वरत्वं पूर्वपदं च । ‘त्रः संख्यायाः’ इत्याद्युदात्तत्वम् ॥ १ ॥—हे रुद्र, नोऽस्मभ्यमस्मदर्थं मृळ त्वं सुखयिता भव । उत अपिच तदनन्तरं नोऽस्माकं मयः सुखं कृधि कुरु । वयं च क्षयद्वीराय क्षयितं सर्ववीरं प्राप्तैश्वर्यैर्मरुद्भिरुक्तं वा ते त्वां नमसा हविर्लक्षणेनान्नेन नमस्कारेण वा विधेम परिचरेम । विधतिः परिचरणकर्मा । अपिच पिता उत्पादको मनुः स्वकीयाभ्यः प्रजाभ्यः शं रोगाणां शमनं योश्च भयानां यावनं च यदेतद्द्वयं आयेजे देवेभ्यः सकाशात्प्राप्य दत्तवान् हे रुद्र, तव प्रणीतिषु प्रकृष्टनयनेषु सत्सु तद्द्वयं अश्याम व्याप्नुयाम ॥ मृळ मृड सुखाने तौदादिकः ‘द्व्यचोतस्तिङः’ इति संहितायां दीर्घः । कृधि करोतेर्लोटि ‘बहुलं छन्दसि’ इति विक-

रुद्र प्रणीतिषु ॥ २ ॥ अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः ॥ सुम्नायन्निद्विशो अस्माकमाचरारिष्टवीरा जुहवाम ते हविः ॥ ३ ॥ त्वेषं वयं रुद्रं यज्ञसाधं वङ्कुं कविमवसे निह्वयामहे ॥ आरे अस्मद्दैव्यं हेळो अस्यतु सुमतिमिद्वयमस्यावृणीमहे ॥ ४ ॥ दिवो वराहमरुषं कपर्दिनं त्वेषं

रणस्य लुक् 'श्रुश्रृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिः 'अतः कृकमि–' इति मयसो विसर्जनीयस्य सत्वम् । क्षयद्वीराय 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी । विधेम विध विधाने तौदादिकः । आयेजे यज देवपूजासंगतिकरणदानेषु लिटि संज्ञापूर्वकस्य विधेरनित्यत्वात्संप्रसारणाभावे एत्वाभ्यासलोपौ । अश्याम अशू व्याप्तौ व्यत्ययेन परस्मैपदम् 'बहुलं छन्दसि' इति विकरणस्य लुक् ॥ २ ॥—हे मीढुः सेक्तः कामाभिवर्षक नित्यतरुण वा रुद्र, क्षयद्वीरस्य क्षयितप्रतिपक्षस्य मरुद्भिर्युक्तस्य वा तव सुमतिं शोभनां कल्याणीं अनुग्रहात्मिकां बुद्धिं ते त्वत्संबन्धिनो वयं देवयज्यया देवयागेन त्वद्देवत्येन यज्ञेन अश्याम व्याप्नवाम । त्वं चास्माकं विशः प्रजा अभिलक्ष्य आचर आगच्छ । किं कुर्वन् सुम्नायन्नित् सुम्नमिति सुखनाम तासां प्रजानां सुखमिच्छन्नेव सुखप्रद एव भवेत्यर्थः । ततो वयं अरिष्टवीरा वीर्याज्जायन्त इति वीराः प्रजाः अरिष्टा अहिंसिता वीरा येषां तथाभूताः सन्तः ते तुभ्यं हविः चरुपुरोडाशादिकं जुहवाम चोदिते आधारे प्रक्षिपाम । सुमतिं मतिर्मननं । शोभनं गमनं यस्यां बुद्धौ सा सुमतिः 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । देवयज्यया 'छन्दसि निष्टर्क्य' इत्यादौ यजेर्यप्रत्ययो निपात्यते स्त्रीलिङ्गता च । मीढ्वः मिह सेचने 'दाश्वान्साह्वान्मीढ्वान्' इति क्वसुप्रत्ययान्तो निपातितः 'मतुवसोरु–' इति रुत्वम् । सुम्नायन् । सुम्नं परेषामिच्छति 'छन्दसि परेच्छायामपि'इति क्यच् 'नच्छन्दस्यपुत्रस्य' इतीत्वदीर्घयोर्निषेधः । 'देवसुम्नयोर्यजुषि काठके' इति विधीयमानमात्वं व्यत्ययेनात्रापि द्रष्टव्यम् ॥ ३ ॥–अवसे रक्षणाय रुद्रं महादेवं निह्वयामहे नितरामाह्वयामः । कीदृशम् । त्वेषं दीप्तं यज्ञसाधं यज्ञस्य साधयितारं एष हि यज्ञं स्विष्टं करोति । तथाच तैत्तिरीयके–'देवा वै यज्ञाद्रुद्रमन्तरात्' इत्युपक्रम्याम्नातम्—'स्विष्टं वै न इदं भविष्यति यदिमꣳराधयिष्याम इति तत्स्विष्टकृतः स्विष्टकृत्त्वम्' इति । वङ्कुं कुटिलगन्तारं कविं क्रान्तदर्शिनम् । स च रुद्रः दैव्यं देवस्य द्योतमानस्य संबन्धिनं हेळः क्रोधं अस्मदारे अस्मत्तो दूरदेशे अस्यतु प्रेरयतु । अस्य महादेवस्य सुमतिमित् शोभनामनुग्रहरूपां बुद्धिमेव वयमावृणीमहे आभिमुख्येन संभजामहे । यज्ञसाधं यज्ञं साधयतीति यज्ञसात् षिधु संराद्धौ 'सिध्यतेरपारलौकिके' इत्यात्वम् । यद्वा राध साध संसिद्धौ अस्माण्ण्यन्तात्क्विप् । वङ्कुं वकि कौटिल्ये औणादिक उप्रत्ययः । निह्वयामहे 'निसमुपविभ्यो ह्वः' इत्यात्मनेपदम् । दैव्यं 'देवाद्यञञौ' इति प्राग्दीव्यतीयो यञ् । अस्यतु असु क्षेपणे दैवादिकः । वृणीमहे वृङ् संभक्तौ क्रैयादिकः ॥ ४ ॥—वराहं वराहारमुत्कृष्टभोजनम् । यद्वा

रूपं नमसा नि ह्वयामहे । हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं यंसत् ॥ ५ ॥ इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम् ॥ रास्वा च नो अमृतमर्तभोजनं त्मने तोकाय तनयाय मृळ ॥ ६ ॥ मा नो महान्तं-

वराहवत् दृढाङ्गं अरुषम् आरोचमानं कपर्दिनं जटाभिर्युक्तं त्वेषं तेजसा दीप्यमानं रूपं निरूपणीयं वेदान्तैरधिगम्यं एवंभूतं रुद्रं नमसा हविर्लक्षणेनान्नेन नमस्कारेण वा दिवो द्युलोकसकाशान्निह्वयामहे नितरामाह्वयामः । स आहूतो रुद्रः हस्ते स्वकीये बाहौ वीर्याणि सर्वैर्वरणीयानि भेषजा भैषज्यानि रोगशमनहेतुभूतानि बिभ्रद्धारयन् अस्मभ्यं स्तोतृभ्यः शर्म आरोग्यलक्षणं सुखं वर्म आयुधानां निवारकं कवचं छर्दिः गृहनामैतत् । गृहं सत् प्रयच्छतु ॥ बिभ्रत् डुभृञ् धारणपोषणयोः जौहोत्यादिकः लटः शतृ 'भृञामित्' इत्यभ्यासस्येत्वम् । भेषजा भिषज चिकित्सायाम् कण्ड्वादिः पचाद्यच् अतोलोपयलोपौ 'सुमङ्गलभेषजाच्च' इति निपातनाद्रूपसिद्धिः । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । वार्याणि वृङ् संभक्तौ 'ऋहलोर्ण्यत्' 'ईडवन्द–' इत्याद्युदात्तत्वम् । छर्दिः उच्छृदिर् दीप्तिदेवनयोः छृद्यते दीप्यते सुवर्णादिभिर्धनैः प्रकाश्यते इति छर्दिर्गृहं 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इस्' । यंसत् यम उपरमे लेट्यडागमः 'सिब्बहुलं लेटि' इति सिप् 'इतश्च लोपः' इतीकारलोपः ॥५॥–इदं स्तुतिलक्षणं वचः मरुतां एकोनपञ्चाशत्संख्यानां देवविशेषाणां पित्रे जनकाय रुद्रायेश्वराय उच्यते उच्चारयति । कीदृशम् । स्वादोः स्वादीयः रसवतो मधुघृतादेरपि स्वादुतरम् । अतिशयेन हर्षजनकमित्यर्थः । वर्धनं स्तुत्यस्य प्रवर्धकम् । स्तोत्रेण हि देवता हृष्टा सती वर्धते । रुद्रस्य च मरुतां पितृत्वमेवमाम्नायते–पुरा कदाचिदिन्द्रोऽसुरान् जिगाय तदानीं दितिरसुरमाता इन्द्रहननसमर्थं पुत्रं कामयमाना तपसा भर्तुः सकाशाद्गर्भं लेभे । इमं वृत्तान्तमवगच्छन् इन्द्रो वज्रहस्तः सन् सूक्ष्मरूपो भूत्वा तस्या उदरं प्रविश्य तं गर्भं सप्तधा बिभेद । पुनरप्येकैकं सप्तखण्डमकरोत् । ते सर्वे गर्भैकदेशाः योनेर्निर्गत्यारुदन् । एतस्मिन्नवसरे लीलार्थं गच्छन्तौ पार्वतीपरमेश्वरौ इमान्ददृशतुः । महेशं प्रति पार्वत्येवमवोचत् । इमे मांसखण्डाः यथा प्रत्येकं पुत्राः संपद्यन्तां एवं त्वया कार्यं मयि चेत्प्रीतिरस्तीति । स च महेश्वरस्तान्समानरूपान्समानवयसः समानालंकारान्पुत्रान्कृत्वा गौर्यै प्रददौ तवेमे पुत्राः सन्त्विति । अतः सर्वेषु मारुतेषु सूक्तेषु मरुतो रुद्रपुत्रा इति स्तूयन्ते । रौद्रेषु च मरुतां पिता रुद्र इति । अपि च हे अमृत मरणरहित रुद्र, मर्तभोजनं मर्तानां मनुष्याणां भोगपर्याप्तमन्नं नोऽस्मभ्यं रास्व प्रयच्छ । तथा त्मने आत्मने द्वितीयार्थे चतुर्थी । मां तोकाय तोकं पुत्रं तनयं तत्पुत्रं च मृळय सुखय । पित्रे 'उदात्तयण' इति विभक्तेरुदात्तत्वम् । रास्व रा दाने व्यत्ययेनात्मनेपदम् । त्मने 'मन्त्रेष्वाङ्यादेरात्मनः' इत्यत्र 'आङोऽन्यत्रापि छन्दसि दृश्यते' इति वचनादात्मन आकारलोपः ॥६॥–हे रुद्र, नोऽस्माकं मध्ये महान्तं वृद्धं मा वधीः मा हिंसीः ।

मुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् ॥ मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः॥७॥ मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः ॥ वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ ८ ॥ उप ते स्तोमान्पशुपा इवाकरं रास्वा पितर्मरुतां सुम्नमस्मे ॥ भद्रा हि ते सुमतिर्मृळयत्तमाथा वयमव इत्ते वृणीमहे ॥ ९ ॥ आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे

---

उत अपिच नोऽस्माकं अर्भकं बालं मा हिंसीः। तथा नोऽस्माकं मध्ये उक्षन्तं सेक्तारं मध्यवयस्कं युवानं मा वधीः। उत अपिच नोऽस्माकमुक्षितं गर्भरूपेण स्त्रीषु निषिक्तमपत्यं मा वधीः। तथा नोऽस्माकं पितरं जनकं मा वधीः । उत अपिच मातरं जननीं मा वधीः। तथा नोऽस्माकं प्रियाः स्नेहविषयास्तन्वः शरीराणि तनूषु भवाः प्रजा वा हे रुद्र, मा रीरिषः मा हिंसीः ॥ वधीः हन्तेर्माङि 'लुङि च' इति वधादेशः। स चाहन्तः सिच इट् अतो लोपस्य स्थानिवद्भावाद्वृद्ध्यभावः। रीरिषः रिष हिंसायाम् ण्यन्ताल्लुङि चङि णिलोपोपधाह्रस्वत्वादीनि। छान्दसः पदकालीनोऽभ्यासह्रस्वः ॥ ७ ॥—हे रुद्र, नोऽस्माकं तोकादिविषये मा रीरिषः मा हिंसीः। तोकशब्दः पुत्रवाची। तनयस्तत्पुत्रः । आयुरित्यन्तोदात्तं मनुष्यनाम। पुत्रपौत्रव्यतिरिक्तो योऽस्मदीयो मनुष्यस्तस्मिन् हिंसां मा कृथाः। तथा हे रुद्र, वीरान् विक्रान्तान् शौर्योपेतानस्मदीयान् भामितः क्रुद्धः सन् मा वधीर्मा हिंसीः । वयं च हविष्मन्तो हविर्भिर्युक्ताः सन्तः सदमित् सर्वदैव त्वां हवामहे आह्वयामहे ॥ आयौ इण् गतौ 'छन्दसीणः' इत्युण् प्रत्ययः। भामितः भाम क्रोधे 'क्तोऽधिकरणे च' इति कर्तरि क्तः । हवामहे ह्वेञो लटि 'बहुलं छन्दसि' इति संप्रसारणम् ॥८॥—हे रुद्र, स्तोमान् स्तुतिरूपान्मन्त्रान् ते तुभ्यं उपाकरम् उपाकरोमि समर्पयामि । तत्र दृष्टान्तः—यथा पशूनां पालयिता गोपः प्रातःकाले स्वस्मै समर्पितान्पशून् सायंकाले स्वामिभ्यः प्रत्यर्पयति एवं त्वत्सकाशाल्लब्धान्स्तुतिरूपान्मन्त्रान् स्तुतिसाधनतया तुभ्यं प्रत्यर्पयामीत्यर्थः। हे मरुतां पितः मरुत्संज्ञानां देवानामुत्पादक रुद्र, नोऽस्मभ्यं सुम्नं सुखं रास्व देहि। अपिच ते त्वदीया सुमतिः कल्याणी बुद्धिः मृळयत्तमा अतिशयेन सुखयितृतमा । अतएव भद्रा भजनीया। हि यस्मादेवं तस्मात् अथानन्तरं वयं ते त्वदीयमवो रक्षणं वृणीमहे संभजामहे ॥ अकरं 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङ् 'कृमृदृरुहिभ्यः' इति च्लेरङादेशः । 'ऋदृशोऽङि गुणः'। पितुर्मरुतां परमपि छन्दसीति परस्याः षष्ठ्याः पूर्वामन्त्रितानुप्रवेशे सति 'आमन्त्रितस्य च' इति पदद्वयमनुदात्तम्। अस्मे 'सुपां सुलुक्' इति चतुर्थीबहुवचनस्य शे आदेशः। मृळयत्तमा मृड सुखने अस्माण्ण्यन्ताल्लटः शतृ तस्य 'छन्दस्युभयथा' इत्यार्धधातुकत्वाल्लसार्वधातुकानुदात्तत्वाभावे प्रत्यय-

ते अस्तु ॥ मृळा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हाः ॥ १० ॥ अवोचाम नमो अस्मा अवस्यवः शृणोतु नो हवं रुद्रो मरुत्वान् ॥ तन्नो मित्रो वरुणो मामहन्तामदितिः सिंधुः पृथिवी उत द्यौः ॥ ११ ॥

इमारुद्राय स्थिरधन्वन इति चतसृणां वसिष्ठो रुद्रस्तिस्रो जगत्योन्त्या त्रिष्टुप् ॥ (५।४।१३) ॐइमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधान्ने ॥ अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः ॥१॥ स हि क्षयेण क्षम्यस्य

---

क्षयद्वीर क्षयितसर्वशत्रुजन रुद्र, ते त्वदीयं गोघ्नं यत् गोहननं । यद्वा गोहननसाधनमायुधं । उत अपि च पुरुषघ्नं पुरुषहननं तत्साधनमायुधं वा तदुभयं आरे दूरे अस्मत्तो विप्रकृष्टदेशे भवतु । अस्मे अस्मासु ते त्वदीयं सुम्नं सुखं अस्तु भवतु । अपिच नोऽस्माकं मृळ सुखसिध्यर्थं प्रसन्नो भव । हे देव द्योतमान रुद्र, नोऽस्मान् अधि ब्रूहि च अधिवचनं पक्षपातेन वचनं ब्राह्मणायाधिब्रूयादिति यथा । अध च अथानन्तरं च द्विबर्हाः द्वयोः स्थानयोः पृथिव्यां अन्तरिक्षे च परिवृढः । यद्वा द्वयोर्दक्षिणोत्तरमार्गयोर्ज्ञानकर्मणोर्वा परिवृढः स्वामी स त्वं नोऽस्मभ्यं शर्म सुखं यच्छ देहि ॥ गोघ्नं हन हिंसागत्योः अस्मात् 'घञर्थे कविधानम्' इति भावे करणे वा कप्रत्ययः । 'गमहन–'इत्युपधालोपः । 'हो हन्तेः' इति घत्वम् । द्विबर्हाः बृह बृहि वृद्धौ द्वयोः स्थानयोः बर्हते प्रवर्धते इति द्विबर्हाः असुन् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १० ॥—अवस्यवः अवोऽन्नं रक्षणं वा इच्छन्तो वयं अवोचाम एतत्सूक्तरूपं स्तोत्रमवादिष्म । अस्मै रुद्राय नमो नमस्कारोऽस्तु । मरुत्वान्मरुद्भिः स्वकीयैः पुत्रैर्युक्तो रुद्रश्च नोऽस्माकं हवमाह्वानं शृणोतु स्वीकरोतु । यदस्माभिरुक्तं नोऽस्मदीयं तत्सर्वं मित्रादयः षड् देवताः ममहन्तां पूजयन्तु । उतशब्दोऽप्यर्थे । अवोचाम ब्रूञ् व्यक्तायां वाचि लुङि 'ब्रुवो वचिः' 'अस्यतिवक्तिख्याति–' इत्यादिना च्लेरङादेशः 'वच उम्' इत्युमागमः । अवस्यवः अव रक्षणे भावे असुन् 'सुप आत्मनः क्यच्' 'क्याच्छन्दसि' इत्युप्रत्ययः । हवम् 'भावेऽनुपसर्गस्य' इत्यप् संसारणं च । मरुत्वान् 'झयः' इति मतुपो वत्वं 'तसौ मत्वर्थे' इति भत्वेन पदत्वाभावाज्जश्त्वाभावः ॥ ११ ॥

( इमारुद्राय स्थिरधन्वने ५।४।१३ ) हे अस्मदीयाः स्तोतारः, यूयं इमा गिरः स्तुतीः रुद्राय एतन्नामकाय देवाय भरत धारयत । कीदृशाय स्थिरधन्वने दृढधनुष्काय क्षिप्रेषवे शीघ्रगामिबाणाय स्वधान्ने अन्नवते अषाळ्हाय केनाप्यनभिभूताय सहमानाय शत्रूणामभिभवित्रे वेधसे विधात्रे तिग्मायुधाय तीक्ष्णास्त्राय एवंभूताय रुद्रदेवाय स्तुतीर्भरत । स च नोऽस्मदीयाः स्तुतीः शृणोतु ॥ १ ॥–स हि स खलु रुद्रो देवः क्षम्यस्य क्षमायां पृथिव्यां भवः तस्य जन्मनो जनस्य क्षयेणैश्वर्येण चेतति प्रज्ञायते । दिव्यस्य जनस्य च साम्राज्येनैश्वर्येण प्रज्ञा-

जन्मनः साम्राज्येन दिव्यस्य चेतति ॥ अवन्नवन्तीरुप नो दुरश्चरानमीवो रुद्र जासु नो भव ॥ २ ॥ या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः ॥ सहस्रं ते स्वपिवातभेषजा मा नस्तोकेषु तनयेषु रीरिषः ॥ ३ ॥ मा नो वधी रुद्र मा परादा मा ते भूम प्रसितौ हीळितस्य ॥ आ नो भज बर्हिषि जीव शंसे यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥

आते पितरिति पञ्चदशर्चस्य सूक्तस्य गृत्समदो रुद्रस्त्रिष्टुप् ॥ (२।७।१६)ॐआ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः ॥ अभि नो वीरो अर्वति क्षमेत प्रजायेमहि रुद्र प्रजाभिः ॥ १ ॥ त्वादत्तेभी रुद्र शंतमेभिः शतं हिमा अशीय

---

यते । शेषः प्रत्यक्षकृतः हे रुद्र देव, त्वं च अवन्तीः त्वां स्तोत्रैस्तर्पयन्तीः नोऽस्मदीयाः प्रजाः अवन् पालयन् दुरो दुर्याणि अस्मदीयानि गृहाणि उप चर उपगच्छ । किंच त्वं नोऽस्मदीयासु प्रजासु अनमीवः अमीवा रोगाः तानकुर्वन्भव ॥२॥—हे रुद्र, ते वैद्युतात्मनस्तव संबन्धिनी दिवस्परि अन्तरिक्षसकाशादवसृष्टा विमुक्ता या दिद्युत् अशनिरूपा हेतिः क्ष्मया क्षित्या क्षितौ वा चरति वर्तते सा दिद्युत् नोऽस्मान् परिवृणक्तु परित्यजतु । अपिच हे स्वपिवात, ते तव सहस्रं बहूनि भेषजा भेषजानि यान्यौषधानि सन्ति तान्यस्मभ्यं प्रयच्छेति शेषः । नोऽस्माकं तोकेषु पुत्रेषु तनयेषु च मा रीरिषः हिंसां मा कृथाः ॥ ३ ॥—हे रुद्र, त्वं नोऽस्मान् मा वधीः मा हिंसीः । तथा मा परादाः मा अत्याक्षीः । अपिच हीळितस्य क्रुद्धस्य ते तव प्रसितौ प्रकर्षेण बन्धने वयं च मा भूम । किंच जीवशंसे जीवैराशंसनीये बर्हिषि यज्ञे नोऽस्मान् आभज भागिनः कुरु । हे रुद्रप्रमुखा देवाः, यूयं नोऽस्मान् कल्याणैः सर्वदा पालयत ॥ ४ ॥

( आतेपितर्मरुतां २।७।१६ ) हे मरुतां पितः मरुत्संज्ञानां देवानामुत्पादक रुद्र, परमपि छन्दसीति षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावात्सर्वानुदात्तत्वम् । ते त्वदीयं अस्मभ्यं दातव्यं सुम्नं सुखं आ एतु आगच्छतु । रुद्रस्य च मरुतां पितृत्वमिदं पित्रे मरुतामित्यत्राख्यायिकामुखेनावादिष्म । तथा त्वं, नोऽस्मान् सूर्यस्य संदृशः संदर्शनान्मा युयोथाः मा पृथक्कार्षीः । यु मिश्रणामिश्रणयोः लङि छान्दसः शपः श्लुः । 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन ङित्वाभावाद्गुणः । अर्वति शत्रौ भ्रातृव्यो वा अर्वेति श्रुतेः । नोऽस्माकं वीरः वीर्यवान् पुत्रादिः अभिक्षमेत अभिभवतु । यद्वा शत्रौ वीरस्त्वं नोऽस्मान् अभिक्षमेथाः अस्मान्कृतापराधान् अभिक्षमस्व । हे रुद्र, प्रजाभिः पुत्रपौत्रादिभिः प्रजायेमहि प्रभूताः स्याम ॥ १ ॥

भेषजेभिः ॥ व्य१स्मद्द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः ॥ २ ॥ श्रेष्ठो जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो ॥ पर्षिणः पारमंहसः स्वस्ति विश्वा अभीतीरपसो युयोधि ॥ ३ ॥ मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती ॥ उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि ॥ ४ ॥ हवीमभिर्हवते यो हविर्भिरवस्तोमेभी रुद्रं दिषीय ॥ ऋदूदरः सुहवो मा नो अस्यै बभ्रुः सुशिप्रो रीरध-

---

हे रुद्र, त्वादत्तेभिः त्वया दत्तैः शन्तमेभिः अतिशयेन सुखकरैर्भेषजेभिः भेषजैरौषधैः शतं हिमाः शतं हेमन्तान् शतं संवत्सरान् अशीय व्याप्नुयाम् । अश्नोतेर्लिङि छान्दसो विकरणस्य लुक् । अपिच अस्मदस्मत्तः द्वेषो द्वेष्टॄन् विचातयस्व विनाशय । तथा अंहः पापं वितरमत्यन्तं विचातयस्व अमीवाः रोगान् विषूचीः विषु नाना अञ्चतीः कृत्स्नशरीरव्यापकान् रोगान् विचातयस्व । अस्मत्तः पृथक्कृत्य विनाशय ॥ २ ॥—हे रुद्र, जातस्योत्पन्नस्य सर्वस्य जगतो मध्ये श्रिया ऐश्वर्येण श्रेष्ठः प्रशस्यतमोऽसि भवसि । तथा हे वज्रबाहो आयुधहस्त रुद्र, तवसां प्रवृद्धानां मध्ये तवस्तमः अतिशयेन प्रवृद्धोऽसि स त्वं नोऽस्मान् अंहसः पापस्य पारं तीरं स्वस्ति क्षेमेण पर्षि पारय । तथा रपसः पापस्य विश्वाः सर्वाः अभीतीरभिगमनानि युयोधि पृथक्कुरु । यौतेश्छान्दसः शपः श्लुः 'वा छन्दसि' इत्यपित्वस्य विकल्पनात् ङित्वाभावे 'अङितश्च' इति हेर्धिः ॥ ३ ॥—हे रुद्र, त्वा त्वां नमोभिः अयथाक्रियमाणैर्नमस्कारैः हविर्भिर्वा मा चुक्रुधाम मा क्रोधयाम क्रुद्धं मा कार्ष्म । क्रुध कोपे अस्माण्ण्यन्ताल्लुङि चङि रूपम् । हे वृषभ कामानां वर्षितः, दुष्टुती दुःस्तुत्या अशोभनया स्तुत्या मा चुक्रुधामेत्येव । तथा सहूती सहूत्या विसदृशैरन्यैर्देवैः सहाह्वानेन मा क्रोधयाम । श्रेष्ठो हि स्वस्मात् न्यूनेन सहाह्वाने क्रुद्धो भवति । स त्वं नोऽस्माकं वीरान् पुत्रान् भेषजेभिः त्वदीयैर्भेषजैरौषधैः उदर्पय उत्कृष्टं संयोजय । हे रुद्र, त्वा त्वां भिषजां चिकित्साभिज्ञानां मध्ये भिषक्तमं अतिशयेन भैषज्यस्य कर्तारं शृणोमि । 'प्रथमो दैव्यो भिषक्' इति च मन्त्रान्तरेऽप्युक्तम् ॥ ४ ॥—यो रुद्रः हविर्भिश्चरुपुरोडाशादिभिः सहितैर्हवीमभिराह्वानैः स्तुतिलक्षणैः हवते आहूयते स्तूयते । व्यत्ययेन कर्मणि कर्तृप्रत्ययः 'बहुलं छन्दसि' इति ह्वयतेः संप्रसारणम् । तं रुद्रं स्तोमेभिः स्तोत्रैरवदिषीय अवखण्डयामि पृथक्करोमि । अपगतक्रोधं करोमीति यावत् । दो अवखण्डने व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इतीत्वम् । ऋदूदरः ऋदूदरो मृदूदर इति यास्कः । सुहवः शोभनाह्वानः बभ्रुः भर्ता सर्वस्य बभ्रुवर्णो वा सुशिप्रः शिप्रे हनूनासिके वा शोभनशिप्रः एवंगुणविशिष्टः स रुद्रः अस्यै मनायै हन्मीति मन्यमाना बुद्धिर्मना तस्यै नोऽस्मान् मा रीरधत् मा वशं नैषीत् । रध हिंसा-

न्मनायै ॥ ५ ॥ उन्मा ममन्द वृषभो मरुत्वान्त्वक्षीयसा वयसा नाधमानम् ॥ घृणीव च्छायामरपा अशीया विवासेयं रुद्रस्य सुम्नम् ॥६॥ क्व १ स्य ते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो जलाषः ॥ अपभर्ता रपसो दैव्यस्याभी नु मा वृषभ चक्षमीथाः ॥७॥ प्र बभ्रवे वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि ॥ नमस्या कल्मलीकिनं नमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम ॥८॥ स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः ॥ ईशानादस्य भुवनस्य भूरेर्न वा उ योषद्रुद्रादसुर्यम् ॥९॥

---

संराध्योः । अस्माण्ण्यन्ताल्लुङि चङि रूपम् । रध्यतिर्वशगमन इति यास्कः ॥ ५ ॥—वृषभः कामानां वर्षिता मरुत्वान् मरुद्भिः पुत्रैर्युक्तो रुद्रः नाधमानं याचमानं मा मां त्वक्षीयसा दीप्तेन वयसान्नेन उन्ममन्द उत्कर्षेण तर्पयतु । अपिचाहं घृणीव छायां यथा सूर्यकिरणतप्तश्छायां प्रविशति एवं रुद्रस्य सुम्नं सुखं अरपाः अपापः सन् अशीय व्याप्नुयां तदर्थं तं रुद्रमाविवासेयं परिचरेयम् । विवासतिः परिचरणकर्मा ॥ ६ ॥—हे रुद्र, ते तव मृळयाकुः सुखयिता स्यः स हस्तः क्व कुत्र वर्तते । यो हस्तः भेषजः भैषज्यकृत् जलाषः सर्वेषां सुखकरोऽस्ति भवति स हस्तो विद्यते एव तेन हस्तेन मां रक्षेति भावः । अपिच हे वृषभ कामानां वर्षितः, दैव्यस्य देवकृतस्य रपसः पापस्य अपभर्ता अपहर्ता विनाशयिता भूत्वा कृतापराधं मा मां नु क्षिप्रं अभिचक्षमीथाः अभिक्षमस्व । क्षमूष् सहने लङि छान्दसः शपः श्लुः 'बहुलं छन्दसि' इति ईडागमः ॥७॥—बभ्रवे विश्वस्य भर्त्रे बभ्रुवर्णाय वा वृषभाय कामानां वर्षित्रे प्रद्युम्नप्रसङ्गकारिणे वा श्वितीचे श्वैत्यमञ्चते । श्विता वर्णे औणादिक इन्प्रत्ययः । श्वितीमञ्चतीति अञ्चते 'ऋत्विक्' इत्यादिना क्विन्प्रत्ययः । चतुर्थ्येकवचने 'अचः' इत्याकारलोपे 'चौ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । एवंगुणविशिष्टाय रुद्राय महो महीं महतोऽपि महतीं सुष्टुतिं शोभनस्तुतिं प्रेरयामि प्रकर्षेणोच्चारयामि । हे स्तोतः कल्मलीकिनं । ज्वलतो नामधेयमेतत् । ज्वलन्तं कलयत्यपगमयति मलमिति कल्मलीकं तेजः तद्वन्तं रुद्रं नमोभिर्नमस्कारैर्हविर्भिर्वा नमस्य पूजय । वयं च रुद्रस्य महादेवस्य त्वेषं दीप्तं नाम गृणीमसि गृणीमः संकीर्तयामः । गॄ शब्दे क्रैयादिकः 'इदन्तो मसिः' 'प्वादीनां ह्रस्वः' ॥ ८ ॥—स्थिरेभिः स्थिरैर्दृढैरङ्गैः अवयवैर्युक्तः पुरुरूपः । अष्टमूर्त्यात्मकैर्बहुभी रूपैरुपेतः उग्र उद्गूर्णस्तेजस्वी बभ्रुर्भर्ता बभ्रुवर्णो वा रुद्रः शुक्रेभिर्दीप्तैः हिरण्यैर्हिरण्मयैः हितरमणीयैर्वा अलंकारैः पिपिशे दीप्यते । 'पिश अवयवे' कर्मणि लिट् । ईशानादीश्वरात् अस्य भुवनस्य भूतजातस्य भूरेर्भर्तुः रुद्रात् असुर्यं । असु क्षेपणे असेरुरन् । असुरः क्षेप्ता तत्र साधुः असुर्यं बलं नवा उ योषत् नैव पृथग्भवति । यौतेर्लेट्यडागमः 'सिब्बहुलं

अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् ॥
अर्हन्निदं दयसे विश्वमभ्वं नवा ओजीयो रुद्र त्वदस्ति ॥१०॥
स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ॥ मृळा
जरित्रे रुद्र स्तवानोन्यं ते अस्मन्निवपन्तु सेनाः ॥११॥ कुमार-
श्चित्पितरं वन्दमानं प्रतिनानाम रुद्रोपयन्तं ॥ भूरेर्दातारं सत्प-
तिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे ॥ १२ ॥ या वो भेषजा
मरुतः शुचीनि या शंतमा वृषणो या मयोभु ॥ यानि मनुर-
वृणीता पिता नस्ता शं च योश्च रुद्रस्य वश्मि ॥ १३ ॥ परि-

---

लेटि' इति सिप् ॥ ९ ॥—हे रुद्र, त्वं अर्हन् अर्हो योग्य एव सन् सायकानि शरान् धन्व धनुश्च बिभर्षि धारयसि । तथा अर्हन्नेव यजतं यजनीयं पूजनीयं विश्वरूपं बहुविधरूपयुक्तं निष्कं हारं बिभर्षि । तथा अर्हन्नेव इदं विश्वं सर्वं अभ्वम् । महन्नामैतत् । अतिविस्तृतं जगत् दयसे रक्षसि । देङ् रक्षणे । हे रुद्र, त्वत् त्वत्तोऽन्यत् किंचित् ओजीयः ओजस्वितरं बलवत्तरं न वा अस्ति न खलु विद्यते । अतस्त्वमेवोक्तव्यापारेषु योज्य इत्यर्थः । ओजस्शब्दान्मत्वर्थीयो विनिः तत आतिशायनिक इष्ठन् । 'विन्मतोर्लुक्' 'टेः' इति टिलोपः ॥ १० ॥—हे स्तोतः, श्रुतं विश्रुतं प्रख्यातं रुद्रं स्तुहि । कीदृशं । गर्तसदं गर्तो रथस्तत्र सीदन्तं युवानं नित्यतरुणं मृगं न भीमं सिंहमिव भयंकरं उपहत्नुं उपहन्तारं शत्रूणां उग्रमुद्गूर्णं हे रुद्र, त्वं स्तवानः अस्माभिः स्तूयमानः सन् जरित्रे स्तोत्रे मह्यं मृळ सुखय । ते त्वदीयाः सेनाः अस्मदन्यमस्मद्व्यतिरिक्तं पुरुषं निवपन्तु निघ्नन्तु ॥ ११ ॥—वन्दमानं आयुष्मान् भव सौम्येति स्तुवन्तं पितरं कुमारश्चित् यथा कुमारः । चिदित्येतदुपमार्थे । हे रुद्र, उपयन्तमस्मत्समीपे गच्छन्तं त्वां प्रतिननाम प्रतिनतोस्मि । अपिच भूरेर्बहुनो धनस्य दातारं सत्पतिं सतां पालयितारं । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । हे रुद्र, एवं त्वां गृणीषे स्तौमि । मिपः 'तिङां तिङो भवन्ति' इति से आदेशः । स्तुतश्च त्वं अस्मे अस्मभ्यं भेषजा भेषजानि रासि देहि ॥ १२ ॥—हे मरुतो रुद्रपुत्राः, वो युष्माकं या यानि भेषजा भेषजानि अस्मदारोग्यहेतुभूतान्यौषधानि शुचीनि शुद्धानि निर्मलानि सन्ति । हे वृषणः कामानां वर्षितारो मरुतः, या यानि च युष्मदीयानि भेषजानि शंतमा अतिशयेन सुखकराणि या यानि च भेषजानि मयोभु मयोभूनि मयसः सुखस्य भावयितॄणि नोऽस्मत्पिता मनुः यानि भेषजानि युष्मदीयान्यवृणीत वृतवान् ता तानि भेषजानि रुद्रस्य महादेवस्य संबन्धि शं च योश्च यच्छमनीयानां रोगाणामुपशमनं यावनीयानां भयानां यद्यावनं अस्मत्तः पृथक्करणं तदुभयं च वश्मि कामये । वश कान्तौ आदादिकः ॥ १३ ॥—रुद्रस्य महादेवस्य हेतिरायुधं नोऽस्मान् परिवृज्याः परिवर्जयतु । तथा त्वेषस्य दीप्तस्य रुद्रस्य मही महती दुर्मतिः दुःखकारिणी बुद्धिश्च परिगात् अस्मान्वर्जयित्वान्यत्र गच्छतु ।

णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात् ॥ अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ ॥ १४ ॥ एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि ॥ हवनश्रुन्नो रुद्रेह बोधि बृहद्वदेम विदथे सुवीराः ॥ १५ ॥

## विष्णुसूक्तानि ।

परो मात्रयेति सप्तर्चस्य सूक्तस्य वसिष्ठो विष्णुस्त्रिष्टुप् ॥ (५।६।२४) ॐपरो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ॥ उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥ १ ॥ न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप ॥ उदस्तभ्ना नाकमृष्वं बृहन्तं

---

अपपरी वर्जने । हे मीढ्वः सेचनसमर्थ रुद्र, स्थिरा स्थिराणि त्वदीयानि धनूंषि मघवद्भ्यः हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः अवतनुष्व अवततज्यानि कुरु । तथा तोकायास्मत्पुत्राय तनयाय तत्पुत्राय च मृळ सुखं कुरु ॥ १४ ॥—हे बभ्रो जगतो भर्तः बभ्रुवर्ण वा, वृषभ कामानां वर्षितः, चेकितान सर्वं जानन् हे देव द्योतमान रुद्र, यथा येन प्रकारेण न हृणीषे न क्रुध्यसि न च हंसि । हृणीङ् लज्जायाम् अयं क्रुध्यतिकर्मा च । एव एवं हवनश्रुत् अस्मदीयमाह्वानं शृण्वन् नोऽस्मान् हे रुद्र, इहास्मिन्देशे बोधि बुध्यस्व विदथे यज्ञे गृहे वा सुवीराः शोभनपुत्राः सन्तः बृहत्प्रौढं त्वदीयं स्तोत्रं वदेमोच्चारयाम ॥ १५ ॥

( परोमात्रया ५।६।२४ ) पर इति सकारान्तं परस्तादित्यस्यार्थे । परशब्दाच्छान्दसो सिप्प्रत्ययः । परो दिवा पर एना पृथिव्येति यथा । मात्रयेति पञ्चम्यर्थे व्यत्ययेन तृतीया । मात्रायाः परः परस्ताद्वर्तमानया अपरिमितया तन्वा शरीरेण वृधान वर्धमान हे विष्णो, ते तव महित्वं महत्त्वं नान्वश्नुवन्ति नानुव्याप्नुवन्ति । त्रैविक्रमसमये यत्तव माहात्म्यं तत्सर्वैरपि जनैर्ज्ञातुं न शक्यत इत्यर्थः । ते तव उभे रजसी उभौ लोकौ पृथिव्या आरभ्य पृथिवीमन्तरिक्षं च विद्म जानीमो वयं चक्षुषोपलभामहे नान्यत् । हे देव द्योतमान विष्णो, त्वमेव परमस्य स्वर्गादेरुत्कृष्टलोकस्य । द्वितीयार्थे षष्ठी । परमं लोकं वित्से जानासि । अतस्तव महत्त्वं न केनापि व्याप्तुं शक्यमिति भावः ॥ १ ॥ हे देव दानादिगुणयुक्त विष्णो, ते तव महिम्नः महत्त्वस्य परं विप्रकृष्टं अन्तमवसानं जायमानः प्रादुर्भवन् जनः नाप न प्राप्नोति । तथा जातः प्रादुर्भूतोऽपि जनो नैव प्राप्नोति । तव महत्वस्यावसानं नास्ति अतएव सर्वैर्न ज्ञायत इति भावः । कोऽसौ महिमा तमाह । ऋष्वं दर्शनीयं बृहन्तं महान्तं नाकं द्युलोकं उदस्तभ्नाः त्वं ऊर्ध्वमधारयः । यथा अधो न पतति तथा पृथिव्या भूमेः संबन्धिनीं प्राचीं ककुभं च दाधर्थ धारितवानसि । उपलक्षणमेतत् सर्वस्य भूतजातस्य । तथाच मन्त्रान्त-

दाधर्थ प्राचीं ककुभं पृथिव्याः ॥ २ ॥ इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या ॥ व्यस्तभ्ना रोदसी विष्णवे ते दाधर्थ पृथिवीमभितो मयूखैः ॥ ३ ॥ उरुं यज्ञाय चक्रथुरु लोकं जनयन्ता सूर्यमुषासमग्निम् ॥ दासस्य चिद्वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ॥ ४ ॥ इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् ॥ शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् ॥ ५ ॥ इयं मनीषा बृहती बृहन्तोरुक्रमा तवसा वर्धयन्ती ॥ ररे वां स्तोमं विदथेषु

---

रम्—य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वेति ॥ २ ॥—हे द्यावापृथिव्यौ, मनुषे स्तुवते मनुष्याय दशस्या दित्सया युक्ते युवां इरावती अन्नवत्यौ धेनुमती गोमत्यौ सूयवसिनी शोभनयवसे च भूतमभूतम् । हिशब्दः प्रसिद्धौ । विष्णुना विक्रान्तत्वाद्युवामेव खलु पूर्वमभूतमित्यर्थः । हे विष्णो, एते इमे रोदसी द्यावापृथिव्यौ व्यस्तभ्नाः विविधमधारयः । पृथिवीमूर्ध्वमुखत्वेन द्यामधोमुखत्वेनेति विविधत्वम् । अपिच पृथिवीं प्रथितामिमां भूमिं अभितः सर्वत्र स्थितैर्मयूखैः पर्वतैर्दाधर्थ धारितवानसि । यथा न चलति तथा दृढीकृतवानित्यर्थः । पर्वता हि विष्णोः स्वभूताः 'विष्णुः पर्वतानामधिपतिः' इति श्रुतेः ॥ ३ ॥—हे इन्द्राविष्णू, यज्ञाय यजमानाय उरुं विस्तीर्णं लोकं स्वर्गाख्यं चक्रथुः कृतवन्तौ खलु युवाम् । किंकुर्वन्तौ । सूर्यं सर्वस्य प्रेरकमादित्यं उषसं तमोनिवारकमुषःकालं अग्निं च असुरैरावृतं जनयन्ता जनयन्तौ पुनः प्रादुर्भावयन्तौ हे नरा नेताराविन्द्राविष्णू, वृषशिप्रस्य एतत्संज्ञकस्य दासस्य चित् उपक्षपयितुरसुरस्य मायाः पृतनाज्येषु संग्रामेषु जघ्नथुः जिहिंसथुर्युवां सूर्यादिकं जनयन्तावित्युच्यते ॥ ४ ॥—हे इन्द्राविष्णू, दृंहिताः दृढीकृताः नवनवतिं च नवोत्तरनवतिसंख्याकाः पुरः पुराणि शम्बरस्य स्वभूतानि श्नथिष्टमहिंसिष्टम् । श्नथ हिंसायाम् । अपिच शतं सहस्रं च वर्चिनोऽसुरस्य वीरान् अप्रति प्रतिद्वन्द्विनो यथा न भवन्ति तथा साकं सह संघश एव हथः अहिंसिष्टम् । यो वर्चिनः शतमिन्द्रः सहस्रमिति हि निगमान्तरम् ॥ ५ ॥—बृहती महती इयं मनीषा मननीया स्तुतिः बृहन्ता बृहन्तौ महान्तौ उरुक्रमा विस्तीर्णविक्रमौ । विष्णुना सहैकार्थीभावादिन्द्रस्याप्युरुक्रमत्वम् । तवसा तव इति बलस्य वृद्धेर्वा नामधेयं । तद्वन्तौ एवंभूतौ युवां वर्धयन्ती प्रवृद्धौ कुर्वती अस्माभिः कृता हे विष्णो, हे इन्द्र, विदथेषु यज्ञेषु वां युवाभ्यां स्तोमं उक्तलक्षणं स्तोत्रं ररे ददे । रा दान इति धातुः । तौ युवां वृजनेषु बलेषु । निमित्तसप्तमी । इषोऽन्नानि पिन्वतमस्मभ्यं वर्धयतम् ॥ ६ ॥—हे विष्णो, ते तुभ्यं आसः आस्यात् । आ अभिमुखं

विष्णो पिन्वतमिषो वृजनेष्विन्द्र ॥ ६ ॥ वषट् ते विष्णवास
आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ॥ वर्धन्तु त्वा
सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥ १ ॥
नू मर्तइति सप्तर्चस्य वसिष्ठो विष्णुस्त्रिष्टुप् (५।६।२५।) ॐ नू
मर्तो दयते सनिष्यन्यो विष्णव उरुगायाय दाशत् ॥ प्र यः
सत्राचा मनसा यजात एतावन्तं नर्यमाविवासात् ॥ १ ॥
त्वं विष्णो सुमतिं विश्वजन्यामप्रयुतामेवयावो मतिं दाः ॥
पर्चो यथा नः सुवितस्य भूरेरश्वावतः पुरुश्चन्द्रस्य रायः
॥ २ ॥ त्रिर्देवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा ॥
प्रविष्णुरस्तु तवसस्तवीयान्त्वेषं ह्यस्य स्थविरस्य नाम ॥ ३ ॥
विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् ॥

---

वषट् कृणोमि वषट्करोमि वषट्कारेण हविर्हावयामि । हे शिपिविष्ट शिपयो रश्मयः तैराविष्ट विष्णो, तत् वषट्कृतं मे मदीयं हव्यं हविर्जुषस्व सेवस्व । सुष्टुतयः शोभनस्तुत्यात्मिका गिरो वाचश्च त्वा त्वां वर्धन्तु वर्धयन्तु । अन्यद्गतम् ॥७॥१॥

( नूमर्तो ५।६।२५ ) स मर्तो मनुष्यः सनिष्यन् धनमिच्छन् नु क्षिप्रं दयते धनमादत्ते । दयतिराङ्पूर्वार्थे द्रष्टव्यः । यो मनुष्यः उरुगायाय बहुभिः कीर्तनीयाय विष्णवे दाशत् हवींषि दद्यात् । यश्च सत्राचा सहाञ्चता मनसा मननेन स्तोत्रेण प्र यजाते प्रकर्षेण पूजयेत् एतावन्तमेतावत्परिमाणं महान्तं नर्यं नरेभ्यो हितं विष्णुं आविवासात् नमस्कारादिभिः परिचरेत् स मर्तो दयत इत्यन्वयः । यद्वा सनिष्यन्निति सनतेर्लाभार्थस्य लृटि रूपम् । स मर्तः सनिष्यन् धनादीनि लप्स्यमानो भवन्नेव हविरादिकं नु क्षिप्रं दयते विष्णवे ददातीति योज्यम् ॥ १ ॥—हे एवयावः एवाः प्राप्तव्याः कामास्तान् यावयति प्रापयति स्तोतॄनित्येवयावः हे एवयावन् विष्णो, त्वं विश्वजन्यां सर्वजनहितां अप्रयुतां दोषैर्वियुक्तां सुमतिं मतिं अनुग्रहबुद्धिं दाः अस्मभ्यं देहि । सुवितस्य सुष्ठु प्राप्तव्यस्य भूरेर्बहुलस्य अश्वावतोऽश्वयुक्तस्य पुरुश्चन्द्रस्य पुरूणां बहूनां आह्लादकस्य रायो धनस्य पर्चः संपर्को नोऽस्माकं यथा भवति तथा देहीत्यन्वयः ॥ २ ॥—एष देवो दानादिगुणयुक्तो विष्णुः शतर्चसं शतसंख्यान्यर्चींषि यस्यास्तादृशीं एतां पृथिवीं । उपलक्षणमेतत् । पृथिव्यादींस्त्रीन् लोकान् महित्वा महत्त्वेन त्रिर्विचक्रमे त्रिभिः पदैर्विक्रान्तत्वात् । तवसः तवस्विनो वृद्धादपि तवीयान् तवस्वितरो विष्णुः प्रास्तु अस्माकं प्रभवतु स्वामी भवतु । अस्य स्थविरस्य वृद्धस्य विष्णोर्नाम नामकं रूपं विष्णुरित्येतन्नामैव वा त्वेषं हि यस्माद्दीप्तं तस्मात्कारणात् स विष्णुः प्रभवत्वित्यर्थः ॥ ३ ॥—एष देवो विष्णुः एतां पृथिवीं

ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार ॥ ४ ॥ प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ॥ तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥ ५ ॥ किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि ॥ मा वर्पो अस्मदपगूह एतद्यदन्यरूपः

---

पृथिव्यादीनिमांस्त्रींल्लोकान् क्षेत्राय निवासार्थं मनुषे स्तुवते देवगणाय दशस्यन् असुरेभ्योऽपहृत्य प्रदास्यन् विचक्रमे विक्रान्तवान् । अस्य च विष्णोः कीरयः स्तोतारो जनाः ध्रुवासो निश्चला भवन्ति । ऐहिकामुष्मिकयोर्लाभेन स्थिरा भवन्तीत्यर्थः । सुजनिमा शोभनानि जनिमानि कीर्तनस्मरणादिना सुखहेतुभूतानि यस्य तादृशो विष्णुः उरुक्षितिं विस्तीर्णनिवासं चकार स्तोतृभ्यः करोति ॥४॥— हे शिपिविष्ट रश्मिभिराविष्ट विष्णो, ते तव तत्प्रसिद्धं विष्णुरिति प्रख्यातं नाम अर्यः स्वामी स्तुतीनां हविषां वा तथा वयुनानि ज्ञातव्यान्यर्थजातानि विद्वान् जानन्नहं अद्येदानीं प्रशंसामि प्रकर्षेण स्तौमि । तवसं प्रवृद्धं तं त्वा त्वां विष्णुं अतव्यानतवीयान् अवृद्धतरोऽहं गृणामि स्तौमि । कीदृशम् । अस्य रजसो लोकस्य पराके दूरदेशे क्षयन्तं निवसन्तम् ॥ ५ ॥—पुरा खलु विष्णुः स्वं रूपं परित्यज्य कृत्रिमरूपान्तरं धारयन् संग्रामे वसिष्ठस्य साहाय्यं चकार । तं जानन् ऋषिरनया प्रत्याचष्टे । अत्र निरुक्तम्—'शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः किं ते विष्णो प्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिरपि वा प्रशंसानामैवाभिप्रेतं स्यात् किं ते विष्णो प्रख्यातमेतद्भवत्यप्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति' । मा वर्पो अस्मदपगूह एतत् वर्प इति रूपनाम वृणोतीति सतो यदन्यरूपः समिथे संग्रामे भवसि संयतरश्मिरिति तत्र कुत्सितार्थपक्षे योजना । हे विष्णो, ते तव तन्नामास्मभ्यं प्रववक्षे प्रब्रूषे । शिपिविष्टोऽस्मीति अन्तर्णीतोपमानमेतत् । शेप इव निर्वेष्टितः तेजसा अनाच्छादितो भवामीति तदश्लीलार्थत्वादिदं नाम न प्रशस्तमित्यर्थः । तन्नाम किं परिचक्ष्यं वर्जनीयं परित्याज्यं विरुद्धार्थप्रतिपादकत्वात् स्वत एव परित्यक्तं हि तत् । शिष्टं समानं पूर्वेण । अत उक्तरूपविलक्षणं यद्वैष्णवरूपमस्ति एतद्वर्पो रूपं अस्मत् अस्माकं मापगूहः अपगूढं संवृतं मा कुरु । गुहू संवरणे अपितु तदेव रूपं प्रकटय । वैष्णवस्य रूपस्य गूहने का प्रसक्तिरिति चेत् यत् यस्मात्तु अन्यत् रूपान्तरमेव धारयन् समिथे संग्रामे बभूथ अस्माकं सहायो भवसि तस्मादिदं गूहनं न कार्यमिति । प्रशंसापक्षे तु हे विष्णो, ते तव तन्नाम किं परिचक्ष्यं भूत् किं प्रख्यापनीयं भवति न प्रख्यापनीयम् । किं तन्नाम । शिपिविष्टो रश्मिभिराविष्टोऽस्मीति यन्नाम प्रब्रूषे यत एवं प्रख्यातरूपस्त्वं अतो-

समिथे बभूथ ॥ ६ ॥ वषट् ते विष्णवास आकृं० ॥ ७ ॥२ ॥

विष्णोर्नुकमिति षळर्चस्य सूक्तस्य दीर्घतमा विष्णुस्त्रिष्टुप् ॥ (२।२।२४)ॐविष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ॥ यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रे-

ऽस्माकं एतद्वैष्णवं रूपं संवृतं मा कार्षीः । इदानीं गूढरूपोऽपि यद्यस्मात्त्वं समिथे संग्रामे अन्यरूपः कृत्रिमरूपात् यदन्यद्वैष्णवं रूपं शौर्यादिलक्षणं तादृग्रूपः एव बभूथ भवसि तस्मात्त्वं गूढोऽपि ज्ञायस एवेति व्यर्थमेव तस्य रूपस्य गूहनं । अतो बहुतेजस्कं यद्वैष्णवं रूपं तदस्माकं प्रदर्शयेति तात्पर्यार्थः ॥ ६ ॥—व्याख्यातेयम् । अक्षरार्थस्तु हे विष्णो, तुभ्यं आस्यात् आस्येन वषट्करोमि वषट्कृतं तन्मदीयं हविः हे शिपिविष्ट, सेवस्व शोभनस्तुतिरूपा मदीया वाचश्च त्वां वर्धयन्त्विति शिष्टपादः सिद्धः ॥ ७ ॥ २ ॥

( विष्णोर्नुकं २।२।२४ ) हे नराः, विष्णोर्व्यापनशीलस्य देवस्य वीर्याणि वीरकर्माणि नुकं अतिशीघ्रं प्रवोचं प्रब्रवीमि । अत्र यद्यपि नुकमिति पदद्वयं तथापि यास्केन नवोत्तराणि पदानीत्युक्तत्वात् शाखान्तरे एकत्वेन पाठाच्च नु इत्येतस्मिन्नेवार्थे नुकमिति पदद्वयम् । कानि तानीति तत्राह—यो विष्णुः पार्थिवानि पृथिवीसंबन्धीनि रजांसि रञ्जनात्मकानि क्षित्यादिलोकत्रयाभिमानीनि अग्निवाय्वादित्यरूपाणि रजांसि विममे विशेषेण निर्ममे । अत्र त्रयो लोका अपि पृथिवीशब्दवाच्याः । तथा च मन्त्रान्तरं—'यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः' इति । तैत्तिरीयेऽपि—'योऽस्यां पृथिव्यां अस्यायुषा' इत्युपक्रम्य 'यो द्वितीयस्यां तृतीयस्यां पृथिव्यामिति' तस्माल्लोकत्रयस्य पृथिवीशब्दवाच्यत्वम् । किंच यश्च विष्णुरुत्तरं उद्गततरं अतिविस्तीर्णं सधस्थं सहस्थानं लोकत्रयाश्रयभूतं अन्तरिक्षं अस्कभायत् तेषामाधारत्वेन स्कम्भितवान् । निर्मितवानित्यर्थः । अनेनान्तरिक्षाश्रितं लोकत्रयमपि सृष्टवानित्युक्तं भवति । यद्वा यो विष्णुः पार्थिवानि पृथिवीसंबन्धीनि रजांसि पृथिव्या अधस्तनसप्तलोकान्विममे विविधं निर्मितवान् । रजःशब्दो लोकवाची 'लोका रजांस्युच्यन्ते' इति यास्केनोक्तत्वात् । किंच यश्च उत्तरं उद्गततरं उत्तरभाविनं सधस्थं सहस्थानं पुण्यकृतां सह निवासयोग्यं भूरादिलोकसप्तकं अस्कभायत् स्कम्भितवान् । सृष्टवानित्यर्थः । स्कम्भेः स्तम्भुस्तुम्भिवति विहितस्य श्नः 'छन्दसि शायजपि' इति व्यत्ययेन शायजादेशः । अथवा पार्थिवानि पृथिवीनिमित्तकानि रजांसि लोकान्विममे । भूरादिलोकत्रयमित्यर्थः । भूम्यामुपार्जितकर्मभोगार्थत्वादितरलोकानां तत्कारणत्वं । किंच यश्चोत्तरमुत्कृष्टतरं सर्वेषां लोकानामुपरिभूतं अपुनरावृत्तेस्तस्योत्कृष्टत्वम् । सधस्थं उपासकानां सहस्थानं सत्यलोकं अस्कभायत् स्कम्भितवान् । ध्रुवं स्थापितवानित्यर्थः । किंकुर्वन् । त्रेधा विचक्रमाणः त्रिप्रकारं स्वसृष्टांल्लोकान् विविधं क्रममाणः । विष्णोस्त्रेधा क्रमणं 'इदं विष्णुर्विचक्रमे' इत्यादि श्रुतिषु प्रसिद्धम् । अत एवोरुगायः उरुभिर्महद्भिर्गीयमानः

धोरुगायः ॥ १ ॥ प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ॥ यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ २ ॥ प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे ॥ य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥ ३ ॥ यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ॥ य उ त्रिधातु पृथिवीमुत द्यामेको

---

अतिप्रभूतं गीयमानो वा य एवं कृतवान् तादृशस्य विष्णोर्वीर्याणि प्रवोचम् ॥१॥—यस्येति वक्ष्यमाणत्वात्स इव गम्यते । स महानुभावो विष्णुः वीर्येण स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण प्र स्तवते प्रकर्षेण स्तूयते सर्वैः । कर्मणि व्यत्ययेन शप् । वीर्येण स्तूयमानत्वे दृष्टान्तः—मृगो न सिंहादिरिव यथा स्वविरोधिनो मृगयिता सिंहो भीमो भीतिजनकः कुचरः कुत्सितहिंसादिकर्ता दुर्गमप्रदेशगन्ता वा गिरिष्ठाः पर्वताद्युन्नतप्रदेशस्थायी सर्वैः स्तूयते । अस्मिन्नर्थे निरुक्तं—'मृगो न भीमः कुचरो गिरिष्ठाः मृग इव भीमः कुचरो गिरिष्ठा मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव कुचर इति चरति कर्म कुत्सितमथ चेद्देवताभिधानं क्वायं न चरतीति गिरिष्ठा गिरिस्थायी गिरिः पर्वतसमुद्गीर्णो भवति पर्ववान्पर्वतः पर्व पुनः 'पृणातेः प्रीणातेर्वेति' । तद्द्वयमपि मृगः अन्वेष्टा शत्रूणां भीमः भयानकः सर्वेषां भीत्युपादानभूतः । परमेश्वराद्भीतिः 'भीषास्माद्वातः पवते' इत्यादिश्रुतिषु प्रसिद्धा । किंच कुचरः शत्रुवधादिकुत्सितकर्मकर्ता, कुषु सर्वासु भूमिषु लोकत्रयेषु संचारी वा । तथा गिरिष्ठाः गिरिवदुच्छ्रितलोकस्थायी । यद्वा गिरि मन्त्रादिरूपायां वाचि सर्वदा वर्तमानः ईदृशोऽयं स्वमहिम्ना स्तूयते । किंच यस्य विष्णोरुरुषु विस्तीर्णेषु त्रिषु त्रिसंख्याकेषु विक्रमणेषु पादप्रक्षेपेषु विश्वा सर्वाणि भुवनानि भूतजातानि आश्रित्य निवसन्ति स विष्णुः स्तूयते ॥२॥—विष्णवे सर्वव्यापकाय शूषं अस्मत्कृत्यादिजन्यं महत् बलत्वं मन्म मननं स्तोत्रं मननीयं शूषं बलं वा विष्णुमेतु प्राप्नोतु । कर्मणः संप्रदानत्वाच्चतुर्थी । कीदृशाय गिरिक्षिते वाचि गिरिवदुन्नतप्रदेशे वा तिष्ठते उरुगायाय बहुभिर्गीयमानाय वृष्णे वर्षित्रे कामानां एवं महानुभावं शूषं प्राप्नोतु कोऽस्य विशेष इति । उच्यते—यो विष्णुरिदं प्रसिद्धं दृश्यमानं दीर्घं अतिविस्तृतं प्रयतं नियतं सधस्थं सहस्थानं लोकत्रयं एक इत् एक एव अद्वितीयः सन् त्रिभिः पदेभिः पादैर्विममे विशेषेण मितवान् ॥३॥—यस्य विष्णोः मधुना मधुरेण दिव्येनामृतेन पूर्णा पूर्णानि त्री त्रीणि पदानि पादप्रक्षेपणानि अक्षीयमाणा अक्षीयमाणानि स्वधया अन्नेन मदन्ति मादयन्ति तदाश्रितजनान् यउ यएव पृथिवीं प्रख्यातां भूमिं द्यामुत द्योतनात्मकमन्तरिक्षं च विश्वा भुवनानि सर्वाणि भूतजातानि चतुर्दशलोकांश्च । यद्वा पृथिवीशब्देन अधोवर्तीनि अतलवितलादिसप्तभुवनान्युपात्तानि । द्युशब्देन तदवान्तररूपाणि भुवआदिसप्तभुवनानि । एवं चतुर्दशलोकान् विश्वा भुवनानि सर्वाण्यपि तत्रत्यानि भूतजा-

**दाधार भुवनानि विश्वा ॥ ४ ॥ तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ॥ उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥ ५ ॥ ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ॥ अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥ ६ ॥ १ ॥**

---

तानि त्रिधातु त्रयाणां धातूनां समाहारः त्रिधातु पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा दाधार धृतवान् । तुजादित्वादभ्यासस्य दीर्घत्वम् । उत्पादितवानित्यर्थः । छन्दोगारण्यके–'तत्तेजोऽसृजत तत्तेज ऐक्षत तदपोऽसृजत ता आप ऐक्षन्त ता अन्नमसृजन्त' इति भूतत्रयसृष्टिमुक्त्वा 'हन्ताहमिमास्तिस्रो देवतास्तासां त्रिवृतमेकैकां करवाणि' इत्यादिना त्रिवृत्करणसृष्टिरुपपादिता । यद्वा त्रिधातु कालत्रयं गुणत्रयं वा दाधारेत्यन्वयः ॥४॥–अस्य महतो विष्णोः प्रियं प्रियभूतं तत्सर्वैः सेव्यत्वेन प्रसिद्धं पाथः । अन्तरिक्षनामैतत् । 'पाथोऽन्तरिक्षं पंथा व्याख्यातं' इति यास्केनोक्तत्वादन्तरिक्षलोकाख्यं स्थानं । अविनश्वरं ब्रह्मलोकमित्यर्थः । अभि अश्यां व्याप्नुयां । तदेव विशेष्यते । यत्र स्थाने देवयवः देवं द्योतनस्वभावं विष्णुं आत्मन इच्छन्तः यज्ञदानादिभिः प्राप्तुमिच्छन्तो नरः मदन्ति तृप्तिमनुभवन्ति तदश्यामित्यन्वयः । पुनरपि तदेव विशेष्यते । उरुक्रमस्य अत्यधिकं सर्वं जगदाक्रममाणस्य तत्तदात्मना । अतएव विष्णोर्व्यापकस्य परमेश्वरस्य परमे उत्कृष्टे निरतिशये केवलसुखात्मके पदे स्थाने मध्वः मधुरस्य उत्सः निष्पन्दो वर्तते तदश्यां यत्र क्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयं नास्ति संकल्पमात्रेणामृतकुल्यादिभोगाः प्राप्यन्ते तादृशमित्यर्थः । ततोऽधिकं नास्तीत्याह—इत्था इत्थं उक्तप्रकारेण स हि बन्धुः स खलु सर्वेषां सुकृतिनां बन्धुभूतः हितकरो वा तस्य पदं प्राप्तवतो न पुनरावृत्तिः 'न स पुनरावर्तते' इति श्रुतेस्तस्य बन्धुत्वम् । हिशब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः ॥ ५ ॥—हे पत्नीयजमानौ, वां युष्मदर्थं ता तानि गन्तव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि गमध्यै युवयोर्गमनाय उश्मसि कामयामहे तदर्थं विष्णुं प्रार्थयाम इत्यर्थः । तानीत्युक्तं कानीत्याह–यत्र येषु वास्तुषु गावो रश्मयो भूरिशृङ्गा अत्यन्तोन्नत्युपेताः बहुभिराश्रयणीया वा अयासः अयनागन्तारः अतिविस्तृताः । यद्वा अयासः गन्तारः एतादृशाः । अत्यन्तप्रकाशयुक्ता इत्यर्थः । अत्राह अत्र खलु वास्त्वाधारभूते द्युलोके उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य वृष्णः कामानां वर्षितुः विष्णोः तत् तादृशं सर्वत्र पुराणादिषु गन्तव्यत्वेन प्रसिद्धं परमं निरतिशयं पदं स्थानं भूरि अतिप्रभूतं अव भाति स्वमहिम्ना स्फुरति । अयं मन्त्रो यास्केन गोशब्दो रश्मिवाचक इति व्याचक्षाणेन व्याख्यातः–तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा बहुशृङ्गा भूरीति बहुनो नामधेयं प्रभवतीति सतः शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो

प्रवःपान्तमिति षळर्चस्य दीर्घतमा विष्णुर्जगती ॥ (२।२।२५)
ॐ प्र वः पान्तमन्धसो धियायते महे शूराय विष्णवे चार्चत ॥
या सानुनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साधुना ॥ १ ॥
त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ॥
या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥२॥
ता ईं वर्धन्ति मह्यस्य पौंस्यं नि मातरा नयति रेतसे भुजे ॥

---

निर्गतमिति वा यास्कोऽयनात्तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं पराध्यर्स्थमवभाति भूरिपादः पद्यते:' इति ॥ ६ ॥ १ ॥

( प्रवःपांत २।२।२५ ) हे अध्वर्य्वादयः, वो युष्माकं संबन्धि पान्तं पालनस्वभावं पातव्यं वा अन्धसः 'अन्धः सोमरूपमन्नं प्रार्चत प्रकर्षेण संपादयत' । कस्मै । धियायते स्तुतीरिच्छते महे महते शूराय विक्रान्तायेन्द्राय विष्णवे व्यापकाय एतन्नामकाय देवाय च । कस्तयोरतिशय इत्युच्यते—या यौ इन्द्राविष्णू पर्वतानां प्रीणनवतां पूरणवतां वा । पर्वतशब्दो यास्केनैवं निरुक्तः—'पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वे'ति । उक्तलक्षणानां लोकानां सानुनि समुच्छ्रितप्रदेशे । सर्वलोके इत्यर्थः । अथवा मेघानां समुच्छ्रितप्रदेशे । पर्वतशब्दो मेघनामसूक्तत्वात् तत्र तस्थतुः तिष्ठतः । कीदृशौ तौ । अदाभ्या अदम्भनीयौ परैरनभिभाव्यौ । अतएव महः महान्तौ । यद्वा महो महसि स्वतेजसि सानुनीत्यनेन संबन्धः । तत्र दृष्टान्तः—साधुना अभिमतदेशप्रापणसमर्थेन अर्वता वेगवता अश्वेनेव । तेन यथा अत्युच्छ्रितं प्रदेशमारोहति तद्वदुच्चं पदमारूढौ तस्मात्ताभ्यामर्चत ॥ १ ॥—हे इन्द्राविष्णू, शिमीवतोः इष्टप्रदादिकर्मवतोः वां युवयोः इत्था इत्थं त्वेषं प्रदीप्तं समरणं सम्यग्यागदेशगमनं सुतपाः हुतशिष्टसोमपीतयजमान उरुष्यति रक्षति यागेन पूजयति । यद्वा शिमीवतोः प्रहरणादिकर्मवतोः वां युवयोः त्वेषं दीप्तं शौर्योपेतं समरणं सम्यक् परस्परगमनोपेतं वृष्टिप्रदानाय मेघविदारणरूपं कर्म यजमान उरुष्यति रक्षति । स्तौतीत्यर्थः । कस्तयोरतिशय इत्युच्यते—या यौ इन्द्राविष्णू युवां मर्त्याय मनुष्याय हविर्दात्रे यजमानाय प्रतिधीयमानमित् प्रतिधातव्यं फलरूपं असनां असनं चलनशीलं प्रदानशीलमन्नादिकं अस्तुः अभिमतक्षेप्तुः निरसितुर्वा शत्रूणां कृशानोरग्नेः सकाशात् उरुष्यथः अविच्छेदेन प्रवर्तयथः । वह्नौ हुतं हविः स्वीकृत्य तन्मुखादेव फलमपि दास्यथेत्यर्थः ॥ २ ॥—ताः सोमरूपाः प्रसिद्धा आहुतयो यजमानेन हुताः ईं एतदस्येन्द्रस्य महि महत् पौंस्यं पुंसः कर्म वक्ष्यमाणरूपं बलं वर्धन्ति वर्धयन्ति । ईमित्यनर्थको वा । स चेन्द्रः सोमपानजनितं सामर्थ्यं मातरा द्यावापृथिव्यौ निनयति नितरां प्रापयति । किमर्थं । रेतसे प्राणिनां पुत्राद्युत्पादनसामर्थ्याय । भुजे तेषां भोगाय रक्षणाय वा । कुत्रेति तदुच्यते—दिवो द्योतमानस्यादित्यस्य अधि अधिकं रोचने रोचमाने मण्डले नाम नमनं द्यावापृथिव्योः स्थापितं सामर्थ्यं पुत्रः पुरुत्राता सर्वो जनः पितुः पालकाद्विष्णोरनुग्रहात् । यद्वा

दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः ॥ ३ ॥ तत्तदिदस्य पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य मीह्लुषः ॥ यः पार्थिवानि त्रिभिरिद्विगामभिरुरुक्रमिष्टोरुगायाय जीवसे ॥ ४ ॥ द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय मर्त्यो भुरण्यति ॥ तृतीयमस्य नकिरादधर्षति वयश्च न पतयन्तः पतत्रिणः ॥ ५ ॥ चतुर्भिः साकं नवतिं च नाम-

पितुः स्वोत्पादकात्स्वयमुत्पन्नं सत् अवरं निकृष्टं नाम पौत्रसंज्ञं परं तत् उत्कृष्टं पुत्र इति नाम तदुभयापेक्षया तृतीयं पितेति नाम दधाति धारयति। 'त्रीणि वाव रेतांसि पिता पुत्रः पौत्र' इति श्रुतेः। अस्यायमर्थः। अग्नौ हुताः सोमाहुतयः आदित्यमण्डलं प्राप्य द्वादशात्मनः सवितुर्मूर्त्यन्तराविन्द्राविष्णू पोषयन्ति तुष्टौ तौ मेघद्वारा वर्षतः तया वृष्ट्या सस्यादिद्वारा प्रजाः पुत्रपौत्रादिरूपेण वर्धयत इत्येवं महानुभावाविन्द्राविष्णू इति ॥ ३ ॥—अस्य महानुभावस्य तत्तत्पौंस्यं पुंस्त्वं पराक्रमातिशयं गृणीमसि गृणीमः स्तुमः। कीदृशस्यास्य। इनस्य सर्वस्य स्वामिनः त्रातुः पालकस्य अवृकस्य वृको हिंसकः शत्र्वादिः तद्रहितस्य मीळ्हुषः सेक्तुः नित्यतरुणस्य स्तुत्येषु पराक्रमेषु मध्यमेकमुदाहरति। यो विष्णुः पार्थिवानि पृथिव्यादीनि प्रथनवन्ति वा सामर्थ्यात् रजांसीति गम्यते। लोकत्रयस्यापि पृथिवीशब्दवाच्यत्वं पूर्वमुदाहृतं तानि त्रिभिरिद्विगामभिः त्रिभिरेव विविधगमनैः उरु विस्तीर्णं यथा भवति तथा क्रमिष्ट क्रान्तवान्। विचक्रम इत्यर्थः। उरुगायाय उरुगातव्याय जीवसे लोकत्रयलक्षणाय। यद्वा उरुगायाय षष्ठ्यर्थे चतुर्थी। उरुगायस्य विष्णोरीदृशं पराक्रमं गृणीमसि। किमर्थं। जीवसे जीवनाय रक्षणाय ॥ ४ ॥—अस्य स्वर्दृशः स्वर्गस्य सर्वस्य वा द्रष्टुर्विष्णोः द्वे इत्क्रमणे द्वे एव पदे मर्त्यो मनुष्यः अभिख्याय सर्वभूत्यादिना प्रख्याय भुरण्यति गच्छति भजते। भुरण्यतिः कण्ड्वादिर्गतिकर्मा। 'भुरण्यति शवति' इति तत्कर्मसु पाठात्। प्रसिद्धत्वाद्भूलोकं वृष्ट्यागमनादन्तरिक्षं चेत्युभे क्रमणे जानाति। अस्य विष्णोस्तृतीयं क्रमणं द्युलोकाख्यं कोऽपि मर्त्यो नकिः नैव आदधर्षति बुद्ध्या नाभिभवति ज्ञातुं न शक्नोतीत्यर्थः। न केवलं मनुष्य एव अपितु वयश्चन वेत्तारो मरुतोऽपि। कीदृशास्ते। पतयन्तः सर्वत्र गमनसमर्थाः तथा पतत्रिणः पतनशीला गरुडादयो वायवो वा नकिरादधर्षति नैव शक्नुवन्ति। धृषेर्लेट्यडागमः। सत्यलोकस्यात्यन्तविप्रकृष्टत्वेन सर्वेषामविषयत्वादिति भावः ॥ ५ ॥ अयमादित्यात्मा विष्णुः चतुर्भिः साकं सहितां नवतिं सचतुर्नवतिमित्यर्थः। एतत्संख्याकान्कालावयवान् नामभिः स्वकीयनमनप्रकारैः प्रेरणविशेषैः वृत्तं यथा भवति तथा व्यतीन् विविधानेव स्वभावान् वृत्तं चक्रं न बह्वरोपेतं चक्रमिव तद्यथा शत्रोरुपरि प्रक्षेपेण भ्रमयति तद्वदुक्तसंख्याकान्कालावयवान् अवीविपत् कम्पयति भ्रमयति। टु वेपृ कम्पने ण्यन्ताल्लुङि चङि रूपम्। के पुनस्त उच्यन्ते।

भिश्चक्रं न वृत्तं व्यतीँरवीविपत् ॥ बृहच्छरीरो विमिमान ऋक्वभिर्युवाऽकुमारः प्रत्येत्याहवम् ॥ ६ ॥ १ ॥

भवामित्रइति पञ्चर्चस्य सूक्तस्य दीर्घतमाविष्णुर्जगती(२।२।२६) ॐभवा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः ॥ अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ॥ १ ॥ यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति ॥ यो जातमस्य महतो महि

संवत्सर एकः अयने द्वे पञ्चर्तवः द्वादश मासाः चतुर्विंशत्यर्धमासाः त्रिंशदहोरात्राः अष्टौ यामाः एकस्मिन्दिने पर्यावर्तमानानि मेषादीनि द्वादशलग्नानीति मिलित्वा चतुरधिकनवतिसंख्याकान् अवीविपत् । ननु आदित्यः स्वयमपि इतरवत्परिभ्रमति कथं भ्रमयतीत्युच्यते । नैष दोषः । एतेषां भ्रामकस्य ध्रुवस्य विष्णोर्मूर्त्यन्तरत्वात् । अथवा स्वभ्रमणाधीनत्वादितरेषां परिभ्रमणस्य । अतः स्वयं भ्रमयतीत्युच्यते । एवं कालात्मको विष्णुः बृहच्छरीरः विराडात्मना । सर्वदेवमनुष्यादिशरीराणां स्वशरीरत्वाद्बृहच्छरीरत्वमेवोपपादयति । विमिमानः विविधमात्मानं मिमानः देवतिर्यगात्मना विभज्य स्थापयन् । यद्वा ऋक्वभिः स्तुतिमद्भिर्मन्त्रवद्भिर्वा विमिमानः । यद्यपि विभुः तथापि भक्त्यधीनत्वात्स्तुत्या मीयते । युवा सर्वत्र मिश्रणशीलः नित्यतरुणो वा अतएवाऽकुमारः अनल्पः एवंभूतो महाविष्णुराहवमाह्वानं प्रति एति गच्छति यज्ञदेशम् ॥ ६ ॥ १ ॥

( भवामित्रो २।२।२६ ) हे विष्णो, मित्रो न मितेर्दुःखात् त्राता सखा 'आदित्यो वा मित्रः प्रमीतेस्त्रायते' इति निरुक्तम् । शेव्यः साधुः सुखकर्ता घृतासुतिः घृतमुदकमासूयते येन स तादृशः । यद्वा घृतमाज्यमाभिमुख्येन नीयते यस्मै स तादृशः विभूतद्युम्नः प्रभूतयशाः प्रभूतान्नो वा एवयाः रक्षणस्य मिश्रयिता प्रापयिता सप्रथाः सर्वतः पृथुः प्रतिविशेषणं नो भवेति संबन्धः । 'द्व्यचोतस्तिङः' इति दीर्घः । उ इति पादपूरणः । हे विष्णो, त्वं यस्मादीदृशो भवसि अधास्मात् ते तव स्तोमः स्तोत्रविशेषः विदुषा त्वन्माहात्म्यवेदित्रा यजमानेन अर्ध्यः पुनःपुनः प्रवर्धनार्हः चित् एव । एकवारकरणेन संपूर्यत इत्यर्थः । तथा ते यज्ञश्च हविष्मता तेन यजमानेन राध्यः समाराधनीयः । यद्वा विदुषाहोरात्रा सोमो राध्यः हविष्मता यज्ञश्च राध्यः ॥ १ ॥—यः यो मर्त्यः पूर्व्याय पूर्वकालीनाय । नित्यायेत्यर्थः । वेधसे विविधजगत्कर्त्रे नवीयसे नित्यनूतनाय । अत्यन्तरमणीयायेत्यर्थः । स्तुत्याय वा सुमज्जानये स्वयमेवोत्पन्नाय । जनेरौणादिक इण् । 'सुमत्स्वयमित्यर्थ' इति यास्कः । यद्वा सुतरां मादयतीति सुमत् तादृशी जाया यस्य स तथोक्तः तस्मै सर्वजगन्मादनशीलश्रीपतय इत्यर्थः । बहुव्रीहौ 'जायाया निङ्' इति निङादेशः । समासान्तो वलिलोपः । उक्तगुणकाय विष्णवे व्यापकाय ददाशति हविरादिकं ददाति । किंच अस्य विष्णोर्महतो महानुभावस्य महि महत् पूज्यं जातं जन्म उत्पत्तिं हिरण्यगर्भादिरूपं जन्म

ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसत् ॥ २ ॥ तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन ॥ आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ॥ ३ ॥ तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः ॥ दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँऽअपोर्णुते ॥ ४ ॥ आयो विवाय सचथाय दैव्य इन्द्राय

---

ब्रवत् ब्रूयात्। ब्रवीतेर्लेट्यडागमः। संकीर्तयेत्। सेदु। उशब्दोऽपिशब्दार्थः। सोऽपि दाता स्तोता च श्रवोभिरन्नैः कीर्तिभिर्वा युक्तः सन् युज्यं चित् सर्वैर्गन्तव्यमेव तत्पदं अभि आभिमुख्येन असत् गच्छति प्राप्नोति ॥ २ ॥—हे स्तोतारः, तमु तमेव विष्णुं पूर्व्यं पूर्वार्हं अनादिसंसिद्धं ऋतस्य गर्भं यज्ञस्य गर्भभूतं। यज्ञात्मना उत्पन्नमित्यर्थः। 'यज्ञो वै विष्णुः' इति श्रुतेः। यद्वा ऋतस्योदकस्य गर्भं गर्भकारणं उदकोत्पादकमित्यर्थः। 'अप एव ससर्जादौ' इति स्मृतेः। एवंभूतं विष्णुं यथा विद जानीथ तथा जनुषा जन्मना स्वत एव केनचिद्वरलाभादिना पिपर्तन स्तोत्रादिना प्रीणयत यावदस्य माहात्म्यं जानीथ तावदित्यर्थः। विदेर्लेटि मध्यमबहुवचनम्। विदऋतस्येत्यत्र संहितायां 'ऋत्यकः' इति प्रकृतिभावः। किंच अस्य महानुभावस्य विष्णोर्नाम चित् सर्वैर्नमनीयमभिधानं सार्वात्म्यप्रतिपादकं विष्णुरित्येतन्नाम जानन्तः पुरुषार्थप्रदमित्यधिगच्छन्त आसमन्तात् विवक्तन वदत संकीर्तयत। यद्वा नाम यज्ञनाम नमनं विष्णोरेव सर्वेषां स्वर्गापवर्गसाधनाय इष्टयाद्यात्मना द्रव्यदेवतात्मना वा परिणाममजानन्तो यूयं विवक्तन ब्रूत स्तुत। वचेर्लोटि छान्दसः शपः श्लुः। 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम्। पूर्ववत्तनादेशः। इदानीं साक्षात्कृत्याह—हे विष्णो सर्वात्मक देव, महतस्ते तव सुमतिं सुष्ठु मतिं शोभनात्मिकां बुद्धिं वा आभजामहे सेवामहे वयं यजमानाः ॥ ३ ॥—मारुतस्य मरुतां ऋत्विजां संघातो मारुतं तद्वतः। मत्वर्थो लुप्यते। मरुतां देवानां संबन्धिनो वा वेधसः मेधाविनोऽस्य यजमानस्य तं प्रसिद्धं क्रतुं यागं यज्ञात्मकं विष्णुं 'यज्ञो वै विष्णुः' इति श्रुतेः। राजा राजमानो वरुणः सचन्त सेवते तमेव क्रतुं यागं अश्विना अश्विनौ सचेते। अन्येऽपि देवाः सचन्ते सेवन्ते। किंच विष्णुः सवनत्रयात्मना व्याप्तो विष्णुः सखिवान् यजमानादिसखिभिर्युक्तः सन् उत्तमं उत्कृष्टतमं अहर्विदं अहर्वेत्तारं। स्वर्गोत्पादकमित्यर्थः। दक्षं बलं फलप्रदानसामर्थ्यरूपं दाधार धृतवान्। किंच व्रजं च मेघं च। व्रज इति मेघनाम। 'व्रजः चरुः' इति तन्नामसु पाठात् तं वृष्ट्युदकाय अपोर्णुते अपगतावरणं करोति। आहुतिद्वारा यज्ञस्यैव वृष्ट्युत्पादकत्वात्। यद्वा मारुतस्य मरुत्संघातस्य देवगणस्य वेधसः विधातुः स्रष्टुर्विष्णोः क्रतुं कर्म पालनादिरूपं वरुणादयः सचन्ते तदधीनत्वात् पालनस्य स च सखिवान् इन्द्रमरुदादिसहायोपेतः सन् उक्तलक्षणं दक्षं वृष्ट्युत्पादनादिसामर्थ्यरूपं बलं दाधार। तथा व्रजं चोर्णुते ॥ ४ ॥—यो विष्णुः दैव्यः दिवि भवः सुकृत्तरः शोभनफलप्रदानां मध्ये श्रेष्ठः आविवाय आगच्छति।

विष्णुः सुकृते सुकृत्तरः ॥ वेधा अजिन्वत्त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत् ॥ ५ ॥ १ ॥

संवामित्यष्टर्चस्य भरद्वाज इन्द्राविष्णू त्रिष्टुप् ॥(५।१।१३)

ॐ सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य ॥ जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ॥१॥ या विश्वासां जनितारा मतीनामिन्द्राविष्णू कलशा सोमधाना ॥ प्र वां गिरः शस्यमाना अवन्तु प्र स्तोमासो गीयमानासो अर्कैः ॥ २ ॥ इन्द्राविष्णू मदपती मदानामा सोमं यातं द्रविणो दधाना ॥ सं वामञ्जन्त्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानास

---

वेत्तेर्लिटि रूपम् । किमर्थं सचथाय सचनाय यागसहायकरणाय कस्मै इन्द्राय इरां हविर्लक्षणान्नं द्रावयतीतीन्द्रो यजमानः । 'इन्द्र इरां दृणातीति इदंकरणादित्याग्रायण' इति यास्केनोक्तनिर्वचनस्यात्रापि सद्भावात् । तस्मा उक्तरूपाय यजमानाय सुकृते शोभनस्तुतिकर्त्रे आगत्य च वेधा अभिमतफलविधाता त्रिषधस्थः त्रिसंख्योपेतसहस्थानवान् सवनत्रयस्थानः क्षित्यादिस्थानत्रयो वा विष्णुः आर्यं आगन्तव्यं यजमानं अजिन्वत् प्रीणयति । जिविः प्रीणनार्थः । इदित्त्वान्नुम् । तदर्थं ऋतस्य यज्ञस्य भागे हुतशेषरूपे तं यजमानं आभजत् भजति । समीपयतीत्यर्थः । यद्वा ऋतस्य यज्ञस्य भागे फले यजमानं आभजत् स्वामित्वेन स्थापयति ॥ ५ ॥ १ ॥

( संवां कर्मणा ५।१।१३ ) हे इन्द्राविष्णू वां युवां कर्मणा स्तोत्रेण इषा हविषा च संहिनोमि सम्यक् प्रेरयामि । अपसः कर्मणः अस्य उक्थस्य पारे समाप्तौ यज्ञं जुषेथां सेवेथाम् । किंच अरिष्टैः अनुपद्रवैः पथिभिर्मार्गैः नोऽस्मान् पारयन्ता पारं नयन्तौ युवां द्रविणं धनं दत्तमस्मभ्यं दत्तम् ॥ १ ॥ या यौ प्रसिद्धाविन्द्राविष्णू विश्वासां सर्वासां मतीनां स्तुतीनां जनितारा जनितारौ । जन जनने इत्यस्माद्धातोस्तृचीदं रूपम् । यद्वा जनी प्रादुर्भावे इत्यस्माद्धातोरेव तृचि 'जनिता मन्त्रे' इति निपातनाण्णिलोपः । कलशा कलशौ सोमधाना सोमस्य निधानभूतौ च स्याताम् । अथ प्रत्यक्षस्तुतिः । हे इन्द्राविष्णू, वां युवां शस्यमाना उच्चार्यमाणाः शस्त्ररूपा गिरो वाचः प्रावन्तु प्राप्नुवन्तु अर्कैः स्तोतृभिः गीयमानासः गीयमानाः स्तोमाः स्तोमासः स्तोत्राणि च प्रावन्तु प्राप्नुवन्तु ॥ २ ॥—हे इन्द्राविष्णू, मदानां सोमानां मदपती स्वामिनौ । मदपती इत्यत्र मदशब्दोऽनुवादः । द्रविणो द्रविणानि धनान्यपि । द्रविणा उ इति पदद्वयमेकीभूय द्रविणो इति निष्पन्नं पदम् । दधाना ददानौ युवां सोममभि आयातं मतीनां स्तोतॄणां स्तोमासः स्तोत्राणि उक्थैः शस्त्रैः सार्धं शस्यमानास उच्चार्य-

उक्थैः॥३॥आ वामश्वासो अभिमातिषाह इन्द्राविष्णू सधमादौ वहन्तु ॥ जुषेथां विश्वा हवना मतीनामुप ब्रह्माणि शृणुतं गिरो मे ॥४॥ इन्द्राविष्णू तत्पनयाय्यं वां सोमस्य मद उरु चक्रमाथे ॥ अकृणुतमन्तरिक्षं वरीयोऽप्रथतं जीवसे नो रजांसि ॥५॥ इन्द्राविष्णू हविषा वावृधानाग्राद्वाना नमसा रातहव्या ॥ घृतासुती द्रविणं धत्तमस्मे समुद्रः स्थः कलशः सोमधानः ॥६॥ इन्द्राविष्णू पिबतं मध्वो अस्य सोमस्य दस्रा जठरं पृणेथाम् ॥ आ वामन्धांसि मदिराण्यग्मन्नुप ब्रह्माणि शृणुतं हवं मे ॥७॥ उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः ॥ इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथां ॥ ८ ॥ १ ॥

---

माणाः वां युवां अक्तुभिः तेजोभिः समजन्तु समर्धयन्तु । संसमिति द्विरुक्तिरादरार्था ॥ ३ ॥ हे इन्द्राविष्णू, वां युवां अभिमातिषाहः अभिमातीनां हिंसकानां अभिभवितारः सधमादः सहमाद्यन्तः अश्वासः अश्वाः आवहन्तु । मतीनां स्तोतॄणां विश्वा विश्वानि हवना हवनानि स्तोत्राणि जुषेथां सेवेथां । तदर्थं मे मदीयानि ब्रह्माणि स्तोत्राणि गिरः शस्त्ररूपा वाचश्च उपश्टणुत ॥ ४ ॥— हे इन्द्राविष्णू, वां युवयोः तत्कर्म पनयाय्यं स्तुत्यं । किं तत्कर्मेत्यत आह । सोमस्य मदे सति यदुरु विस्तीर्णं चक्रमाथे विचक्रमाथे । यद्यपि विष्णोरेव विक्रमः तथाप्येकार्थत्वादुभयोरित्युच्यते । यच्चान्तरिक्षं वरीयः उरुतरं अकृणुतं अकुरुतं, यदपि च रजांसि लोकान् सर्वान् । 'लोका रजांस्युच्यन्त' इति यास्कः । नोऽस्माकं जीवनाय अप्रथतं अप्रथयतम् ॥ ५ ॥— घृतासुती घृतान्नाविन्द्राविष्णू । युवां हविषा सोमेन वावृधाना वर्धमानौ अग्राद्वाना सोमाग्रस्य शुक्रस्यात्तारौ नमसा नमस्कारेण रातहव्या दत्तहविष्कौ यजमानैरस्मै अस्मभ्यं द्रविणं धनं धत्तं प्रयच्छतम् । किंच युवां समुद्रः उदधिरिव स्थो भवथः यतः सोमधानः सोमनिधानकलशो भवथः ॥ ६ ॥ हेदस्रा दर्शनीयाविन्द्राविष्णू युवां मध्वः अस्य मदकरं सोमस्य सोमं पिबतम् । किंच जठरं उदरं पृणेथां सोमेन पूरयेथाम् । हे इन्द्राविष्णू, वां युवां मदिराणि मदकराणि अन्धांसि सोमात्मकान्यन्नानि आग्मन् अभिगच्छन्तु । मे मदीयानि ब्रह्माणि स्तोत्राणि हवं मदीयमाह्वानं चोपश्टणुतम् ॥ ७ ॥—हे इन्द्राविष्णू, उभा उभौ युवां जिग्यथुः शत्रून् जैष्टं न पराजयेथे न पुनः कदाचन पराजयेथे एनोरेनयोर्युवयोर्मध्ये कतरश्चन एकतरोऽपि न पराजिग्ये न पराजैष्ट । हे विष्णो, इन्द्रश्च त्वं च युवां यत् यद्वस्तु प्रत्यपस्पृधेथां असुरैः सहास्पृहेथां त्रेधा लोकवेदवागात्मना त्रिधा स्थितं सहस्रमितं च वितदैरयेथाम् । व्यक्रमेथामित्यर्थः । तथाच ब्राह्मणम् 'उभाजिग्यथुरित्य-

# देवीसूक्तम् ।

अहं रुद्रेभिरित्यष्टर्चं त्रयोदशं सूक्तं अम्भृणस्य महर्षेर्दुहिता ब्रह्मविदुषी स्वात्मानमस्तौत् अतः सा ऋषिः सच्चित्सुखात्मकः सर्वगतः परमात्मा देवता । द्वितीया जगती शिष्टाः सप्त त्रिष्टुभः ॥ ( ८।७।११ ) ॐ अ॒हं रु॒द्रेभि॒र्वसु॑भिश्चराम्य॒हमा॑दि॒त्यैरु॒त वि॒श्वदे॑वैः ॥ अ॒हं मि॒त्रावरु॑णो॒भा बि॑भर्म्य॒हमि॑न्द्रा॒ग्नी अ॒हम॒श्विनो॒भा ॥ १ ॥ अ॒हं सोम॑माह॒नसं॑ बिभर्म्य॒हं त्वष्टा॑रमु॒त पू॒षणं॒ भग॑म् ॥ अ॒हं द॑धामि॒ द्रवि॑णं ह॒विष्म॑ते सुप्रा॒व्ये॒३॒॑ यज॑मानाय सुन्व॒ते ॥२॥ अ॒हं राष्ट्री॑ सं॒गम॑नी॒ वसू॑नां चिकि॒तुषी॑ प्रथ॒मा य॒ज्ञिया॑नाम् ॥ तां मा॑ दे॒वा व्य॑दधुः

---

च्छावस्योभौ हितौ जिग्यथुर्न पराजयेथे न पराजिग्य इति न हि तयोः कतरश्चन पराजिग्य इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वितदैरयेथामितीन्द्रश्च ह वै विष्णुश्चासुरैर्युयुधाते तान्हत्स जित्वोचतुः कल्पा महा इति तेह तथेत्यसुरा ऊचुः सोऽब्रवीदिन्द्रो यावदेवायं विष्णुर्विष्णुस्त्रिविक्रमते तावदस्माकमथ युष्माकमितरदिति स इमाँल्लोकान्विचक्रमेऽथो वेदानथो वाचं तदाहुः किं तत्सहस्रमितीमे लोका इमे वेदा—अथो वागिति ब्रूयादैरयेथामैरयेथामिति' । यद्वा तत्सहस्रं गवां सहस्रं त्रेधा व्यैरयेथामित्यर्थः ॥ ८ ॥ इति विष्णुसूक्तानि ।

( अहं रुद्रेभिः ८।७।११ ) अहं रुद्रस्य द्रष्ट्री वाक् आम्भृणी यद्ब्रह्म जगत्कारणं तद्रूपा भवन्ती रुद्रेभिः रुद्रैः एकादशभिः । इत्थंभावे तृतीया । तदात्मना चरामि । एवं वसुभिरित्यादौ तत्तदात्मना चरामीति योज्यम् । एवंच मित्रावरुणेत्यत्र 'सुपां सुलुक्' इति द्वितीयाया आकारः । उभोभावहमेव ब्रह्मीभूता बिभर्मि धारयामि । इन्द्राग्नी अप्यहमेव धारयामि । उभोभावश्विना अश्विनावप्यहमेव धारयामि । मयि सर्वं जगत् शुक्तौ रजतमिवाध्यस्तं सदृश्यते । माया च जगदाकारेण विवर्तते तादृश्या मायया आधारत्वेनासङ्गस्यापि ब्रह्मण उक्तस्य सर्वस्योत्पत्तिः ॥ १ ॥—आहनसमाहन्तव्यं अभिषोतव्यं सोमम् । यद्वा शत्रूणामाहन्तारं दिवि वर्तमानं देवतात्मानं सोमं अहमेव बिभर्मि । तथा त्वष्टारं उतापि च पूषणं भगं चाहमेव बिभर्मि । तथा हविष्मते हविर्भिर्युक्ताय सुप्राव्ये शोभनं हविः देवानां प्रापयित्रे तर्पयित्रे । अवतेस्तर्पणार्थात् 'अवितृस्तृतन्त्रिभ्य ईः' इतीकारः प्रत्ययः । चतुर्थ्येकवचने यणि 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति सुपः स्वरितत्वम् । सुन्वते सोमाभिषवं कुर्वते । 'शतुरनुमः' इति चतुर्थ्या उदात्तत्वम् । ईदृशाय यजमानाय द्रविणं धनं यागफलरूपं अहमेव धारयामि । एतच्च ब्रह्मणः फलदातृत्वं 'फलमत उपपत्तेः' इत्यधिकरणे भगवता भाष्यकारेण समर्थितम् ॥ २ ॥—अहं राष्ट्री । ईश्वरनामैतत् । सर्वस्य जगत

पुरुत्रा भूरिं स्थात्रां भूर्यावेशयन्तीम् ॥ ३ ॥ मयासो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ॥ अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ ४ ॥ अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ॥ यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ५ ॥ १ ॥ अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ ॥ अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आवि-

---

ईश्वरी । तथा वसूनां धनानां संगमनी संगमयित्री उपासकानां प्रापयित्री चिकितुषी यत्साक्षात्कर्तव्यं परं ब्रह्म तज्ज्ञानवती स्वात्मतया साक्षात्कृतवती । अतएव यज्ञियानां यज्ञार्हाणां प्रथमा मुख्या यैवंगुणविशिष्टाहं तां मां भूरिस्थात्रां बहुभावेन प्रपञ्चात्मनावतिष्ठमानां भूरि भूरीणि बहूनि भूतजातानि आवेशयन्तीं जीवभावेन आत्मानं प्रवेशयन्तीं ईदृशीं मां पुरुत्रा बहुषु देशेषु व्यदधुः देवाः विदधति कुर्वन्ति । उक्तप्रकारेण विश्वरूपेणावस्थानात् यद्यत्कुर्वन्ति तत्सर्वं मामेव कुर्वन्तीत्यर्थः ॥ ३ ॥—योऽन्नमत्ति स भोक्तृशक्तिरूपया मयैवान्नमत्ति । यश्च विपश्यति । आलोकयतीत्यर्थः । यश्च प्राणिति श्वासोच्छ्वासादिव्यापारं करोति सोऽपि मयैव । यश्चोक्तं शृणोति । श्रु श्रवणे 'श्रुवः शृ च' इति श्रुधातोः शृभावः । य ईदृशीमन्तर्यामिरूपेण स्थितां मां न जानन्ति ते अमन्तवः अमन्यमानाः अजानन्तः उपक्षियन्ति उपक्षीणाः संसारेण हीना भवन्ति । मनेरौणादिकस्तुप्रत्ययः । नञ्समासे व्यत्ययेनान्तोदात्तत्वम् । यद्वा भावे तुप्रत्ययः । ततो बहुव्रीहौ 'नञ्सुभ्यां' इत्युत्तरपदान्तोदात्तत्वम् । माममन्तवः मद्विषयज्ञानरहिता इत्यर्थः । हे श्रुत विश्रुत सखे, श्रुधि मया वक्ष्यमाणं शृणु । छान्दसो विकरणस्य लुक् । 'श्रुशृणुपृकृवृभ्यः' इति हेर्धिभावः । किं तच्छ्रोतव्यम् । श्रद्धिवं श्रद्धिः श्रद्धा तया युक्तम् । श्रद्धावत्त्वेन लक्ष्यमित्यर्थः । 'श्रदन्तरोरुपसर्गवद्वृत्तिरिष्यते' इति श्रच्छब्दस्य उपसर्गवद्वर्तमानत्वात् 'उपसर्गे घोः किः' इति किप्रत्ययः । मत्वर्थीयो वः । ईदृशं ब्रह्मात्मकं वस्तु ते तुभ्यं वदाम्युपदिशामि ॥ ४ ॥—अहं स्वयमेव इदं वस्तु ब्रह्मात्मकं वदाम्युपदिशामि । देवेभिर्देवैः इन्द्रादिभिरपि जुष्टं सेवितम्, उतापि च मानुषेभिर्मनुष्यैरपि जुष्टं ईदृग्वस्त्वात्मिका अहं कामये यं पुरुषं रक्षितुमहं वाञ्छामि तं तं पुरुषं उग्रं कृणोमि सर्वेभ्योऽधिकं करोमि । तमेव ब्रह्माणं स्रष्टारं करोमि । तमेव ऋषिं अतीन्द्रियार्थदर्शिनं करोमि । तमेव सुमेधां शोभनप्रज्ञं च करोमि ॥ ५ ॥ १ ॥—पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य । षष्ठ्यर्थे चतुर्थी । महादेवस्य धनुश्चापं अहमातनोमि ज्यया ततं करोमि । किमर्थम् । ब्रह्मद्विषे ब्राह्मणानां द्वेष्टारं शरवे शरुं हिंसकं त्रिपुरनिवासिनमसुरं हन्तवै हन्तुं हिंसितुम् । हन्तेः 'तुमर्थे सेसेन्' इति तवैप्रत्ययः । 'अन्तश्च तवै युगपत्' इत्याद्यन्तयोर्युगपदुदात्तत्वम् । शॄ हिंसायां

वेश ॥ ६ ॥ अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे ॥ ततो वितिष्ठे भुवनानि विश्वोतामूं द्यां वर्ष्मणोपस्पृशामि ॥७॥ अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा ॥ परो दिवा पर एना पृथिव्यै तावती महिना संबभूव ॥ ८ ॥ २ ॥

---

इत्यस्मात् 'शॄस्वृस्निहि–' इत्यादिना उप्रत्ययः । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी । उशब्दः पूरकः । अहमेव समदं समानं माद्यन्त्यस्मिन्निति समत्संग्रामः । स्तोतृजनार्थं शत्रुभिः सह संग्रामं अहमेव कृणोमि करोमि । तथा द्यावापृथिवी दिवं च पृथिवीं च अन्तर्यामितया अहमेवाविवेश प्रविष्टवती ॥६॥— 'द्यौः पिता' इति श्रुतेः पिता द्यौः पितरं दिवं अहं सुवे प्रसुवे जनयामि । 'आत्मन आकाशः संभूतः' इति श्रुतेः । कुत्रेति तदाह । अस्य परमात्मनः मूर्धन् मूर्धनि उपादानकारणभूते । तस्मिन्हि वियदादिकार्यजातं सर्वं वर्तते तन्तुषु पट इव । मम च योनिः कारणं समुद्रे समुद्द्रवन्त्यस्माद्भूतजातानीति समुद्रः परमात्मा तस्मिन् । अप्सु व्यापनशीलासु धीवृत्तिषु अन्तर्मध्ये यद्ब्रह्मचैतन्यं तन्मम कारणमित्यर्थः । यत ईदृग्भूताहमस्मि ततो हेतोर्विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अनु प्रविश्य वितिष्ठे विविधं व्याप्य तिष्ठामि । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । उतापिच अमूं द्यां विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकम् । उपलक्षणमेतत् । एतदुपलक्षितं कृत्स्नं विकारजातं वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन उपस्पृशामि । यद्वा अस्य भूलोकस्य मूर्धन्मूर्धन्युपरि अहं पितरमाकाशं सुवे । समुद्रे जलधौ अप्सु उदकेषु अन्तर्मध्ये मम योनिः कारणभूतोऽम्भृणाख्य ऋषिर्वर्तते । यद्वा समुद्रेऽन्तरिक्षे अप्सु अम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्मचैतन्यं वर्तते ततोऽहं कारणात्मिका सती सर्वाणि भुवनानि व्याप्नोमि । अन्यत्समानम् ॥ ७ ॥—विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कारणरूपेणोत्पादयन्ती अहमेव परेणानधिष्ठाता स्वयमेव प्रवामि प्रवर्ते । वात इव । यथा वातः परेणाप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत् । उक्तं सर्वं निगमयति । परो दिवा । पर इति सकारान्तं परस्तादित्यर्थे वर्तते । यथा अध इति अधस्तादित्यर्थे । तद्योगे च तृतीया सर्वत्र दृश्यते । दिव आकाशस्य परस्तात् एना पृथिव्या 'द्वितीयाटौस्स्वेनः' इति इदम एनादेशः । अस्याः पृथिव्याः परः परस्तात् द्यावापृथिव्योरुपादानमुपलक्षणं एतदुपलक्षितात्सर्वस्माद्विकारजातात्परस्ताद्वर्तमाना असङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपाहं महिना महिम्ना एतावती संबभूव । एतच्छब्देनोक्तं सर्वं परामृश्यते । एतत्परिमाणमस्याः 'यत्तदेतेभ्यः परिमाणे' इति वतुप् । 'आ सर्वनाम्नः' इत्यात्वम् । सर्वजगदात्मना अहं संभूतास्मि । महच्छब्दादिमनिचि 'टेः' इति टिलोपः । ततः तृतीयायां उदात्तनिवृत्तिस्वरेण तस्या उदात्तत्वं छान्दसो मलोपः ॥ ८ ॥ २ ॥ इति देवीसूक्तम् ॥

## श्रीसूक्तम् ।

हिरण्यवर्णामिति पञ्चदशर्चस्य सूक्तस्य आनन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः श्रीरग्निश्चेत्युभे देवते आद्यास्तिस्रोऽनुष्टुभः चतुर्थी बृहती पञ्चमीषष्ठ्यौ त्रिष्टुभौ ततोऽष्टावनुष्टुभः अन्त्या प्रस्तारपङ्क्तिः ॥ जपे विनियोगः ॥ ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ॥ चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ॥ श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ॥ ३ ॥ कां सोस्मितां हिर-

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ प्रथमवर्गे प्रथमा ऋक् ॥ हिरण्यवर्णामित्यादि ॥ हे जातवेदः जातप्रज्ञ अग्ने त्वं हिरण्यवर्णां हिरण्यस्य सुवर्णस्येव वर्णः कान्तिर्यस्यास्ताम् । हरिणीं हरितवर्णां हरिणीरूपधरां वा । 'श्रीर्धृत्वा हरिणीरूपमरण्ये संचचार ह' इति पुराणात् । सुवर्णरजतस्रजां सुवर्णस्य पुष्पाणि सुवर्णानि एवं रजतस्य पुष्पाणि रजतानि तेषां स्रजो माला यस्यास्ताम् । स्रक्साहचर्यात्पुष्पाणीत्यवगम्यते । पुष्पसादृश्यात् 'पुष्पमूल' इत्यादिना लुक् । 'आपं चैव हलन्तानाम्' इत्याप् । यद्वा सुवर्णरजतविकृतशृङ्खलाम् । सुष्ठु वर्णो यस्य तत्सुवर्णं यद्रजतं च तत्पुष्पस्रजां तद्विकृतशृङ्खलां वा । चन्द्रां चन्द्रवत्प्रकाशमानां तद्रूपेणावस्थितां वा । हिरण्मयीं हिरण्यस्वरूपां हिरण्यविग्रहां वा । लक्ष्मीं लक्षणवतीं । 'लक्ष्मीर्लाक्षालक्षणात्' इति निरुक्तात् । एवंरूपां श्रियम् । मे मह्यं मदर्थम् । आवह आह्वय । अग्नेर्देवहोतृत्वादाह्वानं तदधीनमिति भावः ॥ १ ॥—हे जातवेदः अग्ने, त्वं अनपगामिनीमपगमनरहिताम् । अनपायिनीमित्यर्थः । तां वक्ष्यमाणां लक्ष्मीं मे मह्यं आवह आह्वय । यस्यां श्रीदेव्यामाहूतायां सत्यां हिरण्यं सुवर्णं गां धेनुं अश्वं वाजिनं । पुरुषान् पुत्रमित्रदासभूतान् । अहं विन्देयं प्राप्नुयाम् ॥ २ ॥—अश्वपूर्वां अश्वाः पूर्वे पुरोगाः यस्यास्ताम् । रथमध्यां रथाः मध्ये यस्यास्ताम् । हस्तिनादप्रबोधिनीं हस्तिनां नादेन बृंहितेन प्रबोधिनीं प्रकर्षेण ज्ञापिकाम् । देवीं देवनशीलां द्योतनशीलां वा । श्रियं श्रयणीयां सेनारूपाम् । उपह्वये समीपं प्रत्याह्वये । एतादृशी देवीः देवी श्रीः मा मां जुषतां सेवताम् ॥ ३ ॥—कां वा वाङ्मनसयोरगोचराम् । दुर्निरूपस्वरूपामित्यर्थः । ब्रह्मरूपां वा । 'को हि ते नाम प्रजापते' इति श्रुत्यन्तरात् 'क इति ब्रह्मणो नाम' इति पुराणाच्च । सोस्मितां आ ईषत् उत् उद्गतं यत् स्मितं हासः तेन सहिताम् । उदन्त्यलोपश्छान्दसः । हिरण्यप्राकारां हिरण्यस्य प्राकारो

ण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ॥ पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ॥ तां पद्मिनीमीं शरणं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ ५ ॥ १ ॥ आदित्यवर्णे तपसोधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ॥ तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ ६ ॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह ॥ प्रादुर्भूतोस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥७॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ॥ अभूतिमसंमृद्धिं च सर्वां

---

वरणः प्रकृष्य आकृतिर्वा यस्यास्ताम् । आर्द्रां क्लिन्नां क्षीरोदधेरुत्पन्नत्वात् । आर्द्रानक्षत्रोत्पन्नां रुद्ररूपां वा । रुद्रशब्दोऽत्र मूर्धन्यस्वरादिः । 'आर्द्रया रुद्रः प्रथमान एति' इत्यादौ तथा दर्शनात् । अस्य बाहुलकम् । ज्वलन्तीं प्रकाशमानाम् । तृप्तां पूर्णकामाम् । अपिच तर्पयन्तीं भक्तान्मनोरथैरिति शेषः । पद्मे स्थितां कमले आसीनाम् । पद्मवर्णां कमलवदच्छायच्छविं तां प्रसिद्धां श्रियं उपह्वये आह्वये ॥ ४ ॥—अत्राहंशब्दप्रक्षेपः प्रामादिकः । चन्द्रां चन्द्रवत्प्रकाशमानाम् । प्रभासां प्रकृष्टा भाः कान्तिर्यस्यास्ताम् । 'आपं च' इत्याप् । यशसा कीर्त्या ज्वलन्तीं प्रकाशमानाम् । देवजुष्टां देवैरिन्द्राद्यैः सेवितां प्रीतां वा उदारां प्रगल्भां वा पद्मिनीं पद्मलतारूपां पद्माकारां वा । ईमिति निपातोऽनर्थकः । 'मिताक्षरेष्वनर्थकः किमिमीमि'ति यास्कवचनादीकारवाच्यां वा । तां श्रियं लोके इह लोके शरणं रक्षित्रीं प्रपद्ये प्रपन्नोऽस्मि । अहमिति शेषः । अतः हे श्रीः मे मम अलक्ष्मीः अश्रीः नश्यतां नाशं प्राप्नोतु । त्वां वृणे शरणत्वेन कुर्वे ॥ ५ ॥ इति प्रथमवर्गः ॥ १ ॥ अत्र वृक्षोऽथेत्यथपदमपि बाहुलकात् । आदित्यवर्णे आदित्यस्य सूर्यस्य वर्ण इव वर्णो यस्यास्तस्याः संबोधनं हे श्रीः, तव तपसः नियमाद्धेतोः वनस्पतिः । 'अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः' इति मानवात् । बिल्वः बिल्वनामकः वृक्षः द्रुमः अधिजातः प्रादुर्भूतः । त्वत्करादिति शेषः । 'बिल्वो लक्ष्म्याः करेऽभवत्' इति वामनपुराणे कात्यायनवचनात् । अथ अनन्तरं तस्य बिल्वस्य फलानि पक्वशलाटुकानि । तपसा त्वदनुग्रहेणेत्यर्थः । अन्तरा अन्तरिन्द्रियसंबन्धिनीः माया अज्ञानं तत्कार्याणि च । बाह्याः बहिरिन्द्रियसंबन्धिन्यो यास्ताः । अलक्ष्मीः अश्रियः । नुदन्तु अपनुदन्तु निवारयन्त्वित्यर्थः ॥ ६ ॥ हे श्रीः, देवसखः देवो महादेवस्तस्य सखा कुबेरः । कीर्तिः कीर्त्यभिमानिनी तदाख्या दक्षकन्या देवता । मणिना चिन्तामणिना मणिभद्रेण कोशाध्यक्षेण वा सह सहितः अहं अस्मिन् राष्ट्रे जनपदे प्रादुर्भूत उत्पन्नः अस्मि आसम् । स देवसखस्तत्संबन्धिसंगत्या । कीर्तिं यशः कोशं वा । ऋद्धिं सर्वभोग्यसमृद्धिं मे मह्यं ददातु यच्छतु ॥ ७ ॥ क्षुत्पिपासामलां अश-

निर्णुद मे गृहात् ॥ ८ ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीँ सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥ मनसः काममाकूतिं वाचः सत्यमशीमहि ॥ पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः॥१०॥२॥ कर्दमेन प्रजा भूता मयि संभव कर्दम ॥ श्रियँ वासय मे कुले मातरँ पद्ममालिनीम् ॥ ११ ॥ आपः स्रजन्तु स्निग्धानि चिक्लीत वस मे गृहे ॥ नि च देवीं मातरं श्रियँ वासय मे कुले ॥ १२ ॥ आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलाँ पद्ममालिनीम्॥ चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १३ ॥ आर्द्रां यःकरिणीं यष्टिं सुवर्णां हेममालिनीम् ॥ सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १४ ॥

---

नायातृष्णामलिनात्मिकाम् । ज्येष्ठाम् श्रियः प्रागुत्पन्नामित्यर्थः । अलक्ष्मीं अश्रियं अहं नाशयामि नाशं प्रापयामि । हे श्रीः, त्वं अभूतिं असंपत्तिं तथा सर्वां असमृद्धिमपि अनभिवृद्धिं मे मम गृहात् गेहात् निर्णुद निष्कासय ॥ ८ ॥ गन्धः घ्राणग्राह्यो गुणः द्वारं लक्षणं यस्यास्तां दुराधर्षां केनापि धर्षितुमशक्यां नित्यपुष्टां नित्यं सदा सस्यादिभिः पुष्टां समृद्धां करीषिणीं करीषः शुष्कगोमयादिस्तद्वतीम् । गवाश्वादिबहुपशुसमृद्धामिति यावत् । सर्वभूतानां सकलप्राणिनां ईश्वरीमधिष्ठात्रीं आधारभूतां वा । तां भूरूपां श्रियं इह उपह्वये उपाह्वये ॥ ९ ॥ हे श्रीः, मनसः कामं मनोरथं आकूतिं संकल्पं वाचः वागिन्द्रियस्य सत्यं याथार्थ्यं । पशूनां गोमहिष्यादीनां रूपं क्षीरादि । अन्नस्य अदनीयस्य यवव्रीह्यादेः रूपं भक्ष्यादिचतुर्विधं अशीमहि लभेमहि । श्रीः संपत् यशः कीर्तिश्च मयि त्वदुपासके श्रयतां आश्रयताम् ॥ १० ॥ इति द्वितीयवर्गः ॥ २ ॥—कर्दमेन कर्दमाख्यपुत्रेण प्रजा भूता प्रकृष्टं प्रजा अपत्यं यस्याः सा सपुत्रेत्यर्थः । 'प्रजाऽपत्यम्' इति यास्कवचनात् । भूता अभवत् । अतः हे कर्दम श्रीपुत्र, त्वं मयि मदीयगृहे संभव संवस । पद्ममालिनीं कमलमालाधारिणीं मातरं तव जननीं श्रियं लक्ष्मीं मे मम कुले वंशे वासय निवासय ॥ ११ ॥—आपः अबभिमानिन्यो देवताः स्निग्धानि स्नेहयुक्तानि कार्याणि सृजन्तु उत्पादयन्तु । अपां स्नेहगुणवत्त्वादिति भावः । हे चिक्लीत चिक्लीताख्यश्रीपुत्र, मे मम गृहे गेहे निवस च वासं कुरु । अपिच तां देवीं मातरं श्रियं मे मम कुले निवासय संवासय ॥ ११ ॥—आर्द्रामिति । आर्द्रां आर्द्रगन्धां पुष्करिणीं अभिषेकोद्युक्तदिग्गजशुण्डाग्राम् । पुष्करशब्दो गजशुण्डाग्रवाचकः । पद्मवतीं वा पद्मलतारूपां वा । पुष्टिं पुष्ट्यभिमानिनीं पुष्टिरूपां वा । 'पुष्टिरूपेण संस्थिता' इति मार्कण्डेयवचनात् । पिङ्गलां पिङ्गलवर्णां पद्ममालिनीमित्यादि । सिद्धमन्यत् ॥ १३ ॥ मतान्तरे मन्त्रपाठो भिद्यते नच उत्तरार्गत्येवावगम्यते ॥—आर्द्रां पूर्वोक्तां यःकरिणीं

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यं प्रभूतिं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥ १५ ॥ ॥ ३ ॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ॥ सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ १६ ॥ पद्मानने पद्म ऊरू पद्माक्षी पद्मसंभवे ॥ तन्मे भजसि पद्माक्षी येन सौख्यं लभाम्यहम् ॥ अश्वदायै गोदायै धनदायै महाधने ॥ धनं मे जुषतां देवि सर्वकामांश्च देहि मे ॥ पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि ॥ विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं मयि संनिधत्स्व ॥ पुत्रपौत्रधनं धान्यं हस्त्यश्वादिगवे रथम् ॥ प्रजानां भवसी माता आयुष्मन्तं करोतु मे ॥ धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ॥ धनमिन्द्रो बृहस्पतिर्वरुणं धनमस्तु ते ॥ वैनतेय सोमं पिब सोमं पिबतु वृत्रहा ॥ सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥ न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ॥ भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥ सरसिजनिलये सरोजहस्ते धवल-

---

यष्टिकराम् । वेत्रहस्तामित्यर्थः । टिलोपश्छान्दसः । तद्वतीं दण्डकरिणीं दण्डकरां वा । यष्टिं दण्डरूपां 'धर्मदण्डस्वरूपिणीम्' इति ब्राह्मोक्तेः । सुवर्णां शोभनवर्णां रुक्मरूपिणीं रुक्मिणीं रुक्मदेवतां वा । हेममालिनीं हेमविकृतश्रृङ्खलादिमालावतीम् । सूर्यां सूर्यवत्प्रकाशमानां तद्रूपां वा । सिद्धमन्यत् ॥१४॥—इयं ऋक् द्वितीयया ऋचा व्याख्याता । प्रभूतं भूयिष्ठं । गावः गाः । दास्यः परिचारिकाः । उभयत्र शसर्थे जस् । इयान् विशेषः । इति तृतीयो वर्गः ॥ १५ ॥ यः श्रीकामः स शुचिः प्रयतश्च भूत्वा सततं संकल्पदिनादिपञ्चदशाब्देषु प्रत्यहं स्वशाखोक्तविधानेनाग्निं संस्कृत्य श्रीसूक्तपञ्चदशऋग्भिः पञ्चदशाज्याहुतीर्हुत्वा ततः परं श्रियः श्रीसूक्तस्य-पञ्चदशर्चं साकल्येनैकवारमिति यथाशक्त्यखण्डपारायणं कुर्यात् । अथवा पञ्चदशवारमखण्डपारायणं कृत्वा तत एकैकामृचं विधिवद्यथासंख्यं जपेत् । तदशक्तौ लौकिकेऽग्नावपि पञ्चदशर्ग्भिः प्रत्यहं पञ्चदशाज्याहुतीर्हुत्वा पञ्चदशवारं श्रीसूक्तं जपेत्तस्य श्रीकामस्य तस्मिन्नेव जन्मनि महती श्रीप्राप्तिर्भविष्यतीति विज्ञायते । विधिवदनुष्ठानासमर्थस्य तु छायामात्रं वा यथायोग्यं वा फलं भवति । प्रतिबन्धकबाहुल्ये तु जन्मान्तरे फलानुभवो भविष्यतीति सिद्धान्तः ॥ तदुक्तं

तरांशुकगन्धमाल्यशोभे ॥ भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ॥ लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥ महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि ॥ तन्नो लक्ष्मीः प्रचोदयात् ॥ श्रीवर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते ॥ धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ इति श्रीसूक्तं समाप्तम् ॥

## गणपतिसूक्तम् ।

उत्तिष्ठेत्यष्टर्चं पञ्चमं सूक्तं कण्वस्यार्षं बार्हतं (अयुजो बृहत्यः युजः सतोबृहत्यः) ब्रह्मणस्पतिदेवताकम् ॥ ( १।३।२० ) ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ॥ उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ १ ॥ त्वामिद्धि सहसस्पुत्र

---

मन्त्ररहस्ये । 'अधिकारी यथा देशे यथाकाले यथामनुम् । यादृग्विधानसंधानः प्रजपेत्तादृशं फलम् ॥ कालदेशक्रियारूपाद्यनुरूपं लभेन्नरः । अत्युत्कटेन पुण्येन तस्मिन्नेव हि जन्मनि ॥ तत्फलं प्राप्नुयात्सिद्धो नात्र कार्या विचारणा । पुण्यस्यानुत्कटत्वे तु चिरात्किंचित्फलं लभेत् ॥ प्रतिबन्धकबाहुल्ये फलं जन्मान्तरे भवेत् । न देवतोषणं व्यर्थं भविष्यति कदाचन । तस्मान्मन्त्रं जपेद्योगी यत्तः शुद्धेन्द्रियक्रियः' इति ॥ इति श्रीसूक्तसायनभाष्यम् ॥

( उत्तिष्ठब्रह्मणस्पते १।३।२० ) हे ब्रह्मणस्पते एतन्नामक देव, उत्तिष्ठ अस्मदनुग्रहाय त्वदीयनिवासादुत्थानं कुरु। देवयन्तो देवान्कामयमाना वयं त्वा त्वामीमहे याचामहे। सुदानवः शोभनदानयुक्ताः मरुतः उपप्रयन्तु समीपे प्रकर्षेण गच्छन्तु। हे इन्द्र, त्वं सचा ब्रह्मणस्पतिना सह प्राशूः सोमस्य प्राशको भव। यद्वा वृत्रस्य हिंसको भव। उत्तिष्ठ ऊर्ध्वकर्मत्वादात्मनेपदाभावः। ब्रह्मणस्पते 'सुबामन्त्रिते' इति पराङ्गवद्भावात्षष्ठ्यामन्त्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वम् । देवयन्तः देवानात्मन इच्छन्तः 'सुप आत्मनः क्यच्' 'न छन्दस्यपुत्रस्य' इतीत्वस्येव दीर्घस्यापि निषेधः 'अश्वावस्यात्' इति पुनरात्वविधानसामर्थ्यात्। ईमह इत्यादयो गताः। प्राशूः शृ हिंसायाम्। प्रकर्षेण आसमन्ताच्छृणाति हिनस्तीति प्राशूः 'बहुलं छन्दसि' इत्युत्वम्। 'वोरुपधाया–' इति दीर्घः । कृदुत्तरपदप्रकृतिस्वरत्वम्। भवा भव 'द्व्यचोतस्तिङः' इति संहितायां दीर्घत्वम् ॥ १ ॥—हे सहसस्पुत्र बलस्य बहुपालक ब्रह्मणस्पते, पुत्रः पुरु त्रायते निपरणाद्वेति निरुक्तम्। मर्त्यो मनुष्यः हिते शत्रुषु प्रक्षिप्ते धने निमित्तभूते सति त्वामित् त्वामेवोपब्रूते हि

मर्त्यं उप ब्रूते धने हिते ॥ सुवीर्यं मरुत आ स्वश्व्यं दधीत यो वं आचके ॥ २ ॥ प्रैतु ब्रह्मणस्पतिः प्र देव्यैतु सूनृता ॥ अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ ३ ॥ यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः ॥ तस्मा इळां

---

समीपं प्राप्य स्तौति खलु । तद्धनसंपादनाय प्रार्थयत इत्यर्थः । हे मरुतः, यो धनार्थी मर्त्यः वो युष्मान् ब्रह्मणस्पतिसहितान् आचके स्तौति स मर्त्यः स्वश्व्यं शोभनाश्वयुक्तं सुवीर्यं शोभनवीर्ययुक्तं च धनं दधीत धारयेत् । सहसस्पुत्र ब्रह्मणस्पते इतिवत् 'षष्ठ्याः पतिपुत्र' इति विसर्जनीयस्य सत्वम् । उपब्रूते 'हि च' इति निघातप्रतिषेधः । 'तिङि चोदात्तवति–' इति गतेरनुदात्तत्वम् । हिते निष्ठायां 'दधातेर्हिः' इति हिरादेशः । सुवीर्यं शोभनं वीर्यं यस्येति बहुव्रीहौ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । स्वश्व्यं अश्वानां समूहोऽश्वीयं 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति समूहार्थे छप्रत्ययः छस्य ईयादेशः । शोभनमश्वीयं यस्य तत्स्वश्व्यम् । ईकारलोपश्छान्दसः । 'परादिश्छन्दसि बहुलम्' इति उत्तरपदाद्युदात्तत्वम् । दधीत । सीयुटः सकारस्य लोपे सति 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । पादादित्वान्निघाताभावः । आचके कै गै शब्दे 'आदेच–' इत्यात्वम् । लिटि द्विर्वचने अभ्यासस्य ह्रस्वचुत्वे 'आतो लोप इटि च' इत्याकारलोपः प्रत्ययस्वरः यद्वृत्तयोगादनिघातः ॥ २ ॥—ब्रह्मणस्पतिर्देवः प्रैतु अस्मान्प्राप्नोतु । सूनृता देवी प्रियसत्यरूपा वाग्देवता प्रैतु अस्मान्प्राप्नोतु । देवाः ब्रह्मणस्पत्यादयो देवाः वीरं शत्रुं निःशेषेण दूरे प्रेरयन्तु । तं नर्यं मनुष्येभ्यो हितं पङ्क्तिराधसं ब्राह्मणोक्तहविष्पङ्क्त्यादिभिः समृद्धं यज्ञं प्रति नोऽस्मान् अच्छ आभिमुख्येन नयन्तु । प्रैतु 'एङि पररूपम्' इति पररूपे प्राप्ते 'एत्येधत्यूठ्सु' इति वृद्धिः । देव्येत्वित्यत्र 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति स्वरितत्वम् । नर्यं नरेभ्यो हितं । प्राक्क्रीतीय उगवादिलक्षणो यत्प्रत्ययो द्रष्टव्यः । पङ्क्तिराधसं पङ्क्तिभी राध्नोतीति पङ्क्तिराधाः 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च । यज्ञं 'यजयाच–' इत्यादिना यजतेर्नङ् ॥ ३ ॥—यो यजमानो वाघते ऋत्विजे सूनरं सुष्ठु नेतव्यं वसु धनं ददाति स यजमानो ब्रह्मणस्पतेः प्रसादादक्षिति क्षयरहितं श्रवोऽन्नं धत्ते धारयति तस्मै तादृशाय यजमानाय इळां एतन्नामधेयां मनोः पुत्रीं । 'इडा वै मानवी यज्ञानूकाशिन्यासीत्' इति श्रुत्यन्तरात् । आयजामहे वयमृत्विजः सर्वतो यजामः । कीदृशीमिळाम् । सुवीरां शोभनैर्वीरैर्भटैर्युक्तां सुप्रतूर्तिं सुष्ठु प्रकर्षेण हिंसाकारिणीं अनेहसं केनाप्यहिंस्याम् । ददाति 'अनुदात्ते च' इत्यभ्यस्तस्याद्युदात्तत्वम् । यद्वृत्तयोगादनिघातः । सूनरं सुखेन नीयत इति सूनरम् 'ईषद्दुःसुषु–' इति खल् । 'निपातस्य च' इत्युपसर्गस्य दीर्घत्वम् । अक्षिति क्षयो नास्त्यस्येत्यक्षिति । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् 'नञ्-

सुवीरामा यंजामहे सुप्रतूर्तिमनेहसम् ॥ ४ ॥ प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ॥ यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ५ ॥ १ ॥ तमिद्वोचेमा विदथेषु शंभुवं मन्त्रं देवा अनेहसम् ॥ इमां च वाचं प्रतिहर्यथा नरो

---

सुभ्याम्' इति तु 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनान्न प्रवर्तते । श्रवः श्रूयत इति श्रवः । श्रु श्रवणे असुनो नित्वादाद्युदात्तत्वम् । सुवीरां शोभना वीरा यस्याः सा सुवीरा तां 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । सुप्रतूर्तिम् तुर्वी हिंसार्थः प्रपूर्वादस्माद्भावे क्तिन् । शोभना प्रतूर्तिः शत्रूणां हिंसनं यस्याः सा ताम् 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । क्त्वादिर्वा द्रष्टव्यः । अनेहसम् न हन्यत इत्यनेहाः नञि 'हन एह च' इत्यसुन्प्रत्ययः धातोरेहादेशश्च 'नलोपो नञः' इति नकारस्य लोपः 'तस्मान्नुडचि' इति नुट् ॥ ४ ॥—ब्रह्मणस्पतिर्देवः उक्थ्यं शस्त्रयोग्यं मन्त्रं नूनमवश्यं प्रवदति होतृमुखे स्थितः सन् प्रब्रूते । यस्मिन्मन्त्रे इन्द्राद्वयं च सर्वे देवाः ओकांसि स्थानानि चक्रिरे तादृशं सर्वदेवप्रतिपादकं मन्त्रमिति पूर्वत्रान्वयः । मन्त्रं मन्त्रि गुप्तभाषणे पचाद्यच् वृषादिषु पाठादाद्युदात्तत्वम् । उक्थ्यं उक्थार्हं 'छन्दसि च' इत्यर्हार्थे यप्रत्ययः । यद्वा 'भवे छन्दसि' इति यत् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् 'यतो नावः' इत्याद्युदात्तत्वाभावे व्यत्ययेन 'तित्स्वरितम्' इति स्वरितत्वम् । ओकांसि । उच समवाये समवयन्त्यत्रेत्यधिकरणे औणादिकोऽसुन् । बहुलग्रहणात्कुत्वं द्रष्टव्यमिति 'ओक उचः के' इत्यत्र वृत्तावित्युक्तम् । चक्रिरे इरेचश्चित्त्वादन्तोदात्तत्वम् यद्वृत्तयोगादनिघातः ॥ ५ ॥ १ ॥ हे देवा ब्रह्मणस्पतिप्रभृतयः तमित् तमेवेन्द्रादिदेवताप्रतिपादकं मन्त्रं विदथेषु यज्ञेषु वोचेम वयमृत्विजो ब्रवाम । कीदृशम् । शंभुवं सुखस्य भावयितारं अनेहसमहिंसनीयं दोषरहितं । हे नरो नेतारो देवाः, इमामस्माभिरुच्यमानां मन्त्ररूपां वाचं प्रतिहर्यथ च यूयं कामयध्वे चेत्तर्हि सर्वापि वामा वननीया वाक्, वो युष्मानश्नवत् व्याप्नुयात् । वोचेम वच परिभाषणे आशीर्लिङि 'लिङयाशिष्यङ्' 'वच उम्' इत्युमागमः । 'छन्दस्युभयथा' इति सार्वधातुकत्वात् 'लिङः सलोपोऽनन्त्यस्य' इति यासुटः सकारस्य लोपः 'अतो येयः' इतीयादेशः आद्गुणः 'तिङ्ङतिङः' इति निघातः । विदथेषु विद ज्ञाने विद्यते फलसाधनत्वेन ज्ञायते इति विदथो यज्ञः 'रुविदिभ्यां कित्' इत्यथप्रत्ययः । शंभुवं भवतेरन्तर्भावितण्यर्थात् 'क्विप्च' इति क्विप् 'ओः सुपि' इति यणादेशस्य 'न भूसुधियोः' इति प्रतिषेधः मन्त्रादयो गताः । प्रतिहर्यथ हर्य गतिकान्त्योः शपः पित्वादनुदात्तत्वम् तिङश्च लसार्वधातुकस्वरेणाद्युदात्तत्वम् । इमांचेत्यत्र चशब्दश्चेदर्थः चणिति निपातनान्तरम् । नच समुच्चयार्थश्चकारः । तेन 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चणः' इति निघातप्रतिषेधः । अश्नवत् अशू व्याप्तौ लेट्यडागमः व्यत्ययेन परस्मैपदम् । 'इतश्च लोपः' इतीकारलोपः 'इयङ्उवङ्भ्यां

विश्वेद्वामावों अश्नवत् ॥ ६ ॥ को देवयन्तमश्नवज्जनं को वृक्तबर्हिषम् ॥ प्रप्र दाश्वान्पस्त्याभिरस्थितान्तर्वावत्क्षयं दधे ॥७॥ उप क्षत्रं पृञ्चीत हन्ति राजभिर्भये चित्सुक्षितिं दधे । नास्य वर्ता न तरुता महाधने नार्भे अस्ति वज्रिणः ॥८॥२॥ इति गणपतिसूक्तम् ॥

---

गुणवृद्धी भवतो विप्रतिषेधेन' इति गुणः ॥ ६ ॥—देवयन्तं देवान्कामयमानं जनं कः अश्नवत् ब्रह्मणस्पतिव्यतिरिक्तः कोनाम देवो व्याप्नुयात् । तथा वृक्तबर्हिषं यजमानं को नामान्यो देवोऽश्नवत् । दाश्वान् हविर्दत्तवान् यजमानः पस्त्याभिः मनुष्यैर्ऋत्विग्भिः सह प्रप्रास्थित देवयजनदेशं प्रति प्रस्थितवान् । अन्तर्वावत् अन्तः स्थितं बहुधनोपेतं । यद्वा अन्तःस्थितपुत्रपौत्रादिप्रयुक्तबहुविधगुणोपेतं क्षयं निवासस्थानं गृहं दधे धृतवान्भवति ॥ देवयन्तमित्यादयो गताः । प्रप्र 'प्रसमुपोदः पादपूरणे' इति प्रशब्दस्य द्विर्भावः 'अनुदात्तं च' इत्याम्रेडितानुदात्तत्वम् । अस्थित ष्ठा गतिनिवृत्तौ लुङि 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । 'स्थाघ्वोरिच्च' इति धातुसिचोरित्कित्वे 'ह्रस्वादङ्गात्' इति सलोपः । अन्तर्वावत् वा गतिगन्धनयोः अन्तर्वान्ति गच्छन्तीति अन्तर्वाः पुत्रपश्वादयः 'आतो मनिन्–' इत्यादिना विच् । 'तदस्यास्ति–'इति मतुप् मतुपः पित्त्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा वावदीतेः क्विप् । क्षयं क्षियन्ति निवसन्त्यस्मिन्निति क्षयः 'पुंसि संज्ञायाम्' इत्यधिकरणे घः । क्षयो निवासे इत्याद्युदात्तत्वम् ॥ ७ ॥—ब्रह्मणस्पतिर्देवः क्षत्रं बलं उपपृञ्चीत स्वात्मनि संपृक्तं कुर्यात् । ततो राजभिर्वरुणादिभिः सह हन्ति शत्रून्मारयति । भये चित् भीतिहेतौ युद्धेऽपि सुक्षितिं दधे सुष्ठु निवासस्थैर्यं धारयति नतु पलायते । वज्रिणो वज्रायुधवतोऽस्य ब्रह्मणस्पतेर्महाधने प्रभूतधननिमित्तयुद्धे वर्ता प्रवर्तयिता अन्यः कोपि नास्ति स्वयमेव प्रवर्तत इत्यर्थः । महाधन इति संग्रामनाम । 'महाधने समीके' इति तन्नामसु पाठात् । तथा तरुता तरणस्योल्लङ्घनस्य कर्ता अन्यः कोपि नास्ति । तथैवार्भे स्वल्पे युद्धेऽप्यन्यः प्रवर्तयिता नास्ति ॥ पृञ्चीत पृची संपर्के लङि रुधादित्वात् श्नम् 'श्नसोरल्लोपः' इत्यकारलोपः प्रत्ययस्वरः । क्षत्रं पृञ्चीत राजभिर्हन्ति चेति समुच्चयलक्षणस्य चार्थस्य दर्शनात् 'चादिलोपे विभाषा' इति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः हन्तीत्येषा द्वितीयापि तिङः परत्वान्न निहन्यते । सुक्षितिः शोभना क्षितिः सुक्षितिः 'मन्क्तिन्' इत्यादिनोत्तरपदान्तोदात्तत्वम् । वर्ता वर्ततेर्वृणोतेर्वा तृचि आगमानुशासनस्यानित्यत्वादिडभावः । तरुता तॄ प्लवनतरणयोः 'प्रसितस्कभित–' इत्यादिना तृच्युडागमो निपातितः 'चितः' इत्यन्तोदात्तत्वम् । महाधने महच्च तद्धनं च महाधनं 'आन्महतः' इत्यात्वम् तेन शब्देन तद्धेतुभूतः संग्रामो लक्ष्यते । अर्भे ऋ गतौ 'अर्तिगृभ्यां भन्' इति भन्प्रत्ययः नित्वादाद्युदात्तत्वम् ॥ ८ ॥ ॥ २ ॥ इति गणपतिसूक्तम् ॥

# गणपत्यथर्वशीर्षम्।

श्रीगणेशाय नमः

प्रणम्य तं गणेशानं सिद्धिबुद्धिप्रदं परं। अथर्वशीर्षभाष्यं वै कुर्वे वेदान्तबृंहितम्॥

अथाथर्वणो ब्रह्मणां ब्रह्मणश्च स्वस्वोपाधिविरहात्मैक्यज्ञानप्राह्यर्थं गणेशाथर्वशीर्षमवदत्। सर्ववेदोक्तकर्मोपासनज्ञाननिष्ठनिर्विघ्नसिद्धिबुद्धिप्रकाशकतत्तत्फलवेदान्तवेद्यैक्ययोगप्रदतत्त्वमस्यात्मकदेहत्वात्। तत्त्वमसिप्रतिपाद्यब्रह्मबाह्यान्तरकर्मज्ञानप्राह्यर्थोपास्योपासकत्वाभावाच्च। ननु तत्त्वमस्यादिमहावाक्यार्थानुभवयुक्ता योगिनो भवन्ति किं गणेशोपासनेन। सावयवब्रह्मैकत्वाभावादिति चेत्। न। महावाक्यप्रतिपाद्यब्रह्मसदाभेदात्मकत्वादध्यारोपापवादसिद्ध्यर्थं गणेशोपासनं मुख्यम्। बाह्यान्तरानात्मभावनाशकत्वाच्च। ननु ब्रह्मैक्यभावचिन्तनादध्यारोपापवादसिद्धिर्भविष्यति अभेदभावनाया भेदनाशकत्वादिति चेत्। न। ब्रह्मण ऐक्यभावचिन्तनाभावात् 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः गणेशचिन्तनस्य संभवाच्च। 'ब्रह्मणां ब्रह्मणस्पते' इति श्रुतिसार्थकत्वात्। अस्यायमर्थः। ब्रह्मणामन्नप्राणादिप्रणवपर्यन्तानां शिवविष्ण्वादिदेवात्मकानां च पतिर्गणेशः। सोपाधित्वेन नानात्मकत्वात्सदासमानत्वाभावाद्ब्रह्मणामिति बहुवचनम्। अन्यच्च। ब्रह्मणो निरुपाधिसर्वकारणात्मनः पतिः। अनपवादनिर्विकल्पनात्मकत्वात्। एकवचनं जीवात्मपरमात्मनोरैक्यभावात्। तयोः पतिस्तत्त्वमस्यात्मकत्वात्। ननु ब्रह्मणश्चिन्तनं संभवति 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतेरिति चेत्। सत्यम्। तथापि चित्तवृत्तिनिरोधभावना सुदुर्लभा। सातत्येन ध्यातृध्यानध्येयाभावात् चित्तस्य चञ्चलत्वात्तत्स्थैर्याभावाच्च। वस्तुतस्तु गणेशचिन्तनं सर्वसिद्धिप्रदम्। तत्त्वमस्यात्मकत्वात्सुलभार्थतदथर्वशीर्षतात्पर्यात्। ननु नानाकामप्रदं गणेशचिन्तनं सिद्धिप्रदत्वादिति चेत्। न। ब्रह्मभावसिद्धिप्रदत्वात्। 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति 'सिद्धानां कपिलो मुनिः' इति। भविष्ये व्यासेन शुकस्योपदेशः कृतः 'प्राप्स्यसे सिद्धिमुत्तमाम्' इत्यादिनानास्मृतिभ्यः। ननु शिवचिन्तनं सर्वसिद्धिप्रदम् 'ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः' इति श्रुतेरिति चेत्। न। ईशानस्य विशेष्यत्वात् ब्रह्माधिपत्यादिपदानां तदङ्गविशेषणत्वात्। ननु सर्वश्रेष्ठेशानब्रह्माधिपत्यादिपदानां विशेषणत्वमेवेति चेत्। न। ब्रह्मणः परश्रेष्ठाभावात् सर्वश्रुतिस्मृतिविरोधापत्तेश्च। 'ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा' इत्यस्यायमर्थः। तामसस्योङ्कारात्मकस्य विश्वेश्वरादिद्वादशशिवावताराणामेकादशरुद्राणां कालभैरवादिशिवावताराणां च स्तवनं ब्रह्मात्मकतया कृतम्। अंशांशिनोरैक्यप्रतिपादनत्वात्। तेषां शिवावतारब्रह्मणामधिपतिरीशानः। तत्तद्रूपधारकत्वात्। अन्यच्च। सर्वावतारसत्तायाः पतिरीशानो ब्रह्मणोऽधिपतिः। सत्तासदैकजातिमत्त्वादेकवचनम्। अन्यच्च। ब्रह्मा नानावतारसत्तास्रष्टेशानः विशेष्यात्मकत्वादिति चेत्। न। ब्रह्मणस्पतिविशेष्यत्वाद्गणपत्यादिपदविशेषणत्वाद्ब्रह्मैक्यभावप्रदब्रह्मणस्पत्याख्याया मुख्यत्वाच्च। ननु ब्रह्मणस्पतेरपि ब्रह्मोपासना

**ॐ नमस्ते गणपतये ॥**

---

मुख्या, पतिभावनाशकत्वात् महावाक्यस्य ब्रह्मप्रतिपादकत्वाच्च । 'प्रज्ञानं ब्रह्म' इति, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति, 'सर्वं खल्विदं ब्रह्म' इति, 'अहं ब्रह्मास्मि' इति, 'एकमेवाद्वितीयं ब्रह्म' इति, 'अयमात्मा ब्रह्म' इत्यादिश्रुतिभ्यश्चेति चेत् । न । स्वस्वोपाधियुक्तब्रह्मणां सर्वकारणब्रह्मणश्चोपदेशार्थं पतिपदम् । तदाराधनोपाधिकारणभावनाशकत्वात् पतिपदं न वास्तवम् । उपाधिहीनब्रह्मणां कारणहीनब्रह्मणश्च पतित्वाभावः तदैक्यत्वात् । 'पतित्वं कथनात्मकम्' इति स्मृतेः । ननु बाह्याज्ञाननाशको गणेशः अवयवयुक्तत्वादिति चेत् । न । आन्तराज्ञाननाशकोऽपि बुद्धिपतित्वात् । 'अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः' इति, 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यो वेद निहितं गुहायाम्' इत्यादिश्रुतिभ्यः 'यो बुद्धेः परतस्तु सः' इति, 'आत्मा बुद्धेः परो मतः' इत्यादिस्मृतिभ्यश्च । ननु शिवविष्णुसूर्यशक्तिचिन्तनं ब्रह्मभावप्रदं, तत्तदथर्वशीर्षे तत्तद्ब्रह्मप्रतिपादकत्वादिति चेत् । न । अव्याकृतप्रणवानन्दाद्युपासनवदारण्यकोक्तब्रह्मप्रतिपादकत्वात् गणेशाथर्वशीर्षे तत्त्वमस्यात्मकमहावाक्यप्रतिपाद्यब्रह्मैक्यात् महावाक्यात्परं वेदान्ते ब्रह्मप्रतिपादनाभावाच्च । न चैवं गजवदनाद्यवयवयुक्तगणेशस्य भिन्नतावच्छेदकावच्छेद्यतया ब्रह्मणि महावाक्यप्रतिपाद्य ऐक्याभावादतिव्याप्तिः । सदा कार्यकारणैक्यब्रह्मणः सावयवगणेशेऽवच्छेद्यहीनत्वादव्याप्तिश्चेति वाच्यम् । त्वं तदसिपदस्वस्वोपाधिविहारसामर्थ्यप्रदसंपूर्णतत्त्वमस्यात्मकदेहभृद्गणेशोपासनप्रयोजनत्वात् अनन्तकल्पविहारशाश्वतसंतोषस्वस्वोपाधिनाशकगणेशोपासनप्रयोजनत्वात् उपास्योपासकोपासनाया महदज्ञाननाशकत्वात् ब्रह्मण्युपास्यत्वाभावात् सामान्यानुमानतया गणेशब्रह्मणोरैक्यप्रतिपादकत्वाच्च । नचैवं ब्रह्मोपासनं वेदान्तविरुद्धम् । ब्रह्मभूतस्योपास्योपासकत्वाभावात् । 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति श्रुतेरिति वाच्यम् । गणेशोपासनाया अज्ञाननाशं कृत्वा ततो योगिनः लोकसंग्रहार्थं गाणेशत्वात् देहरक्षणार्थं भोजनाच्छादनवत्कायिकवाचिकमानसिकसांसर्गिकगाणेशधर्मत्वाच्चेति दिक् ॥ ॥ अथ प्रकृतमनुसरामः । अथर्वणः स्वानुभवज्ञानं जगदुद्धारार्थमवदत् । सुलभकर्मोपासनज्ञानयोगप्राप्तिकारकत्वात् । ॐ इति मङ्गलाचरणार्थम् ग्रन्थादौ मङ्गलाचरणस्य शिष्टसंप्रदायप्रवर्तकत्वात् । वेदाद्य ॐकारः सर्वमङ्गलमयो वेदोक्तनानाकर्मोपासनज्ञानयोगफलप्राप्तिकारकत्वाच्च । 'यो वेदादौ स्वरः प्रोक्तः' इति श्रुतेः । स्वर इत्योङ्काराख्या छान्दोग्ये 'तस्यादिस्मरणावश्यकत्वात्' इति । न चैवं सर्वश्रुतिस्मृतिपुराणेतिहासप्रोक्तं सर्वारम्भेष्वादौ गणेशपूजनं निरर्थकं अत्रोङ्कारस्मरणादिति वाच्यम् । सगुणगणेशस्योङ्कारमयत्वात् । तदेव कथ्यते मौद्गले 'गणेशस्यादिपूजनं चतुर्विधम्' चतुर्मूर्तिधारकत्वात् । तत्र ब्रह्मणश्चतुर्भ्यो मुखेभ्यः पुराणं निःसृतं अष्टलक्षपरिमितम् । ततो द्वापरान्ते व्यासेनाष्टादशपुराणान्युपपुराणानि च कृतानि कलिमन्दमतिजनबोधप्रवेशार्थम् । तत्राष्टादशपुराणेष्वाद्यं ब्राह्मं निर्गुणगणेशमाहात्म्ययुक्तम् बुद्धिप-

रात्मप्रतिपादकत्वात्। अन्त्यं ब्रह्माण्डाख्यं सगुणगणेशमाहात्म्ययुक्तम् प्रणवप्रतिपादकत्वात्। तद्वदुपपुराणेष्वाद्यं गाणेशं सगुणनिर्गुणैक्यभावयुक्तम्। गजवदनाद्यवयवमूर्तिधरमाहात्म्ययुक्तत्वात्। अन्त्यं मौद्गलं योगमयं गणेशमाहात्म्ययुक्तम्। सर्वपुराणोपनिषद्ब्रह्मैक्यभावप्रदत्वात् पुराणोपपुराणेषु मध्यस्थषोडशपुराणानि शिवविष्ण्वादिगणेशांशमाहात्म्ययुक्तानि मध्ये नानांशविहारप्रतिपादकत्वात्। तत्र सर्ववेदाद्युक्तसृष्ट्यारम्भे गणेशस्मरणं चतुर्विधम्। आद्यन्तपुराणोपपुराणेषु गणेशमाहात्म्यप्रकाशकत्वात्। तत्र केचिदादौ बुद्धिस्थगणेशस्मरणं कृत्वा सत्कर्माणि कुर्वन्ति। तद्वत्प्रणवस्मरणं केचिन्मूर्तिधरस्मरणं केचिद्योगमयस्मरणं च। तत्तत्सिद्धिप्रदत्वात्। तत्र कथ्यते 'अष्टादशपुराणेषु दशभिर्गीयते शिवः। चतुर्भिर्गीयते विष्णुर्द्वाभ्यां शक्तिश्च विघ्नपः॥' इति स्मृतेः। ननूपपुराणेषु महावाक्यप्रतिपाद्यगणेशवर्णनमयुक्तं उपवेदवत्कनिष्ठसंज्ञामयत्वादिति चेत्। न। तत्रोपपदस्य श्रेष्ठत्वप्रतिपादकत्वात्। इन्द्रोपेन्द्रनिदर्शनत्वादुपदेशप्रकरणादौ कनिष्ठान्तश्रेष्ठत्वप्रतिपादकत्वात्। पूर्वमीमांसोत्तरमीमांसावदरण्यवद्ग्रहणत्वाच्च। तथाच गणेशगीतायाम् 'अष्टादशपुराणोक्तममृतं प्राशितं मया। ततोऽतिरसवत्पातुमिच्छाम्यमृतमुत्तमम्॥' इत्यादिस्मृतिभ्यः। देवादिगणानां महत्तत्त्वादितत्त्वगणानां निर्गुणसगुणब्रह्मगणानां च पतिर्गणपतिः। सर्वादिपूज्यसर्वपूज्यत्वात्। गण् समूहे इति धात्वर्थात्। नचैवमशुभकर्मारम्भे गणेशपूजनं दृष्टम्। प्राणप्रयाणसमयपितृयज्ञादावप्रसिद्धत्वादिति वाच्यम्। गयास्थगणेशपदस्य पितृमुक्तिप्रदत्वात्। वेदोक्तसत्कर्मारम्भे पितृयज्ञसिद्धिप्रदत्वात् वेदोक्तपितृयज्ञारम्भे गणेशपूजननिषेधाभावात् तद्वत्प्राणप्रयाणसमये कथितत्वाच्च। 'ज्येष्ठराजम्' इति श्रुतेः पितॄणामपि ज्येष्ठत्वात्। तथाच गाणेशे त्रिपुरवधकाले शिववाक्यम् 'शैवैस्त्वदीयैरुत वैष्णवैश्च शाक्तैश्च सौरैरपि सर्वकार्ये। शुभाशुभे लौकिकवैदिके च त्वमर्चनीयः प्रथमं प्रयत्नात्॥' इति। गणेशगीतायाम् 'यः स्मृत्वा त्यजति प्राणमन्ते मां श्रद्धयान्वितः। स यात्यपुनरावृत्तिं प्रसादान्मम भूभुज॥' 'ॐगणेशो वै ब्रह्म तद्विद्याद्यदिदं किंच सर्वं भूतं भव्यं जायमानं च तत्सर्वमित्याचक्षते। अस्मान्नातः परं किंचित्, यो वेद स वेद ब्रह्म, ब्रह्मैवाप्नोति तत्सर्वमित्याचक्षते'। ब्रह्मविष्ण्वादिगणानामीशभूतमित्याह 'तद्गणेश' इति तत्परमित्याह 'यमेतेनाप्नुवन्ति' इति गणेशतापिनीश्रुतेः। मौद्गले 'गणशब्दः समूहस्य वाचकः परिकीर्तितः। समूहा योगरूपाश्च बाह्यान्तरैक्यभावतः। अन्नानां सकलानां वै समूहेऽन्नमयं परम्। कथितं ब्रह्म वेदे तदेवं नानागुणाः स्मृताः॥ तेषां स्वामी गणेशानस्तं ज्ञात्वा योगिनः पुरा। शान्तिं प्राप्ता विशेषेण योगशान्तिमयं परम्॥' इति। अन्यच्च 'कथितं सामवेदे यच्छृणु वेदरहस्यकम्। येन त्वं शान्तिसंयुक्तो भविष्यसि न संशयः॥ मनोवाणीमयं सर्वं दृश्यादृश्यस्वरूपकम्। गकारात्मकमेवं तत्तत्र ब्रह्म गकारकः॥ मनोवाणीविहीनं च संयोगायोगसंस्थितम्। णकारात्मकरूपं तण्णकारस्तत्र संस्थितः॥ विविधानि गकाराच्च प्रसूतानि महामते। ब्रह्माणि तानि कथ्यन्ते तत्त्वरूपाणि योगिभिः॥ णकाराच्च प्रसूतानि ब्रह्माणि तानि योगिभिः। निरोधात्मकरूपाणि कथितानि समन्ततः॥ गकारश्च णकारश्च

**त्वमेव प्रत्यक्षं तत्त्वमसि ॥**

नाम्नि गणपतेः स्थितौ । तदा जानीहि भो योगिन्ब्रह्माकारौ श्रुतेर्मुखात् ॥ तयोः स्वामी गणेशश्च योगरूपेण संस्थितः । तं भजस्व विधानेन शान्तिमार्गेण पुत्रक ॥ ते तुभ्यं नमः । तत्त्वमस्यात्मकब्रह्मनमस्कारसमत्वात् ब्रह्मनमस्कारासंभवाच्चेति नाममन्त्रोऽयमादौ वर्णितः सर्वजनोद्धारसुलभत्वात् ॥ ननु गणेशनमनेन जनस्य कृतकृत्यता कथं । सावयवत्वात् । तदर्थं महावाक्यप्रतिपाद्यतामाह—त्वमिति । त्वमेवेति नान्यः । निश्चयार्थत्वादेवकारः । प्रत्यक्षमिति । ब्रह्म दृष्टिगोचरम् । नरगजभेदाकृतिमयत्वात्तेन महान् हर्षः साक्षाद्ब्रह्मदर्शनभावात् । तत्त्वमसीति । जगत्कारणं तत्पदसंज्ञं निर्विकल्पकत्वात् । 'सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति श्रुतेः । 'भूमानं भगवो विजिज्ञास' इति । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति । 'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण' इति । 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इति श्रुतिभ्यः । 'सत्यं ज्ञानमनन्तमानन्दं ब्रह्म' सत्यमविनाशि नाम देशकालवस्तुनिमित्तेषु विनश्यत्सु यन्न विनश्यति तदविनाशिसत्यमित्युच्यते । ज्ञानमित्युत्पत्तिविनाशरहितम् । चैतन्यं ज्ञानमित्यभिधीयते । अनन्तं नाम मृद्विकारेषु मृदिव सुवर्णविकारेषु सुवर्णमिव तन्तुकार्येषु तन्तुरिवाव्यक्तादिसृष्टिप्रपञ्चेषु सर्वव्यापकं चैतन्यं अनन्तमित्युच्यते । आनन्दो नाम सुखचैतन्यस्वरूपापरिमितानन्दसमुद्रे अविशिष्टसुखरूपश्च आनन्द इत्युच्यते । एतद्वस्तुचतुष्टयं यस्य स्वरूपलक्षणं देशकालवस्तुनिमित्तेष्वव्यभिचारि स तत्पदार्थः 'परमात्मा परं ब्रह्मेत्युच्यते' इति सारोपनिषच्छ्रुतेः जगन्मयं त्वंपदसंज्ञं नानाभेदप्रकाशकत्वात् । 'ओमित्येतदक्षरमुद्गीथमुपासीत । ओमित्युद्गायति तस्योपव्याख्यानं एषां भूतानां पृथिवी रसः पृथिव्या आपो रसः अपामोषधयो रसः ओषधीनां पुरुषो रसः पुरुषस्य वाक् रसः वाच ऋक् रसः ऋचः साम रसः तस्योद्गीथो रसः स एष रसानाꣳरसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः । कतमा कतमा ऋक् कतमत्कतमत्साम कतमः कतम उद्गीथ इति विमृष्टं भवति । वागेव ऋक् । प्राणः साम । ओमित्येतदक्षरमुद्गीथः । तद्वा एतन्मिथुनं ओमिति । यद्वाक् च प्राणश्चर्क् च साम च तदेतन्मिथुनमोमित्येतदस्मिन्नक्षरे सꣳसृज्यते । यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् । यथा लोके मिथुनौ यदा समागच्छतस्तदापयतः कामं तथा तदुपासकस्तद्धर्मो भवति । आपयिता ह वै कामानां तं यथायथोपासते तदेव भवतीति । 'त्रयं वा इदं नामरूपं कर्म' 'तदेतदमृतꣳ सत्येन छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः । 'यथोर्णनाभिस्तन्तुनोच्चरेत् स यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवात्मानो व्युच्चरन्ति । तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' अथ यत्रान्यत्पश्यत्यन्यद्विजानाति तदल्प' मिति । मनआदिश्च प्राणादिश्च सत्वादिश्च इच्छादिश्च पुण्यादिश्चैते पञ्च वर्गा इत्येषां पञ्चानां वर्गाणां धर्मिभूतात्मज्ञानादृते न विनश्य-

न्त्यात्मसंनिधौ नित्यत्वेन प्रतीयमान आत्मोपाधिर्यस्तल्लिङ्गशरीरं हृद्ग्रन्थिरित्युच्यते । तत्र यत्प्रकाशते चैतन्यं स क्षेत्रज्ञ इत्युच्यते । ज्ञातृज्ञानज्ञेयानामाविर्भावतिरोभावज्ञाता स्वयमेवमाविर्भावतिरोभावहीनः स्वयंज्योतिः स साक्षीत्युच्यते । ब्रह्मादिपिपीलिकापर्यन्तं सर्वप्राणिबुद्धिष्वविशिष्टतयोपलभ्यमानः सर्वप्राणिबुद्धिस्थो यदा तदा कूटस्थ इत्युच्यते । कूटस्थाद्युपहितभेदानां स्वरूपलाभहेतुर्भूत्वा मणिगणे सूत्रमिव सर्वक्षेत्रेष्वनुस्यूतत्वेन यदा प्रकाशत आत्मा तदान्तर्यामीत्युच्यते । सर्वोपाधिविनिर्मुक्तः सुवर्णघनवद्विज्ञानघनश्चिन्मात्रस्वभाव आत्मा यदावभासते तदा त्वंपदार्थः 'प्रत्यगात्मेत्युच्यते' इति श्रुतिभ्यः । त्वंपदतत्पदयोरभेदेऽसिपदम् सोपाधिनिरुपाधिहीनसदात्मत्वात् 'भूय एव मा भगवान्विज्ञापयतु यद्वै मनसा ध्यायति स तद्वाचा वदति । स य एषोऽणिमा ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो' इति क्रमेण नवधोपदेशस्तत्त्वमस्यात्मकमहावाक्यस्य ग्रन्थबाहुल्यभयान्न लिख्यत इति । त्वंपदार्थादौपाधिकात्तत्पदार्थादौपाधिकाद्विलक्षण आकाशवत्सूक्ष्म एव केवलसत्तामात्रोऽसिपदार्थः स्वयंज्योतिरात्मेत्युच्यते । 'त्वंपदार्थतत्पदार्थसाम्यं आत्मेत्युच्यते' इत्यादिश्रुतिभ्यः ॥ ॥ अधुना तत्त्वमस्यात्मकगणेशस्वरूपं वर्ण्यते—त्वमेव प्रत्यक्षं तत्त्वमसीति । मूलवाक्यप्रतिपादनार्थत्वात् । त्वंपदार्थो नरात्मकस्तत्पदार्थो गजात्मकश्च तयोरभेदेऽसिपदार्थो गणेशाकृतिमयः । प्रत्यक्षं तत्त्वमसीति प्रत्यक्षवाक्यप्रामाण्यात् । तद्यथा । नरः प्रणवात्मकः । सोपाधिब्रह्मात्मकत्वात् । स एव त्वंपदार्थः । प्रणवपरसोपाध्यभावात् । 'ओमित्येकाक्षरं ब्रह्मेदं सर्वं तस्योपव्याख्यानं सर्वं भूतं भव्यं भविष्यदिति सर्वमोङ्कार एव' इति श्रुतेः । 'सोपाधिकः स्यात्सर्वत्र' इति स्मृतेः । 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः' इति श्रुतेः । अबुपलक्षितानि पञ्चभूतानि ग्राह्याणि । वेदभाष्ये शङ्कराचार्यवचनात् । 'नराज्जातानि तत्त्वानि' इति स्मृतेः । प्रणवात्तत्त्वोत्पत्तिः । सर्वशास्त्रसंमतत्वात् । नारायणोपनिषदि नारायणनामार्थप्रतिपादने नराज्जाता नाराः ता एवायनं यस्येति नारायणः प्रणवमयत्वात् । प्रणवोपासकसंन्यासिनां नारायणसंज्ञात्मकत्वात् । 'दण्डग्रहणमात्रेण नरो नारायणो भवेत्' इति स्मृतेः । गाणेशे—'यस्मादोङ्कारसंभूतिर्यतो वेदा यतो जगत्' इति स्मृतेः त्वंपदार्थो नरात्मकः । तदैक्यसत्तामयत्वात् । अथ गजशब्दार्थः कथ्यते । तत्पदैक्यसत्ताप्रतिपादनार्थत्वात् । समाधिना योगिनो यत्र गच्छन्तीति गः । यस्माद्बिम्बप्रतिबिम्बवत्तया प्रणवात्मकं जगज्जायत इति जः । गश्चासौ जश्च गजः । विश्वकारणत्वात् । 'जन्माद्यस्य यतः' इति व्याससूत्रात् 'यस्मादोङ्कारसंभूतिर्यतो वेदो यतो जगत्' इति गाणेशात् । न चैवं विपरीतो गजपदार्थं आदौ लयः पश्चात्सृष्टिः गकारजकारमयत्वादिति वाच्यम् । आदावेव समाधिना योगिनो यत्र गच्छन्तीति फलं दर्शयित्वा स्वानुकूलं शिष्यं कृत्वा पश्चात्तत्स्वरूपदर्शनार्थं तस्मात्सृष्टिरुक्ता शिष्यबोधार्थत्वात् । नचैवं अन्नं ब्रह्म गजशब्दाख्यं 'अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते' इति श्रुतिप्रतिपादितब्रह्मणापि सर्वभूतोत्पत्तिलयकारकत्वा-

**त्वमेव केवलं कर्तासि ॥ त्वमेव केवलं धर्तासि ॥ त्वमेव केवलं**

---

दिति वाच्यम् । प्राणब्रह्मण्यन्नस्योत्पत्तिलयदर्शनात् । तद्वन्नानारण्यकप्रतिपादितब्रह्मणामप्युत्पत्तिलयकथनान्महावाक्यप्रतिपाद्यब्रह्मजगत्कारणनिर्गुणैकसंभवत्वात्, तस्मात्परकारणाभावात् । तदेव गणेशतापिन्याम् 'अप्राप्यं चाप्राप्यं च अज्ञेयं चाज्ञेयं च विकल्पासहिष्णु तत्सशक्तिकं गजवक्त्रं गजाकारं जगदेवावरुन्धे' इति श्रुतेः । अस्यायमर्थः । अप्राप्यं चाप्राप्यं मनोगतिशून्यं यद्यत्प्राप्यते तत्तन्मनोगतियुक्तत्वात् । अत्र वीप्सा ह्याग्रहप्रदर्शिनी । कदापि प्राप्यत्वाभावात् । अज्ञेयं चाज्ञेयं च वाण्या च वक्तुमशक्यं वाण्याऽकथितम् मनोऽध्येयत्वात् । पूर्ववद्वीप्सा ज्ञातव्येति । विकल्पासहिष्णु विकल्पशून्यम् निर्गुणत्वात् । तत्सशक्तिकं निरुपाधिमायायुक्तत्वात् । 'त्वंपदार्थादौपाधिकात्तत्पदार्थादौपाधिकात्' इति श्रुतेस्तत्पदार्थसशक्तिकात्मकत्वसंभवात् । गजवक्त्रं तत्पदार्थमयगणेशवक्त्रमात्रत्वाद्गज इव वक्त्रमिति व्युत्पत्तिसंभवात् । गजाकारं जगत् ओङ्कारात्मकं जगत्सोपाधि ब्रह्म, जगन्मयत्वात् । तदेव गणेशतापिन्याम् 'ततश्चोमिति ध्वनिरभूत्तत्स वै गजाकारोऽनिर्वचनीया सैव माया जगद्बीजमित्याह सैव प्रकृतिरिति गणेश इति प्रधानमिति च मायाशबलमिति च' इति श्रुतेः । गजाकारोङ्कारप्रतिपादनात्तदेव जगन्मयत्वाद्बिम्बप्रतिबिम्बवद्गजशब्दाख्यब्रह्मणो गजाकारोङ्कारोत्पत्तिदर्शनाद्गजस्याकार इवाकारो यस्येति व्युत्पत्तिसंभवात्साक्षाद्गजमयाभावात् गजाकारश्रुतिप्रतिपादनात् । एवावरुन्धे गजाकारं जगद्यदुत्पन्नमादौ यदाधारं मध्येऽन्ते यन्मयमित्यर्थः, अवरोधनार्थसंभवात् । इति गजशब्दाख्यतत्पदार्थैक्यप्रतिपादनम्, श्रुतिप्रमाणत्वात् । नरगजयोरभेदेऽसिपदात्मको गणेशदेहः संपूर्णस्तत्त्वमस्यात्मकः, प्रत्यक्षमधुनापि सावयवत्वात् । सोपाधिर्नरस्त्वंपदार्थात्मको गणेशदेहः, पादादिकण्ठपर्यन्तं नराकृतिमयगणेशदेहत्वात् । सोपाधिनिकृष्टत्वादधमाङ्गमित्यर्थः । निरुपाधिर्गजस्तत्पदार्थात्मको गणेशदेहः, कण्ठादिमस्तकपर्यन्तगजाकृतिमयगणेशदेहत्वात् । निरुपाधिसर्वोत्कृष्टत्वादुत्तमाङ्गमित्यर्थः । तयोर्योगेऽसिपदार्थमयो गणेशदेहः, संपूर्णपादादिमस्तकपर्यन्तप्रतिपादनत्वात् । ब्रह्मगणेशयोरभेदः कृतः तत्रातिव्याप्त्यव्याप्तिदोषासंभवः सामान्यानुमानसंभवात् तद्वत्सर्वदोषनिराकरणसामर्थ्यादत्र ग्रन्थे सर्वथैव दोषासंभवात् । अत्र सिद्धिबुद्धियुक्तोऽपि प्रतिपादितः । पञ्चचित्तवृत्तिमयी बुद्धिस्तद्धर्षविषादादिमोहप्रदा सिद्धिः 'योगश्चित्तवृत्तिनिरोधः' इति पातञ्जलसूत्रात् ॥ एवं संपूर्णतत्त्वमस्यात्मकं गणेशं प्रतिपाद्य अधुना त्वंपदतत्पदासिपदभिन्नभावशोधनार्थं ग्रन्थारम्भः क्रियते । तत्र त्वंपदशोधनार्थमाह—त्वमिति । त्वमेव तत्त्वमसिमयः सन् त्वंपदार्थव्यवहारसत्ताप्रधारकः प्रणवांशमयत्वात् । केवलं कर्तासि । केवलं यथातथाऽव्यक्तादिस्थूलदेहपर्यन्तं जगन्निर्माणकारकः, ओङ्कारात्तत्त्वोत्पत्तिदर्शनात् । तथापि तद्भावशून्यो बिम्बप्रतिबिम्बवदोङ्कारमयः केवलपदग्रहणात् ॥ तद्वत्—जगत्पालकोऽसि नामरूपकर्मभेदतया स्वस्वकर्मानुसाराकृतिभोगप्रदत्वात् ॥ तद्वत्—प्राकृतलयप्रवर्तकत्वात् ॥ एवं त्वंपदार्थं केवलमिति पदेन तदुपाधिहीनतया

हर्तासि ॥ त्वमेव सर्वं खल्विदं ब्रह्मासि ॥ त्वं साक्षादात्मासि नित्यम् ॥ १ ॥ ऋतं वच्मि ॥ सत्यं वच्मि ॥ २ ॥ अव त्वं माम् ॥ अव वक्तारम् ॥ अव श्रोतारम् ॥ अव दातारम् ॥ अव धातारम् ॥ अवानूचानमव शिष्यम् ॥ अव पश्चात्तात् ॥

---

शोधयित्वा तत्पदार्थशोधनार्थमाह—सन् तत्पदार्थव्यवहारसत्ताप्रधारकः, सर्वोपाधिवर्जितांशमयत्वात् । सर्वं खल्विदं ब्रह्मासीति । सर्वमिदमोङ्कारमयं जगत् खलु नानोपाधिसंशयहीनम् । त्वमिति त्वमेव तत्त्वमसिमयः सदैव ब्रह्मैक्यभावप्रतिपादनत्वात् । ब्रह्मासि तत्पदार्थमयत्वात् । 'सर्वं खल्विदं ब्रह्म । तज्जलानीति शान्त उपासीत' इति श्रुतेः । अत्र शान्त उपासीतेति सर्वोपाधिभावमनादृत्य ब्रह्मैक्यभावप्रतिपादनत्वात् । तत्पदार्थप्रतिपादकमिदं महावाक्यं, तज्जलानिति सर्वकारणप्रतिपादकत्वात् । एवं तत्पदार्थं ब्रह्मासीति वचनसामर्थ्याच्छोधयित्वाऽसिपदशोधनार्थमाह—त्वमिति । साक्षादात्मासि नित्यमिति कार्यकारणैक्यभावत्वादात्मनः सातत्यगमनं नित्यं सर्वाभेदमयत्वात् । त्वंपदार्थात्मा तदभिन्नत्वात् । तत्पदार्थात्मा तदभिन्नत्वात् । एवं यद्यन्मनोवाणीमयं तद्धीनं च तत्र तत्तदभिन्नतया तदात्मा तदापि तत्तदुपाधिभावहीनत्वान्नित्यमिति पदं न कार्यं न कारणम् । आत्मनि सर्वाख्याभावात् ॥ इति अधिदैवतप्रतिपादकः प्रथमः खण्डः ॥१॥ —एवं त्वंपदार्थं तत्पदार्थमसिपदार्थं च शोधयित्वा तत्तत्पदार्थमयं गणेशं प्रतिपाद्य एतत्प्रमाणार्थं स्वप्रतिज्ञां प्रदर्शयन्नाह—ऋतमिति । ऋतमनृतात्मकासुरभावाभिमानशून्यं । यथार्थगणेशभक्त्यभिमानहीनभाषणत्वात् तथावेदानुभवप्रतिपादनत्वाच्च । वच्मीति कथयामीति । सत्यमिति । सदा देशकालवस्तुनिमित्तेषु विनश्यत्सु यदविनाशि तत्सत्यम् । सर्वबाधहीनत्वात् । शिवविष्ण्वादिनानाब्रह्मप्रतिपादनात्मकदेहेषु गणेशदेहः संपूर्णब्रह्मैक्यभावमयः । महावाक्यमयनरगजाभेदाकृतिधारकत्वात् । इदं सत्यमविनाशीति वच्मि कथयामि ॥ इति स्वप्रतिज्ञात्मको द्वितीयः खण्डः ॥ २ ॥ एवं स्वप्रतिज्ञां सत्यभाषणात्मिकां प्रदर्श्य ऋतसत्यभाषिणं गणेशो रक्षति सदा यथार्थस्वभक्तिलुब्धत्वात्तदधीनो भवति । तदेव प्रकटयन्नाह—अवेति । त्वं साक्षात्प्रत्यक्षं तत्त्वमस्यात्मकः । अतो मामव । ऋतसत्यभाषिणं धर्मार्थकाममोक्षब्रह्मभावार्थिनं मां नानाविघ्नसमुदायाद्रक्षेति स्वप्रतिज्ञापालको भव । भक्ताधीनत्वात् । अवेति अत्र अव त्वं माम् अव वक्तारम् इत्यादिपदेषु सन्धिरार्षः । एवं सर्वत्र ज्ञातव्यम् । वेदेच्छायाः प्रमाणत्वात् । वक्तारं मां त्वद्रूपप्रतिपादकं तदनुष्ठानफलवक्तारं च यथार्थप्रदो भव मदीयकृतफलश्रुतिभोगप्रदत्वात् । श्रोतारं मां मत्कृताथर्वशीर्षादित्वत्स्तुतियथार्थपाठकनानाजनपरीक्षार्थं तच्छ्रवणकर्तारमव । यथार्थश्रोतृप्रियत्वात् । दातारं अथर्वशीर्षादित्वदुपासनदातारं मामव यथाऽथर्वशीर्षपरम्परासंप्रदायप्रवर्तकप्रियत्वात् । धातारं त्वत्प्रियकर्मोपासनज्ञानयोगसाधनस्रष्टारं मामव यथार्थसाधनप्रियत्वात् । अनूचानं त्वत्प्रियान्यर्षिप्रोक्तमार्गभक्तं कदाचिद्भ्रान्ततया संशययुक्तं

अव पुरस्तात् ॥ अवोत्तरात्तात् ॥ अव दक्षिणात्तात् ॥ अव चोर्ध्वात्तात् ॥ अवाधरात्तात् ॥ सर्वतो मां पाहि पाहि समन्तात् ॥ ३ ॥ त्वं वाङ्मयस्त्वं चिन्मयः ॥ त्वमानन्दमयस्त्वं ब्रह्ममयः ॥ त्वं सच्चिदानन्दाद्वितीयोऽसि ॥ त्वं प्रत्यक्षं ब्रह्मासि ॥

---

तत्संशयनाशकारकं मामव स्वभक्तभ्रान्तिनाशकप्रियत्वात् । अव शिष्यम् । मद्बुद्धिस्थेन त्वयोपदिष्टत्वाज्ज्ञानशिक्षाशीलं मामव । स्वशिष्यप्रियत्वात् । पश्चात्तात् त्वद्भक्तिशीलनाशकनानाविघ्नेभ्यो मत्पृष्ठभागदिक्स्थितेभ्यो मामव । स्वभक्ताज्ञातविघ्ननाशकत्वात् । तद्वत्पुरस्ताद्विघ्नेभ्यो मामव इति तद्वदुत्तरदक्षिणोर्ध्वाधरा ज्ञातव्याः । दशदिग्रक्षणप्रार्थनाप्रतिपादकत्वादेकार्थः । सर्वतो विदिगान्तरबाह्यादिनानास्थानस्थितविघ्नेभ्यो मां पाहि पाहि । आदराद्वीप्सा । समन्ताद्ब्रह्माण्डान्तरगतभयात्पाहीति भावः ॥ इति तृतीयः खण्डः ॥ ३ ॥ एवं ऋतसत्यशीलरक्षणात्मकप्रार्थनां विधाय हृदिस्थं बुद्धिपरबुद्धिचालकं नानासिद्धिप्रदायकं च गणेशं प्रार्थयन्नाह—त्वमिति । अत्र 'सत्यं ज्ञानमनन्तं ब्रह्म' । 'यो वेद निहितं गुहायां परमे व्योमन्' इति महावाक्यप्रतिपादकश्रुत्यर्थं प्रतिपादयति । निहितं गुहायामिति । हृद्यवस्थितब्रह्मत्वात् । वाङ्मयः । वाणीकथितनामरूपमयत्वात् । 'एषां पृथिवी रसः पृथिव्या आपोऽपामोषधयस्तासां पुरुषस्तस्य वाक्' इति श्रुतेः । त्वं चिन्मयः । नामरूपाहंकृतियुक्तो जीवः । तद्भोगकृतत्वात् । 'स एव इह प्रविष्ट आनखाग्रेभ्यो यथाऽक्षुरः क्षुरेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाये । तं न पश्यत्यकृत्स्नो हि सः । प्राणमेव प्राणो नाम भवति वदन्वाक् पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवति आत्मेत्येवोपासीत । 'अत्र ह्येते सर्वे एकं भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्माऽनेन ह्येतत्सर्वं वेद यथाह वै पदेनानुविन्देदेवं कीर्तिꣳश्लोकं विन्दते य एवं वेद' इति 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यादि श्रुतिभ्यः त्वमानन्दमयवाङ्मयप्रकृतिमयचिन्मयपुरुषमयस्ताभ्यां सृष्ट आनन्दः सुषुप्त्यवस्थात्मकस्त्वन्मयः पञ्चकोशबीजत्वात् । 'आनन्दो ब्रह्मेति व्यजानात्' इति श्रुतेः । त्वं ब्रह्ममयः, वाङ्मयचिन्मयानन्दमयैक्यात्मकत्वात्सदा सत्यपदात्मकत्वाच्च । एतेषां समुदायार्थैक्यभावप्रतिपादनार्थत्वान्महावाक्यात्मकमाह—त्वं सच्चिदानन्दाद्वितीयोऽसीति । सत् प्रकृतिभावदोषहीनत्वात् । चित् चैतन्यात्मकत्वात् । आनन्द आसमन्तात्त्र्यवस्थानन्दात्मकत्वात् । अद्वितीयः सच्चिदानन्दभेदशून्यत्वादिति । इदं महावाक्यं गौणं षोडशमहावाक्यप्रामाण्यात् । चत्वारि महावाक्यानि मुख्यानि तत्त्वमस्यादीनि केवलप्रयोगप्रतिपादनवेदान्तसीमाभूतत्वात् । अनन्तं ब्रह्मेतिप्रतिपादयन्नाह—त्वमिति । देहलीदीपन्यायवत्सत्यज्ञानोभयाभेदमयमुभयप्रकाशकतन्मध्यप्रतिपादनत्वात् । त्वं प्रत्यक्षं ब्रह्मासि, चिन्तामणिनामा चित्तप्रकाशकत्वात् । प्रत्यक्षं हृद्य-

त्वं ज्ञानमयो विज्ञानमयोऽसि ॥ ४ ॥ सर्वं जगदिदं त्वत्तो

---

वस्थितं त्वां पश्यामीति स्वानुभवप्रदर्शनात् । 'चिति स्मृत्याम्' इति धातुपाठात् । 'इदितो नुम्' इति पाणिनिसूत्राच्चिन्तायां स्मृत्यां मणिरिव तत्प्रकाशकः । सर्वहृद्यवस्थितं ब्रह्म त्वमेवेति भावः । एवं सत्यं ब्रह्म गुहायां निहितं प्रतिपादितम् । 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यच्च' इति श्रुतेः । 'सच्च त्यच्च तयोर्योगे सत्यं ब्रह्म' इति श्रुतेः । एवं ज्ञानं ब्रह्मेति प्रतिपादयन्नाह—त्वं ज्ञानमयः । सच्चिदानन्दाद्वितीयात्मकसत्यब्रह्मणोऽभिन्नः सदा निर्विकल्पात्मकत्वात्सदेकमयत्वात्सत्यब्रह्मणि सच्चिदानन्दाद्वितीयेषु स्वस्वरूपज्ञानप्रदत्वात् । ज्ञा अवबोधन इति धातुपाठात्स्वयं सर्वज्ञः । स्वस्य ज्ञातृभावात् । ज्ञानेन ज्ञायते सर्वं ज्ञानं केन न ज्ञायते ज्ञानात्परज्ञानाभावादिति । विज्ञानमयोऽसि सर्वज्ञभावं त्यक्त्वा स्वमहिम्नि स्थितोऽसि, केवलज्ञानब्रह्ममयत्वात् । 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वात्' । 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । अनन्तं ब्रह्म । सत्यज्ञानैक्यात्मकमात्मस्वरूपं हृदि तत्त्वमस्यात्मैकार्थप्रतिपादकमहावाक्यात्सत्यं त्वंपदार्थमयत्वात् तज्ज्ञानं तत्पदार्थमयत्वादनन्तमसिपदार्थमयस्त्रिविधपदार्थैक्यात्मकब्रह्मप्रतिपादनार्थत्वात् । निहितं गुहायां गुहा बुद्धिस्तस्यां निहितम्, हृद्यवस्थितबुद्धिपतित्वात् । पञ्चचित्तव्यापारहर्षविषादसमभावयुक्ततत्त्व्यापारसिद्धिप्रदसिद्धिपतित्वाद्गणेशो हृद्यवस्थितः । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्यनुभवैक्यात्मगणेशत्वात् । परमे व्योमन्निति दहरोपासनार्थं तदेव कथ्यते—'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम् । तद्वाव विजिज्ञासितव्यं स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते' 'एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः' इत्यादिश्रुतिभ्यः स्वहृद्याकाशस्थितत्वात् । अत्र त्वं प्रत्यक्षं ब्रह्मासीति प्रतिपादनाद्धृद्यवस्थितगणेशो ग्राह्यः । प्रत्यक्षं तत्त्वमसीति प्रथमं प्रतिपाद्य पुनः प्रत्यक्षं ब्रह्मासीति पुनरुक्तिनिवारणत्वात् । नच एवं सद्ब्रह्मादिवर्णनं पूर्णब्रह्मप्रतिपादकं 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतिप्रामाण्यादिति वाच्यम् । प्रत्यक्षं तत्त्वमसीत्यत्र मयट्प्रत्ययाभावात्संपूर्णं ब्रह्मात्र प्रतिपाद्य पुनस्त्वं वाङ्मयादिमयट्प्रत्यययुक्तत्वाद्गौणब्रह्मवर्णनमत्रैव मयड्ढीनयुक्तप्रतिपादनत्वात् ॥ इत्यध्यात्मप्रतिपादकश्चतुर्थः खण्डः ॥ ४ ॥ एवं हृद्यवस्थितं गणेशं प्रतिपाद्याऽव्याकृतब्रह्मात्मकं प्रतिपादयन्नाह—सर्वमिति । सर्वं जगदिदं त्वत्तो जायत इति । त्वत्तोऽव्याकृतात्मन इदं जगज्जायते । व्यवस्थामयव्याकृतत्वात् । तदेवोङ्कारात्मकगणेशप्रतिपादनत्वात् । गणेशतापिन्याम्—'ततश्चोमिति ध्वनिरभूत् स वै गजाकारोऽनिर्वचनीया सैव माया जगद्बीजमित्याह सैव प्रकृतिरिति

जायते ॥ सर्वं जगदिदं त्वत्तस्तिष्ठति ॥ सर्वं जगदिदं त्वयि लयमेष्यति ॥ सर्वं जगदिदं त्वयि प्रत्येति ॥ त्वं भूमिरापोऽनलोऽनिलो नभः ॥ त्वं चत्वारिवाक् पदानि ॥ ५ ॥ त्वं गुणत्रयातीतः ॥ त्वमवस्थात्रयातीतः ॥ त्वं देहत्रयातीतः ॥ त्वं कालत्रयातीतः ॥ त्वं मूलाधारस्थितोसि नित्यम् ॥ त्वं शक्तित्रया-

---

गणेश इति प्रधानमिति च मायाशबलमिति च' इति श्रुतेः । 'ओमित्येकाक्षरं ब्रह्मेदं सर्वं ब्रह्म' इति श्रुतेः । गाणेशे पार्वत्या तपः कृतं तस्यै वरदानार्थमागतो गणेशश्चोङ्कारात्मकः, तद्रूपधारकत्वात् । तद्यथा—'मध्ये नारायणमुखो दक्षिणे च शिवाननः । वामे ब्रह्ममुखोऽनन्ते पद्मासनगतो विभुः ॥' इति स्मृतेः । ब्रह्मविष्णुरुद्रात्मानोऽकारोकारमकाराः, कण्ठाधस्तदैक्यभावमयत्वात् । शैवे शिवेन शिरश्छेदः कृता शक्तिपुत्रस्य । जीवात्मकत्वात् गणेशाविर्भावहीनत्वाच्च । तत्र पुनर्गजमस्तकमानीय सजीवकरणे ब्रह्मविष्णुमहेशैरोङ्कारावाहनं यदा कृतं तदा गणेशाविर्भावदर्शनात् । देवीभागवतेऽप्येवं वर्णनत्वाद्गणेशस्य ओङ्कारजगदात्मकत्वात् । शिवपुराणेऽपि गणेशावतारवर्णन आवाहनदर्शनाच्छिवैक्यप्रतिपादनपुराणप्रतिज्ञारक्षणाच्च । न चैवं शिवविष्ण्वाद्य ओङ्कारात्मकास्तत्तन्माहात्म्यश्रुतिस्मृतिप्रतिपादनत्वादिति वाच्यम् । तामससात्त्विकादित्वस्वैकगुणमयः देहप्रचुरत्वात् । सर्वसारनिर्णयग्रन्थे मया प्रतिपादितमत्र न लिख्यते ग्रन्थबाहुल्यभयात् । तद्वत्सर्वं जगदिदं त्वत्तस्तिष्ठति स्वस्वकर्मानुकूलपालनभावधारकत्वात् । तद्वत्प्रलये त्वयि लयमेष्यति कल्पान्तमयत्वात् । तद्वत्सर्वं जगदिदं त्वयि प्रत्येति प्राकृतलये गुणसाम्यमयत्वात् । 'त्वय्येत्य सदेव अग्र आसीत्' इति श्रुतिप्रामाण्यात् त्वं भूमिरापोऽनलोऽनिलो नभः, स्थूलसूक्ष्मसमपञ्चभूतमयप्रणवत्वात् । 'अस्मात्मन आकाशः संभूतः' इति श्रुतेः । प्रणवविशिष्टात्मनः पञ्चभूतोत्पत्तिप्रतिपादनत्वात् त्वं चत्वारि वाक्पदानि । परा-पश्यन्ती-मध्यमा-वैखर्यश्चतस्रो वाचस्त्वच्छ्वाससंभवधर्माधर्मसमज्ञानबोधमयत्वात् । 'स यथार्द्रैधाग्नेरभ्याहतस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि' इति श्रुतेः प्रणवनिःश्वासमयवेदादित्वात् । 'ओङ्कारप्रभवा वेदाः' इति स्मृतेः ॥ इत्यधिदैवतवर्णनात्मकः पञ्चमः खण्डः ॥ ५ ॥ ॥ एवमव्याकृतमयं गणेशं प्रतिपाद्य सर्वजनमूलाधारस्थितिं प्रतिपादयन्नाह—त्वमिति ॥ त्वं गुणत्रयातीतो नानाजनदेहमूलाधारस्थितः संस्त्रिगुणदोषप्रवृत्तिप्रकाशज्ञानवर्जितो लिङ्गचक्रस्थराजस-नाभिचक्रस्थसात्त्विक-हृच्चक्रस्थतामसभावहीनत्वात् । त्रिगुणमूलाधारमयः । प्रणवमयत्वात् । त्वमवस्थात्रयातीतः जाग्रत्स्वप्नसुषुप्त्यवस्थाभावहीनत्वात् । त्वं देहत्रयातीतः स्थूलसूक्ष्मानन्ददेहषड्भावहीनत्वात् । त्वं कालत्रयातीतः उत्पत्तिस्थितिलयकालभावहीनत्वात् । त्वं मूलाधारस्थितोऽसि नित्यम् । गुदचक्रं प्रणवमयं तत्र

त्मकः ॥ त्वां योगिनो ध्यायन्ति नित्यम् ॥ त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्मभूर्भुवःस्वरोम् ॥ ६ ॥ गणादिं पूर्वमुच्चार्य वर्णादिं तदनन्तरम् ॥ अनुस्वारः परतरः ॥ अर्धेन्दुलसितम् ॥ तारेण ऋद्धम् ॥ एतत्तव मनुस्वरूपम् ॥ गकारः पूर्वरूपम् ॥

---

स्थितः सर्वचक्रमूलाधारमयत्वात् । मूलाधारसंज्ञाख्यं, सदाखण्डस्वानन्दघनत्वात् नित्यं त्रिगुणभाववर्जितत्वाच्च । त्वं शक्तित्रयात्मकः । जगदुत्पत्तिस्थितिलयत्रिविधशक्त्याधारात्मकत्वात् । त्वां योगिनो ध्यायन्ति नित्यम् । स्वात्मानन्दब्रह्मैक्यं समाधिना कृत्वा जीवन्मुक्ततया देहप्रारब्धभोगप्रतीक्षका योगिनस्त्रैगुण्यात्मकं त्वां नित्यममृतात्मकत्वाद्ध्यायन्ति स्वदेहमूलाधारचक्रस्थध्यानसुलभत्वात् । त्वं ब्रह्मा जगत्सृष्टिनिर्माणकर्ता रजोविशिष्टप्रवणत्वात् । त्वं विष्णुर्जगत्पालकः सत्त्वविशिष्टत्वात् । त्वं रुद्रो जगत्संहारकः तमोविशिष्टत्वात् । त्वमिन्द्रस्त्रिभुवनैश्वर्यभोक्ता परमैश्वर्यविशिष्टत्वात् । त्वमग्निः सर्वयज्ञभोक्ता सर्वदेवमुखतृप्तिकारकविशिष्टत्वात् । त्वं वायुः सर्वप्राणभूतसर्वजनप्राणप्रवेशस्थापनोत्क्रमणविशिष्टत्वात् । त्वं सूर्य उदयास्तादिवसरात्रिप्रकाशकः सर्वजनकर्मप्रवर्तकविशिष्टत्वात् । त्वं चन्द्रमा सर्वौषधिजीवनात्मकः जगदन्नमयविशिष्टत्वात् । ब्रह्मादिचन्द्रपर्यन्तानामष्टानां स्वस्वव्यापारप्रवर्तकात्मकः । श्रुतयो न लिख्यन्ते सर्वप्रसिद्धत्वात् । एतदन्तर्गतदेवदेवेश्वरा ज्ञातव्या अष्टविशिष्टगणेशप्रतिपादनत्वाद्विचारतदन्तर्गतसंभवाच्च । त्वं ब्रह्म सर्वजनबुद्धिस्थजीवमयः नानास्वभावप्रकृतिभोक्तृत्वनिविशिष्टत्वात् । भूः भूर्लोकस्त्वमेव तद्विशिष्टत्वात् । भुवः भुवर्लोकस्त्वमेव तद्विशिष्टत्वात् । स्वः स्वर्लोकस्त्वमेव तद्विशिष्टत्वात् । ॐ प्रणवस्त्वमेव सर्वमूलाधारचक्रस्थितविश्वचालकत्वात् । इत्यध्यात्मप्रकाशकः षष्ठः खण्डः ॥ ६ ॥ ॥ एवं साधिदैवताध्यात्मप्रकारयुक्ततत्त्वमस्यात्मकं प्रणवात्मकं च गणेशं प्रतिपाद्य तदनुभवप्रकाशकगणेशविद्यां प्रकटयन्नाह—गणादिमिति । पूर्वं प्रथमं गणादिं गकारं, गणशब्दादिभूतत्वात् उच्चार्य स्वमुखेनोच्चारणं कृत्वेति । तदनन्तरं वर्णादिः । वर्णा अक्षराणि तदादिरकारः, तस्य आदौ कथितत्वात् । तस्मादकारात्परतरोऽनुस्वारः । नकार आदिस्तस्मात्परोऽकारस्तस्मात्परोऽनुस्वारः परतरः । कीदृशोऽनुस्वारः अर्धेन्दुलसितः सानुनासिकत्वात् । एवमेकाक्षरमन्त्रात्मिकां विद्यां प्रतिपाद्य सशक्तिकमन्त्रं प्रकटयन्नाह—तारेणेति । तारेण प्रणवेन ऋद्धं युक्तम् । प्रणवयुक्तैकाक्षरमन्त्रत्वात् । तत्रादौ प्रणवमुच्चार्य पश्चादेकाक्षरोच्चारणम् । 'आदौ प्रकृतिमुच्चार्य पश्चात्पुरुष उच्यते' इति स्मृतेः । रुद्रयामले एकाक्षरगणेशकवचे मन्त्रोद्धारः कृतः । तत्र प्रणवस्य शक्तित्वप्रतिपादनात् । तद्यथा—'गं बीजं शक्तिरोङ्कारः सर्वकामार्थसिद्धये' इति । तव गणेशस्य मनुस्वरूपं मन्त्रस्वरूपमेतत् सर्वसिद्धिप्रदगणेशानुभवप्रकाशक-

अकारो मध्यमरूपम् ॥ अनुस्वारश्चान्त्यरूपम् ॥ बिन्दुरुत्तररूपम् ॥ नादः संधानम् ॥ संहिता संधिः ॥ सैषा गणेशविद्या ॥ गणक ऋषिः ॥ निचृद्गायत्रीछन्दः ॥ गणपतिर्देवता ॥ ॐगं गणपतये नमः ॥ ७ ॥ एकदन्ताय विद्महे वक्रतुण्डाय

---

सामर्थ्ययुक्तत्वात् । एवं 'गणादिं पूर्वमुच्चार्य' इत्यादि 'तारेण ऋद्धं' इत्यन्तेन संकेतश्रुतिवाक्यप्रतिपादितमन्त्रं जना न ज्ञास्यन्ति मन्दबुद्धित्वात् । तदर्थं स्वयमेव सुलभतया तदेवाह—गकार इति । पूर्वरूपं आदिप्रोक्तरूपं गकारः मध्यमरूपं अकारः अन्त्यरूपम् अनुस्वारः उत्तररूपं अनुस्वारोत्तररूपं बिन्दुः सानुनासिकात्मकत्वात् । तारशब्दस्तु न वर्ण्यते स्फुटत्वात् । एतेषां भिन्नानां गकारादिचतुर्णां सन्धानमेकीकरणसाधनं नादः, नादप्रेरितैकभावोच्चारणयोग्यसामर्थ्यात् । एतेषां नादप्रेरितानां सन्धिः संमीलनं संहिता यथाक्रमोच्चारणैक्यभावप्रकाशकत्वात् । या 'गणादिं पूर्वमुच्चार्य' इत्यादि 'तारेण ऋद्धं' इत्यन्तेन पूर्वं प्रतिपादिता सैषाऽधुना 'गकारः पूर्वरूपं' इत्यादि 'संहिता सन्धिः' इत्यन्तेन प्रतिपादितत्वात् । गणेशविद्या गणेशज्ञानप्रदा, मन्त्रात्मकगणेशमूर्तिमयजपस्य गणेशसन्तुष्टिकारकत्वात् । विद् ज्ञाने इति धातुसामर्थ्यात् एकाक्षरमन्त्रस्तत्त्वमस्यात्मकगणेशमयः प्रतिपादितः । यन्त्रस्थमन्त्रपूजनस्य सर्वसिद्धिप्रदत्वान्मन्त्रमयमूर्तेः सर्वशास्त्रप्रतिपादितत्वाच्च । तन्त्रोङ्कारयुक्त ओङ्कारशक्तिविहारजगन्मयप्रतिपादितत्वात् पूर्वोक्ततत्त्वमस्यात्मकोंऽकारात्मकद्विविधसामर्थ्ययुक्तत्वं मन्त्रस्य प्रतिपादितम् । तदुपासनस्य प्रत्यक्षगणेशसमत्वात् । गणकऋषिः । अत्रर्ष्यादिन्यासा मन्त्रशास्त्रोक्ता ग्राह्याः तस्य वेदोपाङ्गत्वात् ॥ ॥ तद्यथा ॐअस्यैकाक्षरगणपतिमन्त्रस्य गणक ऋषिः निचृद्गायत्रीछन्दः गणपतिर्देवता गं बीजम् ॐशक्तिः गणपतिप्रीत्यर्थं सकलाभीष्टसिद्ध्यर्थे च जपे विनियोगः ॥ गणकऋषये नमः शिरसि । निचृद्गायत्रीच्छन्दसे नमो मुखे । गणपतिदेवतायै नमो हृदये । गंबीजाय नमः गुह्ये । ॐशक्तये नमः पादयोः ॥ अथ षडङ्गन्यासः । ॐगां अङ्गुष्ठाभ्यां नमः । ॐगीं तर्जनीभ्यां नमः । ॐगूं मध्यमाभ्यां नमः । ॐगैं अनामिकाभ्यां नमः । ॐगौं कनिष्ठिकाभ्यां नमः । ॐगः करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः कर्तव्य इति । वक्ष्यमाणं ध्यानं कृत्वा मानसैः पञ्चोपचारैः पूजयेत् । तद्यथा । ॐलं पृथिव्यात्मने गणेशाय गन्धं समर्पयामि । ॐहं आकाशात्मने गणेशाय पुष्पं स० । ॐयं वाय्वात्मने गणेशाय धूपं स० । ॐरं तेजसात्मने गणेशाय दीपं स० । ॐवं अमृतात्मने गणेशाय नैवेद्यं समर्पयामि । इति पञ्चभूतबीजात्मकपञ्चोपचारार्पणं मानसी पूजा कथ्यते इति संक्षेपः । सर्वं मन्त्रशास्त्रोक्तविधिवत्कार्यं शीघ्रसिद्धिप्रदत्वात् ॥ इति गणेशविद्यात्मकार्थप्रतिपादकः सप्तमः खण्डः ॥ ७ ॥ ॥ एवं गणेशविद्यां प्रतिपाद्य गणेशगायत्रीमन्त्रं प्रकटयन्नाह—एकदन्तायेति । एकदन्ताय एकशब्दाख्या माया । दन्तशब्दाख्यो

धीमहि ॥ तन्नो दन्ती प्रचोदयात् ॥ ८ ॥ एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् ॥ रदं च वरदं हस्तैर्बिभ्राणं मूषक-

---

मायिकः तयोर्योग एकदन्तः तस्मै । विद्महे जानीमहे । सदा सर्वप्रदत्वात् । तदेव मौद्गले—'एकशब्दात्मिका माया तस्याः सर्वं समुद्भवम् । भ्रान्तिदं मोहदं पूर्णं नानाखेलात्मकं किल ॥ दन्तः सत्ताधरस्तत्र मायाचालक उच्यते । बिम्बेन मोहयुक्तश्च स्वयं स्वानन्दगो भवेत् ॥ माया भ्रान्तिभयः प्रोक्ता सत्ता चालक उच्यते । तयोर्योगे गणेशोऽयमेकदन्तः प्रकीर्तितः ॥' इति । वक्रतुण्डाय । जगत्सर्वजनसाधारणं मनोवाणीमयत्वात् । तस्माद्वक्रमात्मरूपं मनोवाणीहीनत्वात्तदेव मुखं यस्य स वक्रतुण्डो जगन्मयकण्ठाध आत्मात्मकमस्तकत्वात्तस्मै । तद्यथा मौद्गले—'बिम्बं मायायुतं वक्रं मोहितं सिद्धिबुद्धिदम् । तद्भावं हन्ति तुण्डेन तेनायं वक्रतुण्डकः ॥ माया सुखं मोहयुतं तस्माद्वक्रमिति स्मृतम् । परं ब्रह्म तयोर्योगे वक्रतुण्डोऽयमुच्यते ॥ कण्ठाधो मायया युक्तो मस्तकं ब्रह्मवाचकम् । वक्राख्यं तस्य विघ्नेश तेनायं वक्रतुण्डकः ॥' इति । धीमहि ध्यायेम इति । तन्नो दन्ती प्रचोदयात् । तद्ब्रह्मात्मको दन्ती दन्तोऽस्यास्तीति सर्वसत्तात्मकत्वात् । स्वभक्त्यै प्रचोदयात् प्रेरयतु बुद्धिपतित्वात् । अयं गायत्रीमन्त्रोऽपि सर्वसिद्धिप्रदायकः । गणेशः गायकं त्रायतीति व्युत्पत्तिबलात् ॥ इति गायत्रीमन्त्रप्रतिपादनात्मकोऽष्टमः खण्डः ॥ ८ ॥ ॥ एवमादौ नाममन्त्रं मध्य एकाक्षरमन्त्रमन्ते गायत्रीमन्त्रं च इति त्रिविधं मन्त्रं प्रतिपाद्य तद्ध्यानार्थमाह—एकदन्तमिति । एकदन्तं पूर्वोक्तार्थात्मकदक्षिणदन्तयुक्तम् । 'भग्नवामरद' इति स्मृतेः । चतुर्हस्तं चतुर्भुजयुक्तत्वात् । 'स्वर्गेषु देवताश्चायं पृथ्व्यां नरांस्तथाऽतले । असुरान्नागमुख्यांश्च स्थापयिष्यति बालकः ॥ तत्त्वानि चालयन्विप्रास्तस्मान्नाम्ना चतुर्भुजः । चतुर्णां विविधानां च स्थापकोऽयं प्रकीर्तितः ॥' इति स्मृतेः । दक्षिणोर्ध्वहस्तादारभ्य दक्षिणाधोहस्तपर्यन्तं पाशाङ्कुशदन्तवरदादि धारयति स्वभक्तरक्षणार्थत्वात् । 'पाशं मोहमयं तस्य स्वभक्तमोहनाशनम् । नियन्त्राख्यं तथा ब्रह्म अङ्कुशश्च महात्मनः ॥ दुष्टनाशकरं ब्रह्म दन्तः सर्वारिनाशकृत् । वरं सकामिकानां च कामदं ब्रह्म तत्स्मृतम् ॥' इति स्मृतेः । मूषकध्वजम् । सर्वान्तर्यामि सर्वजन्तुहृद्गतः सन् सर्वजन्तुकृद्भोगभोक्ता चोरो जन्त्वज्ञातसर्वस्वहारकत्वात् । जन्तुकृतपापपुण्यविवर्जितत्वात् । स एव गणेशसेवार्थं मूषको बभूव । मुष स्तेये इति धात्वर्थात् । तथा—'मूषकं व्यापकाख्यं च पश्यन्ति वाहनं परम् ॥ तेन मूषकवाहोऽयं वेदेषु कथितोऽभवत् । मुषस्तेये तथा धातुर्ज्ञातव्यस्तेयब्रह्मधृक् ॥ नामरूपात्मकं सर्वं तत्रासद्ब्रह्म वर्तते । नामरूपेषु ये भोगास्तेषां भोक्तृतया स्थितः ॥ भोगेषु भोगभोक्ता च ब्रह्माकारेण वर्तते । अहंकारयुतास्तं वै न जानन्ति विमोहिताः ॥ वयं भोक्तार एवं ते मानयन्ति विशेषतः । ईश्वरः सर्वभोक्ता च चोरवत्तत्र संस्थितः । तदेवं मूषकः प्रोक्तो मनुजानां प्रचालकः । मायया गूढरूपः स भोगान्भुङ्क्ते हि चोरवत् ॥ इति स्मृतिभ्यः । रक्तं रक्तवर्ण-

ध्वजम् ॥ रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् ॥ रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् ॥ भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् ॥ आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषा-

शरीरत्वात् । लम्बोदरम् स्वोदरे सर्वस्यापि प्रतिष्ठितत्वात् स्वस्य न कस्याप्युदरस्थत्वात् । स्वोदरोद्भवसर्वजगत्त्वात् स्वस्य न कस्याप्युदरभवत्वाच्च । तथाच 'लम्बोदरोऽथमेकश्च वेदे संकथितोऽभवत् । न वयं तादृशा वेदे लम्बोदरप्रवाचकाः ॥ तस्योदरात्समुत्पन्नं नानाविश्वं न संशयः । नानाब्रह्म तथेशश्च अन्ते तत्र स्थितोऽभवत् । मध्ये कलांशरूपेण क्रीडते गणनायकः । अतः सर्वादिपूज्यश्च सर्वपूज्यो बभूव ह ॥ सर्वेषां जनको माता तथा सर्वप्रदायकः । तत्र किं संशयं विप्राः कुरुथ ब्रह्मणस्पतौ ॥' इति स्मृतिभ्यः । शूर्पकर्णकम् । गणेशो योगिमुखोद्गतजनकर्णमार्गहृद्गतः सन् शूर्पवत्पापपुण्यरजो दूरीकरोति ब्रह्मप्राप्तिकारकत्वात् । तद्यथा—'रजोयुक्तं यथा धान्यं रजोहीनं करोति च । शूर्पं सर्वनराणां वै योग्यं भोजनकाम्यया ॥ तथा मायाविकारेण युक्तं ब्रह्म न लभ्यते । त्यक्त्वोपासनकं तस्य शूर्पकर्णस्य सुन्दरि ॥ शूर्पकर्णं समाश्रित्य त्यक्त्वा मलविकारकम् । ब्रह्मैव नरजातिस्थो भवेत्तेन तथा स्मृतः ॥ तेनायं शूर्पकर्णश्च वेदेषु कथितोऽभवत् । तं भजस्व विधानेन शान्तियुक्ता भविष्यसि ॥' इति स्मृतिभ्यः । रक्तवाससम् सदा रक्तवस्त्रप्रियत्वात् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितमिति रक्तवर्णप्रियत्वात् । मौद्गले पञ्चवर्णवरप्रदो गणेशो बभूव । तत्र रक्तरङ्गेण पुनस्तपः कृत्वा रक्तरङ्गप्रियः सदा कृतः स्ववरदानरक्षणार्थत्वात् रक्तवर्णप्रिय इति । भक्तानुकम्पिनम् । तत्र भक्तिर्गणेशैकतत्परा इहलोकपरलोकविषयेच्छाहीनात्मिका कायिकवाचिकमानसिकसांसर्गिकतदेकरसयुक्तत्वात् । तद्यथा संक्षेपतः—'इत्येवं नवधा भक्ती रसयुक्ता कृता मयि । क्षणमात्रं न सहते चित्तं मद्रसवर्जितम् ॥ तदा संपूर्णभक्तश्च जातो वै नाऽत्र संशयः । अहं मोहेन संयुक्तस्तत्र तिष्ठामि सर्वदा ॥' इति स्मृतेः । देवम्, सर्वत्र तत्तद्रूपेण क्रीडाकारकत्वात् । दिवु क्रीडायां इति धात्वर्थात् । जगत्कारणमनादित्वात्सर्वपूज्यादिपूज्यत्वात् । 'ज्येष्ठराजम्' इति श्रुतेस्तज्ज्येष्ठाभावात् । न चैवं नानावेदशाखापाठेषु कुत्रान्यदेवो ज्येष्ठराजस्तत्परज्येष्ठाभावादिति वाच्यम् । सर्वपूज्यादिपूज्यगणेशान्यहीनत्वात् ज्येष्ठादिपूज्यसर्वपूज्यसंप्रदायदर्शनात् अन्यत्र लिङ्गदैवतवद्गौणत्वाच्च । अच्युतम् स्वानन्दवासित्वात्कैलासवैकुण्ठादिलोकगुणमयनाशात्मकत्वाच्च । सर्वसारनिर्णयग्रन्थे मया लोकनिर्णये कथितमत्र न लिख्यते ग्रन्थबाहुल्यभयात् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् । प्रकृतिः सर्वमयी प्रकृष्टसर्वाकृतित्वात् । पुरुषः सदैकः । प्रकृतिमयपुरिशयत्वात्ताभ्यां परं प्रकृतिपुरुषैकात्मकत्वात् । सृष्ट्यादौ प्रकृतिपुरुषसृष्टेरादावाविर्भूतं तत्त्वमस्यात्मकशरीरत्वात् । एवं नरगजाभेदैकदन्तादिचिह्नयुक्तं यो नित्यं ध्यायति स योगी ब्रह्मैक्यात्मकत्वात् । 'योगश्चित्तवृत्तिनिरोधः' चित्तं पञ्चविधम् । क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तस्य

त्परम् ॥ एवं ध्यायति यो नित्यं स योगी योगिना वरः ॥ ९ ॥ नमो व्रातपतये नमो गणपतये नमः प्रथमपतये

---

भूमयः व्यासकृतभाष्ये प्रतिपादितत्वात्। तत्र नरेण यत्र चित्तं क्षिप्तं तत्र तदनुभवयुक्तं भवति तत्क्षिप्तम् सर्वमायामोहयुक्तजनहृत्स्थत्वात्। यत्र नरेण चित्तं क्षिप्तं तज्ज्ञानतया नानाज्ञानभ्रमधारकत्वान्मूढम् पिशाचतुल्यनरहृत्स्थत्वात्। मुमुक्षूणां चित्तं विक्षिप्तं संसारविषयांस्तिरस्कृत्य ब्रह्मपरं तदपि ब्रह्मानुभवहीनं विषयासक्तत्वाद्ब्रह्मानुभवसुखहीनत्वान्नानातपःपरत्वाच्च । अन्नप्राणाद्यव्याकृतपर्यन्तानुभवयुक्तमेकाग्रं चित्तं सर्वैक्यसमाधिसुखयुक्तत्वात्। सत्यं ज्ञानमनन्तं ब्रह्मानुभवसुखयुक्तं निरुद्धाख्यं सर्वैक्यभावहीनत्वाद्ब्रह्मपरत्वाच्च। 'मनसो वृत्तिहीनस्य ब्रह्माकारेण या स्थितिः। असंप्रज्ञातनामाऽसौ समाधिरभिधीयते॥' इति स्मृतेः । ततस्तत्त्वमस्यनुभवसुखयुक्तं निरोधभूमिहीनत्वाच्चित्तवृत्तिनिरोधात्मकं पञ्चभूमिवर्जितं ब्रह्मभूतप्रकाशकत्वात् त्वंपदतत्पदाऽसिपदविभागशून्यत्वाच्च । एवं चित्तं जित्वा योगी भवतीति ब्रह्मैक्यात्मकत्वात्। योगिनां शुकवामदेवादीनां वरो गणेशभक्तिपरायणत्वात् प्रत्यक्षतत्त्वमसिशरीरभूत्नवधाचित्तप्रवेशकायिकवाचिकमानसिकसांसर्गिकसदाब्रह्मतत्परचेष्टात्मकत्वात् वेदादिहृद्गतज्ञानजनोद्धारकत्वाच्च। न चैवम् योगिदर्शनस्पर्शनादिजनोद्धारकत्वात् प्रारब्धक्षयब्रह्मैक्यत्वात् श्रेष्ठतम इति वाच्यम् । नवधा चित्तशून्यवद्धारकत्वाद्वेदादिहृद्गतनानोपदेशहीनत्वात्प्रारब्धक्षये स्वयमेव ब्रह्मैक्यत्वाज्जनोद्धारकृतत्वाद्योगी श्रेष्ठः। गाणेशयोगी तु श्रेष्ठतमः पूर्वोक्तब्रह्मचेष्टापरत्वाज्जनोद्धारकत्वाच्च। न चैवं शिवविष्ण्वादिध्यानयुक्तोऽपि योगिनां वरः तत्तद्भक्तिपरायणत्वादिति वाच्यम्। तेषामथर्वशिरःसु तत्त्वमस्यादिमहावाक्यात्मकशरीराभावाद्योगिपदाभावाच्च। तत्र परमहंसा योगिनो गाणेशा भवन्ति योगिपदस्य परमहंसपरत्वात् एकगणेशाथर्वशीर्षप्रतिपादनत्वात् अन्यदेवाधिकारशून्यत्वात् । दण्डहीनाः परमहंसा ब्रह्मभूतास्तद्वन्दनं ब्रह्मशब्दाभिधं नारायणात्मकभावात् । 'दण्डग्रहणमात्रेण नरो नारायणो भवेत्' इति स्मृतेः । गाणेशयोगिवन्दनं गणेशशब्दाभिधं च परमहंसानां वरत्वात्॥ इति ध्यानात्मको नवमः खण्डः ॥ ९ ॥ ॥ एवं ध्यानं प्रतिपाद्य स्तुत्यर्थमाह—नम इति। व्रातपतये देवादिव्रातानां जीवानां पतित्वात्ते तुभ्यं नमः। गणपतये ब्रह्मविष्णुमहेशादिगणानां पतित्वात् ईश्वरत्वात् ते नमः । ब्रह्मविष्ण्वादिगणानामीशभूतमित्याह तद्गणेश इति । तत्परमित्याह। 'यमेतेनाप्नुवन्तीति' इति श्रुतेः। प्रथमपतये वर्णानां ब्राह्मणः प्रथमो मुख्यस्त्रिवर्णगुरुत्वात्। ब्राह्मणेषु योगी प्रथमो महावाक्यानुभवयुक्तत्वात्। एवं जनानामीश्वराणां ब्राह्मणानां च प्रथमाः श्रेष्ठास्तेषां पतिस्तदादिपूज्यत्वात्ते नमः। लम्बोदराय ते नमोऽस्तु। एकदन्ताय नमः। विघ्ननाशिने कालात्मकभयहारिणे नमः। अमृतात्मकपदप्रदत्वात्। तदेव कथ्यते। अभिनन्दनराज्ञेन्द्रभागहीनयज्ञारम्भः कृतः। तज्ज्ञात्वा कुपितेनेन्द्रेण कालमावाह्य तद्यज्ञभङ्गायाज्ञापितः स

**नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय वरदमूर्तये नमः ॥ १० ॥**

कालपुरुषस्तद्धर्मं ज्ञात्वा विघ्नासुरो बभूव । जन्ममृत्युमयं जगत्कालाधीनं त्रिलोकभ्रमणत्वात् । ब्रह्मानुभवयुक्तजनः कालं जित्वामृतमयो भवति तज्ज्ञानकारणं सत्कर्मसाधनेनान्तःकरणशुद्धिस्ततो ब्रह्मानुभवपात्रत्वात्तद्धर्मं ज्ञात्वा सत्कर्मनाशनार्थं विघ्नो बभूव । सत्कर्महीनं जगत् कालाधीनं सदा मलिनान्तःकरणयुक्तत्वात् । ततोऽभिनन्दनं हत्वा यत्र तत्र दृश्यादृश्यस्वरूपधृक्कालः सत्कर्मखण्डनं चकार । कालाज्ञानभावात्ततो भ्रान्ता वसिष्ठादयो ब्रह्माणं शरणं ययुः । तेनाज्ञप्ताः पार्श्वपुत्रं गणेशं तुष्टुवुः गणेशान्यदेवस्य कालनाशसामर्थ्याभावात् । ततो गणेशेन विघ्नासुरः पराजितः । स शरणं ययौ । तदा स्वाज्ञावशवर्तिनं विघ्नं चकार । विघ्नेन प्रार्थितो विघ्नराजाख्यो बभूव । तदादि गणेशादिपूजनहीनं तत्स्मरणहीनं यत्सत्कर्म तत्र विघ्नप्रादुर्भावः । एवं नियमं कृत्वा तं स्वसमीपे स्थापयामास । एवं स्कान्दे विनायकमाहात्म्ये मौद्गले च प्रतिपादितत्वात् वेदादिषु विघ्नो भगवानिति कथ्यते । कालमयत्वात् कालाधीनसृष्टिस्थितिलयत्वाच्च । ब्रह्मविष्णुमहेशा वयं ब्रह्माण इति मद्युक्ताः सन्तो वेदमार्गं त्यक्त्वा स्वेच्छाविहारिणो यदा भवन्ति तदा सविघ्ना असुरैः पराजिताः स्वेच्छाविहारभग्ना भवन्ति । पुनर्ब्रह्माभिमानं त्यक्त्वा गणेश एक एव स्वेच्छाचारी ब्रह्मशरीरत्वात् एवं ज्ञात्वा शरणं गच्छन्ति तदा स्वस्वसामर्थ्ययुक्ता असुरान्विजित्य स्वपदस्था ईश्वरा भवन्ति विघ्नाधीनत्वात् । विशेषेण जगत्सामर्थ्यं हन्तीति विघ्न इति व्युत्पत्तिबलाद्विघ्नसमं न किंचिदिति संक्षेपार्थः । तद्यथा 'भगवन्तौ विघ्नविनायकौ प्रीयेताम्' इति पुण्याहवाचनवचनत्वात् । स्कान्दे—'उक्त्वैवमाह्वयत्स्कन्दः शक्रस्तं कालरूपिणम् । य इदं मायया मोह्य कलयत्यखिलं जगत्' इति ॥ 'विघ्नरूपेण घोरेण स कालपुरुषो भुवि । गर्जनादखिलाँल्लोकान्कम्पयामास वेगवान् ॥' इति ॥ योगवासिष्ठे भृगुं प्रति कालवाक्यम् । तद्यथा । 'मा तप क्षपयाबुद्धे कल्पकालमहानलैः । यो न दग्धोऽस्मि मे तस्य किं त्वं शापेन धक्ष्यसि ॥ ब्रह्माण्डावलयो ग्रस्ता निगीर्णा रुद्रकोटयः । भुक्तानि विष्णुवृन्दानि क न शक्ता वयं मुने ॥' इति स्मृतिभिः । विघ्नं महाकालं हरति तस्मै नमः । 'अथ ह आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधारण एषां लोकानामसंभेदाय' इति श्रुतेः । लोकानामसंभेदाय विघ्नभयस्वमर्यादायुक्तलोकत्वात् । शिवसुताय । तद्यथा । गणेशेन सृष्टाः शिवादयस्तपश्चक्रुः । तत्रादौ शिवहृदि ब्रह्मानुभवो बभूव । समाधिक्रियाधिक्यात् । ततो हृदि गणेशं ददर्श संस्तुत्य प्रार्थनां चकार । त्वं मे पुत्रो भवस्वपितृतारकत्वात् । तदहं मायामोहभयहीनश्चरामि गणेशजनकत्वादिति । तदेव विनायकसंहितायां मयूरेशक्षेत्रमाहात्म्ये—'ध्याने मनसि मे जातः पुत्रस्त्वं पालय प्रभो । मम पुत्र इति ख्यातो लोकेऽस्मिन्भगवन्भव ॥' इत्यादिस्मृतिभ्यः ।

एतदथर्वशीर्षं योऽधीते ॥ स ब्रह्मभूयाय कल्पते ॥ स सर्वविघ्नैर्न बाध्यते ॥ स सर्वतः सुखमेधते ॥ स पञ्चमहापापात्प्रमुच्यते ॥ सायमधीयानो दिवसकृतं पापं नाशयति ॥ प्रातरधीयानो रात्रिकृतं पापं नाशयति ॥ सायं प्रातः प्रयुं-

---

त्रिगुणावतारैर्ब्रह्मविष्णुशिवाख्यैरवध्यासुरनाशनार्थं कलांशगणेशावतरणं सर्वत्र प्रसिद्धम् । तदवतारचरित्रज्ञापनार्थत्वादत्र शिवसुत इति कथितः वेदप्रामाण्येषु पुराणेषु नानावतारप्रतिपादनात् । न चैवं तपःप्रार्थितगणेशः शिवसुतः तत्र शिवः श्रेष्ठो गणेशजनकत्वादिति वाच्यम् । एवं शिवविष्ण्वाद्यवतारचरित्रत्वादनादिसंप्रदायत्वाच्च । विष्ण्वथर्वशीर्षे 'ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः' इति श्रुतेः । देवकीपुत्रत्वेन विष्णोर्न कनिष्ठत्वापत्तिः । भक्तवाञ्छितकृतत्वाद्भक्ताधीनदेवेशत्वाच्च ते नमः वरदमूर्तये । सर्वेश्वरजनवरदत्वात् । प्रत्यक्षं वरदमूर्तिः स्ववरदाभावाच्च । न चैवं शिवविष्ण्वादयो वरदमूर्तयः स्वस्वभक्तवरदत्वादिति वाच्यम् । शिवविष्ण्वादिवरदगणेशत्वाद्गणेशवरदाभावात् । ननु शिवपुराणे गणेशवरदः शिवः कथितः । 'सर्वादिपूज्यो भव' इति वचनादिति चेन्न । शिवपुत्रभावरक्षणार्थत्वात्, पितृदत्ताधिकारपरायणपुत्रत्वात् दशरथदत्तयुवराजाधिकारयुक्तरामचन्द्रवत्पुरातनसंप्रदायत्वात् ते नमः । 'व्रातपतय' इत्यारभ्य 'वरदमूर्तये नमः' इतिपर्यन्तमष्टनामनमनम् । तदन्तर्गतसर्वनामत्वात् । नाममन्त्रतत्त्वमस्यात्मकसत्यवादिभक्तरक्षणात्मकोङ्कारात्मकैकाक्षरविद्यागायत्रीध्यानस्तुतिप्रतिपादकमष्टमार्गप्रकाशकत्वादष्टाङ्गमिति ॥ इति स्तुतिप्रतिपादको दशमः खण्डः ॥ १० ॥

इत्यथर्वणऋषिप्रोक्तं गणेशाथर्वशीर्षं समाप्तम् ।

## अथ फलश्रुतिः ।

एवं स्तुतिं प्रतिपाद्य गणेशाथर्वशीर्षफलश्रुतिं प्रतिपादयन् ग्रन्थमाह । तत्रादौ गणेशाथर्वशीर्षाध्ययनफलप्रतिपादनार्थमाह—एतदिति । एतदथर्वशीर्षं योऽधीते स ब्रह्मभूयाय कल्पते । देहभृदपि ब्रह्मैव । तत्त्वमस्यात्मकगणेशाधीनसामर्थ्यात्तद्विश्वासयुक्तत्वात् । अन्यद्योऽनुभवकृत्सोऽप्यधीत इति कथ्यते । स देहभृद्ब्रह्मैव । योगित्वाच्च । स सर्वविघ्नैर्न बाध्यते । धर्मार्थकाममोक्षसाधनानामन्तरायात्मकविघ्नैर्न बाध्यते । साधनशीलाधीनत्वात् । स सर्वत्र सुखमेधते । नानालोकस्याधीनत्वान्नानाकार्यसुखयुक्तत्वाच्च । स पञ्चमहापापात्प्रमुच्यते । पापं पञ्चविधम् । हिंसाऽभक्ष्यभक्षणपरस्त्रीगमनस्तेयतत्संसर्गात्मकत्वात् । तत्र पञ्चमहापापादिति जातित्वादेकवचनम् । ब्रह्महत्यासुरापानगुरुतल्पगमनसुवर्णस्तेयतत्संसर्गयुक्तत्वात् । आदावेव सायमधीयान इति । गुरुमुखोद्गतं स्वकण्ठगं कृत्वाध्ययनकाल आदौ सायंकालप्राप्तत्वात् । तद्वत्प्रातरेव । सायंप्रातरधीयानः सर्व-

जानो अपापो भवति ॥ सर्वत्राधीयानोऽपविघ्नो भवति ॥ धर्ममर्थं कामं मोक्षं च विन्दति ॥ इदमथर्वशीर्षमशिष्याय न देयम् ॥ यो यदि मोहाद्दास्यति स पापीयान्भवति ॥ सहस्रावर्तनात् यं यं काममधीते तं तमनेन साधयेत् ॥ ११ ॥ अनेन गणपतिमभिषिञ्चति स वाग्मी भवति ॥ चतुर्थ्यामनश्नन् जपति स विद्यावान्भवति ॥ इत्यथर्वणवाक्यम् ॥ ब्रह्माद्यावरणं विद्यात् ॥ न बिभेति कदाचनेति ॥ १२ ॥ यो दूर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति ॥ यो लाजैर्यजति स यशोवान्भवति स मेधावान्भवति ॥ यो मोदकसहस्रेण यज-

---

दिवसरात्रिपापवर्जितत्वादपापो भवतीति । सर्वत्राधीयानोऽपविघ्नो भवति । नानाकार्यकृत्तत्तत्कार्याद्यधीतत्वात् । धर्ममर्थं कामं मोक्षं च विन्दतीति । इहलोकमनादृत्य परलोकार्थसत्कर्मपरायणत्वात् धर्मार्थी । इहलोकश्रेष्ठार्थसत्कर्मपरायणत्वात् अर्थार्थी । इहलोकपरलोकोद्भवभोगार्थसत्कर्मपरायणत्वात् कामार्थी । इहलोकपरलोकविरागयुक्तात्मप्राप्त्यर्थसत्कर्मपरायणत्वात् मोक्षार्थी च । एकैकपुरुषार्थी चतुःपुरुषार्थी वा य इदमधीते स तत्तल्लभते, गणेशस्य इच्छापूरकत्वात् । अशिष्याय यथार्थाथर्वशीर्षशिक्षाहीनाय न देयमिदं, ऋतसत्यवादिरक्षकगणेशत्वात् । यो यदि मोहाद्दास्यति । द्रव्यलोभाच्छुश्रूषालोभाद्विद्याविनिमयलोभादित्यादिनानामोहादिति सोऽतिपापी, यथार्थाऽथर्वशीर्षशुश्रूषणासुरभावगणेशपीडितत्वात् । अस्य सहस्रावर्तनाद्यं यं काममिच्छति तं तं प्राप्नुयात् । वीप्साया आदरार्थत्वात् ॥　　॥ इत्यध्ययनफलश्रुत्यात्मक एकादशः खण्डः ॥ ११ ॥　　॥ एवं अध्ययनफलश्रुतिं प्रतिपाद्य नानाप्रयोगार्थमाह—अनेनेति । प्रशस्तवागर्थ्यभिषेकं कुर्यादिति । चतुर्थ्यामनश्नञ्जपति यः स विद्यावान्भवति । प्रातरारभ्य सायंपर्यन्तं जपानुष्ठानपरत्वात् । इत्यथर्वणवचनत्वाद्यथार्थफलप्राप्तिरिति । ब्रह्मादीनां मायावरणं विद्यात् अतएव न बिभेति । ज्ञातावरणतन्मोहहीनत्वात् ॥ इति नानाप्रयोगफलश्रुत्यात्मको द्वादशः खण्डः ॥ १२ ॥　　॥ एवं भयहीनतां प्रतिपाद्य यजनार्थमाह—य इति । दूर्वाङ्कुरैर्यजति स कुबेरसमो भवति । कनकप्रियत्वात् । लाजैर्होमो यशःप्रदो मेधाप्रदश्च । तत्तत्प्रयोगप्रमाणत्वात् । यो मोदकसहस्रेण यजति, प्रतिखण्डं जुहुयात्प्रत्यर्चेवत्प्रमाणत्वात् । स वाञ्छितफलमवाप्नोति । नानाकार्यसिद्धिप्रदत्वात् । यः साज्यसमिद्भिर्यजति मन्त्रशास्त्रोक्तनानाकार्यप्रदनानासमिद्धोमप्रमाणत्वात् । स सर्वं लभते स सर्वं लभते । अत्र वीप्सादरप्रदर्शिनी । नानासमिद्धोमप्रियत्वात् । अत्र कुण्डवेदिदेवतास्थापनादिकं वैदिकतान्त्रिकमार्गोक्तवद्ग्राह्यम् । आहुतिगणनानियमः सर्वसाधारणत्वात् । अत्र जपानुष्ठानं मुख्यम् । यं यं काममधीते तं तमनेन साधयेत् एकानुष्ठानस्य सर्वकार्यप्रदत्वाद्वीप्साया आदरार्थत्वाच्च । न चैवं मोदकसहस्रहो

ति स वाञ्छितफलमवाप्नोति ॥ यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते ॥ १३ ॥ अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा सूर्यवर्चस्वी भवति ॥ सूर्यग्रहे महानद्यां प्रतिमासंनिधौ वा जप्त्वा सिद्धमन्त्रो भवति ॥ महाविघ्नात्प्रमुच्यते ॥ महादोषात्प्रमुच्यते ॥ महापापात्प्रमुच्यते ॥ स सर्वविद्भवति स सर्वविद्भवति य एवं वेद ॥ १४ ॥ इत्युपनिषत् ॥ तन्मामवतु ॥ तद्वक्तारमवतु ॥ अवतु मामवतु वक्तारमवतु वक्तारं ॥ ॐशान्तिः शान्तिः शान्तिः ॥ इत्यथर्वणवेदोपषनित्सु गणेशाथर्वशीर्षं समाप्तम् ॥

---

मसाज्यसमिद्धोमौ मुख्यौ । वाञ्छितप्रदः 'सर्वं लभते' इति वीप्सादरप्रमाणत्वादिति वाच्यम् । मोदकहोमस्य वीप्साहीनत्वात् । साज्यसमिद्धोमो वीप्सादरयुक्तोऽपि नानाकार्यप्रदनानासमिद्धोमानुष्ठानपरत्वात् । अत्र सहस्रावर्तनात्मकं पुरश्चरणम् । सहस्रावर्तनाद्यं यं काममधीत इति मोदकसहस्रेण यजतीति प्रमाणात् ॥ इति होमात्मकस्त्रयोदशः खण्डः ॥ १३ ॥ ॥ अथान्यप्रयोगार्थमाह—अष्टाविति । सम्यक् ग्राहयित्वा, यथार्थाथर्वशीर्षगणेशैकतत्परकारयितृत्वात् । सूर्यवर्चस्वी भवति सूर्यवत्सर्वज्ञानप्रकाशयुक्तत्वात् । गणेशज्ञानान्तर्गतनानावेदान्तप्रतिपाद्यज्ञानत्वात् । सूर्यग्रहे महानद्यां ब्रह्मकमण्डलुभागीरथीयमुनासरस्वतीनर्मदादीनां कस्याश्चिन्नद्यास्तीरे महाघनाशकत्वादनन्तगुणाधिकसत्कर्मफलप्राप्तिकारकत्वात् । प्रतिमासंनिधौ मयूरेश्वरादिमहाक्षेत्रस्थगणेशप्रतिमासंनिधौ वा जप्त्वा सिद्धमन्त्रो भवति । मन्त्रोक्तसिद्धिसामर्थ्ययुक्तत्वात् । अथर्वशीर्षात्मकमन्त्रजपो मालामन्त्रप्रामाण्यत्वात् । तज्जप्त्वाथर्वशीर्षोक्तज्ञानवानेकाक्षरविद्यासिद्धसामर्थ्यवान्भवतीति । महाविघ्नात्कालभयात्प्रमुच्यते । अथर्वशीर्षोपासनाया अमृतमयत्वात् । महादोषान्मायाविकारात्मकदोषात् मायाविकारपरदोषाभावात् । महाप्रत्यवायाज्जीवन्मुक्तविषयासक्तयुक्तप्रत्यवायात् । योगस्थित्यभावात् । स सर्वविद्भवति । गणेशज्ञानान्तार्गतसर्वज्ञानत्वात् । 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वꣳ विदितं भवति' इति श्रुतेः । अथर्वशीर्षसमाप्तिज्ञापनार्थं वीप्सा वेदसंप्रदायत्वात् । य एवं वेद पूर्वोक्तयथार्थज्ञानयुक्तत्वात् ॥ इत्यथर्वणवेदोपनिषत्सु अन्यप्रयोगात्मकश्चतुर्दशः खण्डः ॥ १४ ॥

॥ इति गणेशाथर्वशीर्षभाष्यं समाप्तम् ॥

# निर्णयसागरस्थविक्रेयसंस्कृतपुस्तकानि ।

मू० रु. मा. व्य.

**आचाररत्नम्—आह्निकग्रन्थः**—काशीक्षेत्रमण्डनायमाननारायणभट्टपौत्रो लक्ष्मणभट्ट इदं ग्रन्थरत्नमरीरचत् । अत्र चारुणोदयादाद्वितीयाह्नःसूर्योदयं नित्याचरणीयानां सर्वेषां ब्राह्मकर्मणां सविस्तरमत्यपूर्वतया विशदीकरणं कृतमस्तीत्येव न किंतु प्रत्यहं कचिन्महिलाकर्तृकाणां प्रातरादिसंमार्जनदेहल्याद्यनुलेपनरङ्गवल्लीकरणादीनामपि सप्रमाणं स्पष्टीकरणमस्ति । १ ८=

**कुण्डरत्नावली—व्याख्यासहिता**—कुण्डानां वेदीनां च ६४ आकृतिसंख्या। कुण्डानां ज्ञानाय सर्वोत्तमो ग्रन्थः। अत्र वृत्तकरणात्सूत्रपातनेन साध्या कुण्डवेदीप्रकृतिः सूत्रमार्जनेन सिद्धा सेत्युभयविधाकृतयः प्रयत्नेन द्रव्यव्ययेन च निर्माय तत्रतत्र यथा सर्वेषां यथावज्ज्ञानं स्यादेवं विन्यस्ताः सन्ति । ... ... १। ८=

**प्रयोगपारिजातस्य—नृसिंहीयस्य—प्रथमं षोडशसंस्कारकाण्डम्** । प्रयोगपारिजाताख्योऽयं प्राचीनो महानिबन्ध आश्वलायनीयाखिलयाज्ञिकग्रन्थेषु मूर्धन्यत्वेन वरीवर्ति । संप्रति सुप्रसिद्धेषु धर्मशास्त्रनिबन्धेषु याज्ञिकनिबन्धेषु चायं पारिजातः प्रायस्तत्रतत्र प्रामाण्येन संगृहीतो दरीदृश्यते । अत्रत्याः सर्वे निर्णया मुहूर्तदिनशुद्ध्यादिनिर्णयाश्च अखिलशाखीयोपयुक्ताः सन्ति । अत्र सर्वस्मिन्नपि प्रयोगोपन्यासे पूर्वं तच्छास्त्रार्थनिर्णयं, अनन्तरं तद्विषयिणीः कारिकाः, गृह्यसूत्रभागं, नारायणीयां वृत्तिं, तत्र संकुचितसूत्रांशे गृह्यपरिशिष्टं, आश्वलायनकारिकाः, शौनककारिकाश्चोपन्यस्य सर्वेषां परस्परविप्रतिपत्तिं मार्जयित्वा ततः तत्प्रयोगवर्तिनां श्रौतानां सौत्राणां च मन्त्राणां यथावदर्थं ( निरूप्य ) सर्वे प्रयोगा उपक्लृप्ताः सन्ति । तेन सर्वसंग्राह्योऽयं ग्रन्थः । यद्यप्यस्य प्रकरणानि बहूनि सन्तीति ग्रन्थकृदनुक्रमाज्ज्ञायतेऽथाप्यस्माभिः **पाकसंस्थाकाण्डं श्राद्धकाण्डसहितं २ आह्निककाण्डं ३ च सविस्तरं लब्धं मुद्रणावस्थायां विद्यते** तच्च स्वल्पेनैव कालेन प्रसिद्धं स्यात् । ... ... ४ ०॥०

**प्रयोगरत्नं—नारायणभट्टी—उत्तरनारायणभट्टी—अंत्येष्टिश्च । ( समन्त्रकप्रयोगाः । अत्र पाकसंस्थोपकारिण्यः २६ यज्ञपात्राकृतयश्च संति । )** ... ... २ ०।०

**पाण्डुरङ्ग जावजी,**

निर्णयसागराख्यमुद्रणयन्त्रालयाध्यक्षः, मुंबई.